67 [भगवता प्रमथगणसृष्टिः]

इत्येवं प्रार्थितः शम्भुः ब्रह्मणा विश्वयोनिना ।[1]
ससर्जात्मसमप्रख्यान्[2] सर्वगान्[3]सर्वशक्तिमान् ॥२५॥

68

प्रबोधपरमानन्दपरिवाहितमानसान् ।[4]
प्रमथान् विश्वनिर्माणप्रलयापादन[5]क्षमान् ॥२६॥

69 [तेषु रेणुकादारुकयोः अत्यन्तभगवत्प्रियत्वम्]

तेषु प्रमथवर्गेषु सृष्टेषु परमात्मना ।
रेणुको दारुकश्चेति द्वावभूतां शिवप्रियौ ॥२७॥

---

अथ—

"प्रजाः सृजेति निर्दिष्टः चन्द्रमौलिर्विरिञ्चिता ।
ससर्ज मनसा रुद्रान् आत्मतुल्यान् महेश्वरान् ।
नीलकण्ठान् त्रिनेत्रांश्च जटामुकुटमण्डितान् ॥

इति आदित्यपुराणवचनानुसारेण सृष्टवान् इत्याह—

स्पष्टम् ॥२५॥

स्पष्टम् ॥२६॥

स्पष्टम् ॥२७॥

---

1 विश्वयोनिना—समस्तजगत्सृष्टिकारणभूतेन ।
2 आत्मसमप्रख्यान्-स्वान्यूनतेजस्कान् ]
3 सर्वगान्—सर्वव्यापनसमर्थान् । अत्र सर्वज्ञान् इत्यपि पाठः ।
4 प्रकृष्टे ज्ञाने, तत्फलीभूतपरमानन्दनुभवे च सहजप्रसरणशक्तमनो बल-युतान् ।
5 आपादनं—सम्पादनम् । करणमिति यावत् । क्षमाः=समर्थाः ।

70 [दारुकरेणुकयोर्महिमा]

सर्वविद्याविशेषज्ञौ सर्वकार्यविचक्षणौ ।
मायामलविनिर्मुक्तौ महिमातिशयोज्ज्वलौ ॥ ॥२८॥

71

आत्मानन्दपरिस्फूर्तिरसास्वादनलम्पटौ ।
शिवतत्त्वपरिज्ञान तिरस्कृतभवामयौ[1] ॥२९॥

72

नानापथमहाशैवतन्त्रनिर्वाहतत्परौ[2] ।
वेदान्तसारसर्वस्वविवेचनविचक्षणौ ॥३०॥

73 [तयोः द्वारपालाधिकारप्रदानम्]

नित्यसिद्धौ निरातङ्कौ[3] निरङ्कुशपराक्रमौ ।
तादृशौ तौ महाभागौ संवीक्ष्य परमेश्वरः ॥३१॥

---

अथ तद्गणेश्वरयोः माहात्म्यं पञ्चभिः श्लोकैः प्रकटयति—

मायामलविनिर्मुक्तौ मायाशक्तिपरिकल्पिताऽऽणवादिमलत्रयसम्बन्धरहितौ इत्यर्थः ॥२८॥

स्पष्टम् ॥२७॥

स्पष्टम् ॥३०॥

नित्यसिद्धौ नित्यभूतसिद्धिमन्तौ । स्पष्टमन्यत् ॥२९॥

---

1 भावमयः– संसाररूपो रोगः ।

2 बहुविधैर्मार्गैः संयुक्तस्य वीरशैवसिद्धान्तस्य निरर्गलप्रचारे स्थापने च आसक्तौ इत्यर्थः ।

3 आजन्मसिद्धियुतौ ।

74

समर्थौ सर्वकार्येषु विश्वासं पर[1]माश्रितौ ।
अन्तःपुरद्वारपालौ निर्ममे[2] नियतौ[3] विभुः ॥३२॥

75 [तयोः शिवसेवानिरतत्वम्]

गणेश्वरौ रेणुकदारुकावुभौ विश्वासभूतौ नवचन्द्रमौलेः ।
अन्तःपुरद्वारगतौ सदा तौ वितेनतुः[4] विश्वपतेस्तु सेवाम् ॥३२॥

इति श्रीसिद्धान्तशिखामणौ रेणुकादरुकावतरणं नाम
द्वितीयः परिच्छेदः

---

नियतौ शुद्धात्मानौ । एवंरूपरेणुकदारुकौ विभुः स्वतंत्रः परमेश्वरः अन्तःपुरद्वारपालौ मिर्ममे निर्मितवान् इयर्थः ॥३२॥

अथ तौ रेणुकदारुकौ शिवसेवां चक्रतुः इत्याह—

स्पष्टम् ॥३३॥

इति श्रीमत्पदवाक्यप्रमाणपारावारधुरीण
श्रीमरितोण्टदार्येण विरचितायां
तत्त्वप्रदीपिकाख्यायां
सिद्धान्तशिरोमणिव्याख्यायां
रेणुकदारुकावतरणं नाम
द्वितीयः परिच्छेदः

---

1 परं विश्वासं–महाविश्वासम् ।
2 नियोजयामासेत्यर्थः ।
3 शुद्धात्मनौ–निष्कल्मषमनोवृत्तिसम्पन्नौ ।
4 कुर्वन्तौ आस्ताम् इति यावत् ।

॥ श्री शिवाय नमः ॥

# सिद्धान्तशिखामणिः

## तृतीयः परिच्छेदः

## रेणुकस्य भूलोकावगतिः

77 [कैलासवर्णनम्]

कदाचिदथ कैलासे कलधौतशिलामये ।
गन्धर्ववामनयनाक्रीडामौक्तिकदर्पणे ॥१॥

78

मन्दारबकुलाशोक[1]माकन्दप्रायभूरुहे ।
मल्लीमरन्दनिष्यन्दपानपीनमधुव्रते ॥२॥

---

76 [परिच्छेदावतरणम्]

अथात्र शिवयोगिनो रेणुकस्य भूलोकावतरणप्रसङ्गकथनार्थं प्रथमं अष्टभिः श्लोकैः कैलासवर्णनं करोति—

अथ रेणुकावतरणानन्तरं कदाचित् रजतमयपाषाणप्रदेशे गन्धर्ववनिताक्रीडायाः मौक्तिकदर्पणे ॥१॥

मन्दारमाकन्दादिनानावृक्षवति मल्लिकाकुसुममकरन्दस्रवणपानपरिपुष्टभ्रमरे ॥२॥

---

[1] माकन्दः चूतवृक्षः ।

79

कुङ्कुमस्तबकामोदकूलङ्कषहरिन्मुखे ।
कलकण्ठकुलालापकन्दलद्रागबन्धुरे ॥३॥

80

किन्नरीगीतमाधुर्यपरिवाहितगह्वरे ।
सानन्दवरयोगीन्द्रवृन्दालङ्कृतकन्दरे ॥४॥

81

हेमारविन्दकलिकासुगन्धिरसमानसे ।
शातकुम्भमयस्तम्भशान्तोत्तुङ्गविराजिते ॥५॥

82

माणिक्यदीपकलिकामरीचिद्योतितान्तरे ।
द्वारतोरणसंरूढ[1]शङ्खपद्मनिधिद्वये ॥६॥

---

कुङ्कुमकुसुमगुच्छामोदभरितकूलस्पृशन्नदीप्रवाहवति कोकिलसमूहरवबाहुल्योद्भवपञ्चमस्वरमनोहरे ॥३॥

किन्नरस्त्रीगीतमाधुर्यप्रवहितगुहाप्रदेशे सानन्दगणेशमुख्यशिवयोगिसमूहालङ्कृतप्रदेशभागवति ॥४॥

हेमारविन्दकलिकामोदरसभरितमानससरोवरे स्वर्णमयस्तम्भशतौन्नत्यप्रकाशमाने ॥५॥

मणिप्रदीपकलिकाकारशिखामयूखप्रकाशितान्तःपुरे द्वारतोरणस्तम्भसंलग्नशङ्खपद्मनिधिद्वये ॥६॥

---

1 महापद्मश्चपद्मश्च शङ्खो मकरकच्छपौ ।
मुकुन्दनीलाश्च वरश्च निधयो नव । इत्युक्तनवनिधिषु निधिद्वयं शङ्खपद्मश्चेति ॥

83

मुक्तातारकितोदारवितानाम्बरमण्डिते ।
स्पर्शलक्षितवैडूर्यमयभित्तिपरम्परे ॥७॥

84

सञ्चरत्प्रमथश्रेणीपदवाचालनूपुरे ।
प्रवालवलभी[1]शृङ्गशृङ्गारमणिमण्टपे ॥८॥

85

वन्दारुदेवमुकुटमन्दाररसवासितम् ।
रत्नसिंहासनं दिव्यं अध्यस्तं परमेश्वरम् ॥९॥

86 [परमेश्वरवर्णनम्]

तमास्थानगतं देवं सर्वलोकमहेश्वरम् ।
त्रय्यन्तकमलारण्यविहारकलहंसकम् ॥१०॥

---

मुक्तामणिरचितनक्षत्रवन्महावितानपटालङ्कृते स्पर्शवेद्युपलक्षितवैडूर्य-रत्नमयभित्तिश्रेणिमति ॥७॥

सञ्चरत्प्रमथपादप्रदेशकूजत्कटके प्रवालवलभिन्मुख्यशृङ्गारमणि-मण्डपे ॥८।

अथ सिंहासनमध्यस्थितं परमेश्वरं पञ्चदशभिः श्लोकैः वर्णयति— नमनशीलत्रयस्त्रिंशत्कोटिदेवतामुकुटकल्पप्रसूनरसमनोहरं[2] नवरत्नमयसिंहासनं तन्मण्टपमध्ये भाति ।

---

1 'गोपानसी तु वलभी छादने वक्रदारुणि' इत्यमरः ।

2 तत्परिमळेन मनो हरतीति यावत् ।

87

उदारगुणमोङ्कारशुक्तिकापुटमौक्तिकम् ।
सर्वमङ्गलसौभाग्यसमुदायनिकेतनम् ॥११॥

88

संसारविषमूर्च्छालुजीवसञ्जीवनौषधम् ।
नित्यप्रकाशनैर्मल्यं कैवल्यसुरपादपम् ॥१२॥

89

अनन्तपरमानन्दमकरन्दमधुव्रतम् ।
आत्मशक्तिलतापुष्यत्[1] त्रिलोकीपुष्पकोरकम् ॥१३॥

---

तत्र विद्यमानः परमेश्वरः कीदृशः ? इत्यत्राह—क्रीडाशीलः[2], सर्वलोकेशः, वेदान्तमयकमलसमूह[3]विहारराजहंसः ॥१०॥

त्यागशीलः, ओङ्कारशुक्तिकापुटमौक्तिकः, सर्वमङ्गलसौभाग्यसमूहस्थानभूतः ॥११॥

संसारविषमूर्च्छितजीवसञ्जीवनौषधः, स्वप्रकाशेनैव निर्मलः परमुक्ति[4]प्रदानकल्पद्रुः ॥१२॥

अपारपरमानन्दरसास्वादनमधुव्रतः, स्वसमवेतशक्तिकल्पलतापुष्यल्लोकत्रयकुसुमकोरकः ॥१३॥

---

1 पुष्यत्=वृद्धिं प्राप्नुवत् ।
2 दिवुक्रीडाविजिगीषेत्यादिना क्रीडार्थे देवशब्दः मूले प्रयुक्तः इति भावः ।
3 मूले अरण्यपदं समूहार्थे प्रयुक्तमिति भावः ।
4 कैवल्यरूपमुक्तेरेव सर्वोत्कृष्टत्वमित्यभिप्रायेण एवं व्याख्या ।

90

ब्रह्माण्डकुण्डिकाषण्ड[1]पिण्डीकरणपण्डितम् ।
समस्तदेवताचक्रचक्रवर्तिपदे स्थितम् ॥१४॥

91

चन्द्रबिम्बायुतच्छायादायादद्युतिविग्रहम् ।
माणिक्यमुकुटज्योतिर्मञ्जरीपिञ्जराम्बरम् ॥१५॥

92

चूडालं सोमकलया सुकुमारबिसाभया ।
कल्याणपुष्पकलिकाकर्णपूरमनोहरम् ॥१६॥

93

मुक्तावलयसम्बद्धमुण्डमालाविराजितम् ।
पर्याप्तचन्द्रसौन्दर्यपरिपन्थि[2]मुखश्रियम् ॥१७॥

---

ब्रह्माण्डसमूहलोलीकरणप्रवीणः, नारायणादिसकलदेवतासमूहचक्रवर्ती ॥१४॥

चन्द्रायुतप्रभास्पर्धमानतेजाः, मुकुटगतनवरत्नज्योतिर्मञ्जरीविचित्रा[3]म्बरः ॥१५॥

कोमलकन्दाभसोमकलाशिरोभूषणः, परममङ्गलसुमकुड्मलकर्णाभरणमनोहरः ॥१६॥

मुक्ताप्रकरवलितमुण्डमालाविराजितः, पूर्णचन्द्रसौन्दर्यपरिपन्थिमुखश्रीः ॥१७॥

---

1 कुण्डिकाषण्डः–भाण्डसमूहः ।
2 परिपन्थिपदं अन्ततः सदृशपरमितिबोध्यम् ।
3 मूले पिञ्जिरपदं विचित्रवर्णपरिमिति भावः ।

4†

94

प्रातस्सम्फुल्लकमलपरियाय[1] त्रिलोचनम् ।
मन्दस्मितमितालापमधुराधरपल्लवम् ॥१८॥

95

गण्डमण्डलपर्यन्तक्रीडन्मकरकुण्डलम् ।
कालिम्ना कालकूटस्य कण्ठनाले कलङ्कितम् ॥१९॥

96

मणिकङ्कणकेयूरमरीचिकरपल्लवैः
चतुर्भिः संविराजन्तं बाहुमन्दारशाखिभिः ॥२०॥[2]

97

गौरीपयोधराश्लेषकृतार्थभुजमध्यमम् ।[3]
सुवर्णब्रह्मसूत्राङ्कसूक्ष्मकौशेयवाससम् ॥२१॥

---

प्रातःप्रफुल्लकमलपर्यायत्रिलोचनः, मन्दस्मितपरिमितवचोविलासमनोहराधरपल्लवः ॥१८॥

कपालाभोगपर्यन्तचलन्मकरकुण्डलः कालकूटकालिम्ना कलङ्कितकण्ठनालः ॥१९॥

मणिमयकङ्कणकेयूरप्रकाशमानकरपल्लवचतुष्कः, बाहुकल्पद्रुमभासमानः ॥२०॥

उमापयोधरालिङ्गनकृतार्थवक्षःस्थलः, कनकमयब्रह्मसूत्राङ्कितः, अतिसूक्ष्मदुकूलाम्बरः ॥२१॥

---

1 पर्यायपदस्थाने छन्दोऽर्थे परियायपदं प्रयुक्तम् । तच्च सादृश्यार्थे पर्यवस्यति ।

3 सकलेष्टार्थप्रदातृत्वात् बाहूनां कल्पवृक्षसाम्यम् ।

3 भुजयोः मध्यमः भाग वक्षःस्थलप्रदेश इति भावः ।

98

नाभिस्थानावलम्बिन्या नवमौक्तिकमालया ।
गङ्गयेव कृताश्लेषं मौलिभागावतीर्णया ॥२२॥

99

पदेन मणिमञ्जीरप्रभापल्लवितश्रिया ।
चन्द्रवत् स्फाटिकं पीठं समावृत्य स्थितं पुरः ॥२३॥

100

वामपार्श्वनिवासिन्या मङ्गलप्रियवेषया ।
समस्तलोकनिर्माणसमवायस्वरूपया ॥२४॥

101 [पार्वतीवर्णनम्]

इच्छाज्ञानक्रियारूपबहुशक्तिविलासया ।
विद्यातत्त्वप्रकाशिन्या विनाभावविहीनया ॥२५॥

---

नाभिपर्यन्तनवमौक्तिकमालया मस्तकावतीर्णया गङ्गयेव कृतालिङ्गनः ॥२२॥

मणिमयनूपुरप्रकाशपल्लवितश्रिया पादेन सिंहासनस्य पुरतः चन्द्रकान्तमयफलकमावृत्य वर्तमानश्च इत्यर्थः ॥२३॥

एवं महेश्वरं वर्णयित्वा तद्वामाङ्कसंस्थितां भवानीं त्रयोदशसूत्रैः वर्णयति—तद्वामपार्श्ववर्तिनी माङ्गल्येन आसेचनक[1]रूपवती सकललोकसृष्टौ उपादानकारणीभूता ।[2]

---

1 तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात् इत्यमरः :

2 कारणं हि द्विविधं उपादानं उपादानकारणं निमित्त कारणं चेति । तत्र समवायिकारणं असमवायिकारणं च उपदानकारणगोष्ठ्यां प्रवि । कर्त्रादिकं तु निमित्तकारणम् । अत्र च शक्तिशक्तिमतोरभेदाभिप्रायेणैव मुक्तम् ।

102

संसारविषकान्तारदाहदावाग्निलेखया ।[1]
धम्मिल्ल[2]मल्लिकामोदझङ्कुर्वद्भृङ्गमालया ।।२६।।

103

सम्पूर्णचन्द्रसौभाग्यसंवादिमुखपद्मया ।
नासामौक्तिकलावण्यनासीर[3]स्मितशोभया ।।२७।।

104

मणिताटङ्करङ्गान्तर्वलितापाङ्गलीलया ।
नेत्रद्वितयसौन्दर्यनिन्दितेन्दीवरत्विषा ।।२८।।

---

इच्छाज्ञानक्रियादिबहुशक्तिविलासवती, आत्मविद्या[4]प्रकाशिनी शिवेनाविनाभूता ।।२५।।

संसारविषविपिनदाहदावाग्निराज़िः, धम्मिल्लमल्लिकामोदझङ्कुर्वदलिमालिका ।।२६।।

पूर्णचन्द्रकान्तिविवदन्मुखपङ्कजा, नासामौक्तिकलावण्यबाहुल्यच्छुरितमन्दस्मितकान्तिमती ।।२७।।

रत्नखचितताटङ्करङ्गमण्टपमध्यलास्यमानापाङ्गलीलानयनद्वयसौन्दर्यनिन्दितेन्दीवरश्रीः।।२८।।

---

1 लेखा रेखा राजिः पङ्क्तिः इति पर्यायाः ।

2 धम्मिल्लं-शिरसि धृतमिति यावत् ।

3 नासीरं दर्पं ऊष्मणी इति कोशः ।

4 'सा विद्या सा विमुक्तये' इत्युक्तत्वात् मुक्तिमार्गप्रदर्शिन्या एव मुख्यं विद्यात्वमित्यभिप्रायेण आत्मविद्येति व्याख्यातम् ।

105

कुसुमायुधकोदण्डकुटिलभ्रूविलासया ।
बन्धूककुसुमच्छायाबन्धुभूताधरश्रिया ॥२९॥

106

कण्ठनालजितानङ्गकम्बुबिब्बोक[1]सम्पदा ।
बाहुद्वितयसौभाग्यवञ्चितोत्पलमालया ॥३०॥

107

स्थिरयौवनलावण्यशृङ्गारितशरीरया ।
अत्यन्तकठिनोत्तुङ्गपीवरस्तनभारया ॥३१॥

108

मृणालवल्लरीतन्तुबन्धुभूतावलग्नया ।
शृङ्गारतटिनीतुङ्गपुलिनश्रोणिभारया ॥३२॥

---

मारकार्मुककुटिलभ्रूलताविलासवती, बन्धूक[2]कुसुमकान्तिबन्धुराधरश्रीः ॥२९॥

कण्ठनालजितानङ्गजयशङ्खनिनादवती, बाहुद्वितयसौभाग्यन्यक्कृतोत्पलमलिका ॥३०॥

स्थिरयौवनलावण्यालङ्कृतकलेबरा, अत्यन्तकठिनोत्तुङ्गस्तनभारवती ॥३१॥

कमलनालतन्तुनिभातिसूक्ष्ममध्यप्रदेशा, शृङ्गारतरङ्गिणीतुङ्गपुलिनश्रोणिभारविराजिता ॥३२॥

---

1 स्त्रीणां विलासबिब्बोकविभ्रमा ललितं तथा ।
हेलालीलेत्यमी भावाः क्रियाः शृङ्गारभावजाः । इत्यमरः ।

2 बन्धूको बन्धुजीवकः इत्यमरः ।

109

कुसुम्भकुसुमच्छायाकोमलाम्बरशोभया ।
शृङ्गारोद्यानसंरम्भरम्भास्तम्भोरुकाण्डया ॥३३॥

110

चूतप्रवालसुषम[1] सुकुमारपदाब्जया ।
स्थिरमङ्गलशृङ्गारभूषणालङ्कृताङ्गया ॥३४॥

111

हारनुपुरकेयूरचमत्कृतशरीरया ।
चक्षुरानन्दलतया सौभाग्यकुलविद्यया ॥३५॥

112 [तदा परिवारोपासनम्]

उमया सममासीनं लोकजालकुटुम्बया ।
अपूर्वरूपमभजन् परिवाराः समन्ततः ॥३६॥

---

कुसुम्भकुसुमकान्तिमत्कोमलाम्बरशोभमाना, शृङ्गारोद्यानसम्भ्रम रम्भास्तम्भायमानोरुकाण्डा ॥३३॥

चूतपल्लवमनोहरसुकुमारपादाब्जा, स्थिरमाङ्गल्यभूषणालङ्कृताङ्गी ।

मुक्ताहारमञ्जरीकेयूरचमत्कृतशरीरिणी, नयनानन्दलतिका सौभाग्यस्य कुलविद्यारूपिणी ॥३५॥

लोकसमूहकुटुम्बिनी च । एवंरूपया उमया दिव्यकन्यकया सह दिव्यसिंहासने समासीनम् अपूर्वरूपं परमेश्वरं समन्तात् नारायणादित्रयस्त्रिंशत्कोटिदेवताः अभजन्नित्यर्थः ॥३६॥

---

1 सुषमा परमा कान्तिः ।

114 [तत्र लक्ष्मीसेवा]

पुण्डरीका[1]कृतिस्वच्छं पूर्णचन्द्रसहोदरम् ।
दधौ तस्य महालक्ष्मीः सितमातपवारणम् ।।३७।।

115 [सरस्वतीसेवा]

तन्त्रीझङ्कारशालिन्या सङ्गीतामृतविद्यया ।
उपतस्थे महादेवं उपान्ते च सरस्वती ।।३८।।

116 [उपनिषद्वधूसेवा]

झणत्कङ्कणजातेन हस्तेनोपनिषद्वधूः ।
ओङ्कारतालवृन्तेन वीजयामास शङ्करम् ।।३९।।

---

113 [परिवारदेवताक्रियमाणपरमेश्वरसेवावर्णनम्]

एवं पार्वतीपरमेश्वरौ वर्णयित्वा अग्रे विंशतिसूत्रैः ताभिर्देवताभिः विधीयमानां सेवां वर्णयति—

श्वेतकमलवन्निर्मलं पूर्णचन्द्रसहोदरं श्वेतच्छत्रं महालक्ष्मीः तस्य परमेश्वरस्य धृतवती इत्यर्थः ।।३७।।

भास्वत्स्वरमण्डलतन्त्रीझङ्कारशोभमानसङ्गीतरसविद्यया सरस्वती समीपे महादेवं सेवितवती इत्यर्थः ।।३८।।

कूजन्नवरत्नमयकङ्कणसमूहयुक्तहस्तेन उपनिषद्वधूः ओङ्कारव्यजनेन शिवं वीजयामासेत्यर्थः ।।३७।।

---

1 पुण्डरीकं सिताम्भोजम् इत्यमरः ।

117 [देवस्त्रीसेवा]

चलच्चामरिकाहस्ताः झङ्कुर्वन्मणिकङ्कणाः
आसेवन्त तमीशानं अभितो दिव्यकन्यकाः ॥४०॥

118 [तदा शिवदर्शनम्]

चामराणां विलोलानां मध्ये तन्मुखमण्डलम्
रराज राजहंसानां भ्रमतामिव पङ्कजम् ॥४१॥

119 [वेदसेवा]

मन्त्रेण तमसेवन्त वेदाः साङ्गविभूतयः ।
भक्त्या चूडामणिं कान्तं वहन्त इव मौलिभिः ॥४२॥

---

दिव्यकन्यकाः इन्द्राणीप्रभृतिदेवस्त्रियः इत्यर्थः । स्पष्टमन्यत् ॥४०॥

विलोलानां चामराणां मध्ये शिवस्य मुखमण्डलं भ्रमतां[1] राजहंसानां मध्ये कमलमिव रराजेत्यर्थः ॥४१॥

साङ्गविभूतयः[2] शिक्षाद्यङ्गविशिष्टाः ऋगादिवेदपुरुषाः उपनिषद्भागरूपमस्तकैः तं परमेश्वरं कान्तं चूडारत्नमिव वहन्तः सन्तः प्रणवमन्त्रेण भक्त्या असेवन्तेत्यर्थः ॥४२॥

---

1 इतस्ततो निरन्तरतया चलताम् ।
2 विभूतिपदं परिवारपरम् ।

120 [अङ्गदेवतासेवा]

तदीयायुधधारिण्यः तत्समानविभूषणाः ।
अङ्गभूताः स्त्रियः काश्चित् आसेवन्त तमीश्वरम् ॥४३॥

121 [विद्येश्वरसेवा]

आप्ताधिकारिणः केचित् अनन्तप्रमुखा अपि ।
अष्टौ विद्येश्वराः देवं अभजन्त समन्ततः ॥४४॥

122 [सेवानिगमनम्]

ततो नन्दी महाकालः चण्डो भृङ्गिरिटिस्ततः ।
घण्टाकर्णः पुष्पदन्तः कपाली वीरभद्रकः ॥४५॥

एवमाद्या महाभागाः महाबलपराक्रमाः ।
निरंकुशमहासत्वा[1] भेजिरे तं महेश्वरम् ॥४६॥

---

वेदपुरुषायुधधारिण्यः तत्समानविभूषणाः अङ्गदेवताः तं शिवमसेवन्तेत्यर्थः ॥४३॥

परमाप्ताधिकारिणः केचित् अनन्तसूक्ष्मशिवोत्तमैकनेत्रैकरुद्रत्रिमूर्ति श्रीकण्ठशिखण्डिसंज्ञकाः अष्टविद्येश्वराः परमेश्वरमभितः असेवन्तेत्यर्थः ॥४४॥

स्पष्टम् ॥४५॥

स्पष्टम् ॥४६॥

---

1 निरर्गलमहापराक्रमशालिनः ।

123 [प्रथमगणवर्णनम्]

अणिमादिकमैश्वर्यं येषां सिद्धेरपोहनम् ।
ब्रह्मादयः सुरा येषां आज्ञालङ्घनभीरवः ॥४७॥

124

मोक्षलक्ष्मीपरिष्वङ्गमुदिताः येऽन्तरात्मना ।
येषामीषत्करं विश्वसर्गसंहारकल्पनम् ॥४८॥

125

ज्ञानशक्तिः परा येषां सर्ववस्तुप्रकाशिनी ।
आनन्दकणिकाः येषां हरिब्रह्मादिसम्पदः ॥४९॥

---

अथ प्रथमगणान् पञ्चभिः सूत्रैः वर्णयति—

अणिमाद्यष्टैश्वर्यं येषांप्रमथगणानां सिद्धेःसकाशात्, तुच्छम्, ब्रह्मादयः सुराः येषां आज्ञालङ्घने भयशीलाः इत्यर्थः ॥४७॥

अन्तर्मुखीभूतबुद्ध्या[1] मोक्षलक्ष्म्यालिङ्गने येषां विश्वसृष्ट्यादिकल्पनं ईषत्करं तुच्छमित्यर्थः ॥४८॥

येषां ज्ञानशक्तिः सर्ववस्तुप्रकाशिनी वरा श्रेष्ठा, ब्रह्मादीनां सम्पदः येषां आनन्दकणिकाः लेशाः इत्यर्थः ॥४९॥

---

1 आत्मशब्दस्य अनेकार्थत्वात् प्रकृते बुद्धिपरत्वमिति भावः ।

126

आकांक्षन्ते पदं येषां योगिनो योगतत्पराः ।
कांक्षणीयफलो येषां सङ्कल्पः कल्पपादपः ॥५०॥

127 [प्रमथगणसेवा]

कर्मकालादिकार्पण्यचिन्ता येषां न विद्यते ।
येषां विक्रमसंनाहाः मृत्योरपि च मृत्यवः ॥
ते सारूप्यपदं प्राप्ताः प्रमथाः भेजिरे शिवम् ॥५१॥

128 [सकलदेवतासेवा]

ब्रह्मोपेन्द्रमहेन्द्राद्याः विश्वतन्त्राधिकारिणम् ।
आयुधालङ्कृतप्रान्ताः[1] परितस्तं सिषेविरे ॥५२॥

---

शिवयोगतत्पराः योगिनः येषां पदं कांक्षन्ते अपेक्षन्ते, येषां सङ्कल्पः कामितार्थफलयुतकल्पपादपः इत्यर्थः ॥५०॥

सञ्चितादिकर्मभूतादिकालकामप्रमुत्युद्भूतकार्पण्यचिन्ता येषां न विद्यते, येषां पराक्रमप्रसङ्गाः मृत्योरपि मृत्यवः सारूप्यपदं प्राप्ताः ते प्रमथाः हरं भेजिरे । "भज सेवायाम्" इति धातुः ॥५१॥

ब्रह्मविष्णुरुद्रेन्द्रप्रभृतित्रयस्त्रिंशत्कोटिदेवैः स्वकीयायुधालङ्कारश्रोणियुग्माः विश्वसृष्टौ अधिकारवन्तं तं शिवं परितः सिषेविरे[2] इत्यर्थः ॥५२॥

---

1 उभयपार्श्वयोरपि धृतायुधाः इति यावत् ।

2 अभजन्त ।

129 [आदित्यादिकृतसेवा]

आदित्या वसवो रुद्राः यक्षगन्धर्वकिन्नराः ।
दानवा राक्षसा दैत्याः सिद्धा विद्याधरोरगाः ॥
अभजन्त महादेवं अपरिच्छिन्नसैनिकाः ॥५३॥

130 [महर्षिगणसेवा]

वसिष्ठो वामदेवश्च पुलस्त्यागस्त्यशौनकाः ।
दधीचिर्गौतमश्चैव सानन्दशुकनारदाः ॥५४॥

131

उपमन्युभृगुव्यासपराशरमरीचयः ।
इत्याद्या मुनयस्सर्वे नीलकण्ठं सिषेविरे ॥५५॥

132 [तदा देवदर्शनम्]

पार्श्वस्थपरिवाराणां विमलाङ्गेषु बिम्बितः ।
सर्वान्तर्गतमात्मानं स रेजे दर्शयन्निव ॥५६॥

133

क्षणं स शम्भुर्देवानां कार्यभागं निरूपयन् ।
क्षणं गन्धर्वराजानां गानविद्यां विभावयन् ॥५७॥

134 [तदानीन्तनं भगवतो राजवैभवदर्शनम्]

ब्रह्मविष्ण्वादिभिर्देवैः क्षणमालापमाचरन् ।
क्षणं देवमृगाक्षीणां लालयन्[1] नृत्यविभ्रमम् ॥५८॥

---

आदित्याः द्वादशादित्याः, अष्ट वसवः, एकादश रुद्राः कुबेरप्रभृति यक्षाः, हाहाप्रभृतिगन्धर्वाः, अश्वमुखादिकिन्नराः, बाणादिदानवाः, रावणादिराक्षसाः तारकादिदैत्याः, आदिनाथादिविद्याधराः, शेषाद्युरगाः, अविच्छिन्नसैनिकाः सन्तः महादेवं अभजन्त इत्यर्थः ॥५३॥

अथ परमेश्वरस्य राजव्यापारं नवभिः सूत्रैः प्रदर्शयति ॥५८॥

---

1 लालयन्–आदरेणावलोकयन् ।

135

व्यासादीनां क्षणं कुर्वन् वेदोच्चारेषु गौरवम् ।
विदधानः क्षणं देव्याः मुखे बिम्बाधरे दृशः ॥५९॥

136

हास्यनृत्यं क्षणं पश्यन् भृङ्गिना परिकल्पितम् ।
नन्दिना वेत्रहस्तेन सर्वतन्त्राधिकारिणा ॥६०॥

137

अमुञ्चता सदा पार्श्वं आत्माभिप्रायवेदिना ।
चोदितान् वासयन् कांश्चित्[1] विसृजन् भ्रूविलासतः[2] ॥६१॥
सम्भावयंस्तथा चान्यान् अन्यानपि नियामयन् ॥६१॥

138

समस्तभुवनाधीशमौलिलालितशासनः ।
अकुण्ठ[3]शक्तिरव्याजलावण्यललिताकृतिः ॥६२॥

---

स्पष्टम् ॥६०॥

भ्रूसंज्ञया कांश्चिद्विसृजन् प्रेषयन्, तथा अन्यान् सम्भावयन् प्रियोक्तिं, वदन् अन्यान् नियामयन् शिक्षयन् ॥ शिष्टं स्पष्टम् ॥६१॥

समस्तभुवनाधीशब्रह्ममस्तकस्थापितज्ञानशक्तिमान्, अप्रतिहतशक्तिः, निजलावण्यमनोहराकृतिः इत्यर्थः ॥६२॥

---

[1] प्रेरितान् कांश्चित् उपवेशयन् ।

[2] अन्यान् कांश्चित् भ्रूसंज्ञयैव बहिःप्रेषयन् ।

[3] कुण्ठो मन्दः क्रियासु यः इत्यमरः ।

139

स्थिरयौवनसौरभ्यशृङ्गारितकलेबरः ।
आत्मशक्त्यमृतास्वादरसोल्लासितमानसः ॥६३॥

140

स्वाभाविकमहैश्वर्यविश्रामपरमावधिः
निष्कलङ्कमहासत्त्वनिर्मितानेकविग्रहः ॥६४॥

141

अखण्डाशनिदोर्दण्डकण्डूखण्डनपण्डितः ।
चिन्तामणिः प्रसन्नानां श्रीकण्ठः परमेश्वरः ॥६५॥

142 [रेणुकं प्रति ताम्बूलदानाय ईश्वराह्वानम्]

सभान्तरगतं तन्त्रं[1] रेणुकं गणनायकम् ।
प्रसादं सुलभं दातुं ताम्बूलं स तमाह्वयत् ॥६६॥

---

वृद्धिक्षयरहितयौवनोद्रेकशृङ्गारितकलेबरः स्वसमवेतशक्तिलक्षणपरमानन्दरसास्वादनोज्जृम्भितान्तरङ्गः ॥६३॥

अनौपाधिकसर्वज्ञतादिमहैश्वर्यविश्रान्तिपर्यन्तभूमिः, अकलङ्कमहाशक्तिनिर्मितानेकदिव्यमङ्गलमूर्तिमान् ॥६४॥

अपरिमितसज्जनारातिबाहुदण्डकण्डूखण्डनविचक्षणः, निर्मलान्तःकरणानामिष्टार्थप्रदः, श्रीकण्ठः परमेश्वरः राजते इत्यर्थः ॥६५॥

एवं शिवस्य वैभवं वर्णयित्वा अग्रे सूत्रैकादशकेन रेणुकगणेशस्य शिवभक्तिमहत्त्वं सूचयति—

स शिवः सभामध्यगतं तन्त्रं मुख्यं अथवा प्रसिद्धं तं रेणुकं प्रति सुलभं ताम्बूलप्रसादं दातुं शिरसा आह्वयत् आकारितवान् इत्यर्थः ॥६६॥

---

1 तन्त्रं प्रधाने सिद्धान्ते इति कोशः ।

143 [तदा रेणुकेनदारुकापचारः]

शम्भोराह्वानसन्तोषसम्भ्रमेणैव दारुकम् ।
उल्लङ्घ्य पार्श्वमगमत् लोकनाथस्य रेणुकः ।।६७।।

144 [तदा शिवोक्तिः]

तमालोक्य विभुस्तत्र समुल्लङ्घितदारुकम् ।
माहात्म्यं निजभक्तानां द्योतयन्निदमब्रवीत् ।।६८।।

145 [भक्तदारुकापचारस्य अनर्थकारणता]

रे रे रेणुक ! दुर्बुद्धे ! कथमेष त्वयाऽधुना ।
उल्लङ्घितः सभामध्ये मम भक्तो हि दारुकः ।।६९।।

146

लङ्घनं मम भक्तानां परमानर्थकारणम् ।
आयुः श्रियं कुलं कीर्तिम् निहन्ति हि शरीरिणाम् ।।७०।।

147 [तत्र मार्कण्डेयदृष्टान्तः]

मम भक्तमवज्ञाय मार्कण्डेयं पुरा यमः ।
मत्पादताडनादासीत् स्मरणीयकलेबरः ।।७१।।

---

पार्श्वं वामभागमित्यर्थः ।।६७।।

विभुः स्वतन्त्रः इत्यर्थः । स्पष्टमन्यत् ।।६८।।

हि, प्रसिद्धमित्यर्थः ।।६९।।

विनष्टकलेबरत्वात् स्मरणीयकलेबरः आसीत् इत्यर्थः । स्पष्टमन्यत् ।।७१।।

148 [विष्णुदृष्टान्तः]

भृगोश्च शङ्कुकर्णस्य मम भक्तिमतोरतयोः ।
कृत्वानिष्टमभूद्विष्णुः विकेशो दशयोनिभाक् ॥७२॥

149 [कालान्तरीणविष्णुदृष्टान्तः]

मद्भक्तेन दधीचेन कृत्वा युद्धं जनार्दनः ।
भग्नचक्रायुधः पूर्वं पराभवमुपागमत् ॥७३॥

150 [दक्षदृष्टान्तः]

कृताश्वमेधो दक्षोऽपि मद्भक्तांश्च गणेश्वरान् ।
अवमत्य सभामध्ये मेषवक्त्रोऽभवत् पुरा ॥७४॥

151 [कालदृष्टान्तः]

श्वेतस्य मम भक्तस्य दुरतिक्रमतेजसः ।
औदासीन्येन कालोऽपि मया दग्धः पुराऽभवत् ॥७५॥

152 [निगमनम्]

एवमन्येऽपि बहवः मद्भक्तानामतिक्रमात् ।
परिभूताः हताश्चासन् भक्ता मे दुरतिक्रमाः ॥७६॥

153 [रेणुके शापदानम्]

अविचारेण मद्भक्तः लङ्घितो दारुकस्त्वया ।
एष त्वं रेणुकानेन जन्मवान् भव भूतले ॥७७॥

---

विकेशः शिरःपूर्वभागोत्पादितकेशवान् इत्यर्थः ॥७२॥

अवमत्य उदास्येत्यर्थः ॥७४॥

दुरतिक्रमतेजसः अनिन्दिततेजसः इत्यर्थः ॥७५॥

एवं भक्तमाहात्म्यं वर्णयित्वा तदुल्लङ्घनदोषस्य फलं निर्दिशति—

एष [illegible] ॥७७॥

154 [रेणुकप्रार्थना]

इत्युक्तः परमेशो भक्तमहात्म्यशंसिना ।
प्रार्थयामास देवेशं प्रणिपत्य स रेणुकः ॥७८॥

155 [मानुषयोनिनिषेधप्रार्थना]

मानुषीं योनिमासाद्य महादुःखविवर्धिनीम् ।
जात्यायुर्भोगवैषम्यहेतुकर्मोपपादिनीम् ॥७९॥

156

समस्तदेवकैङ्कर्यकार्पण्यप्रसवस्थलीम् ।
महातापत्रयोपेतां वर्णाश्रमनियन्त्रिताम् ।
विहाय त्वत्पदाम्भोजसेवां किं वा वसाम्यहम् ॥८०॥

157

यथा मे मानुषो भावः न भवेत् क्षितिमण्डले ।
तथा प्रसादं देवेश ! विधेहि करुणानिधे ! ॥८१॥

158 [रेणुकाय अभयप्रदानम्]

इति सम्प्रार्थितो देवः रेणुकेन महेश्वरः ।
मा भैषीर्मम भक्तानां कुतो भीतिरिहैष्यति ॥८२॥

---

अथ रेणुकः मानुषजन्मनि भीतःसन् पञ्चभिः सूत्रैः शिवं विज्ञापयति–

इत्युक्तः लोकहितार्थमित्युक्तः, भवदाह्वानसंभ्रान्त्या मया अज्ञानात् अयं लङ्घितः, मां पाहि' इति प्रार्थयामासेत्यर्थः ॥७८॥

त्वत्पादाम्बुजसेवां विहाय, एवंरूपांमानुषीं योनिमासाद्य स्थातुं योग्यः किमहम् ? इत्यर्थः ॥८०॥

स्पष्टम् ॥८१॥

एवं प्रार्थितवन्तं रेणुकं स्वात्मत्वेन निश्चित्य, अभयं दत्त्वा, षड्भिः सूत्रैः प्रयोजनं दर्शयति ॥८२॥

5*

159 [रेणुकाय भुवि जन्मभूमिनिर्देशः]

श्रीशैलस्योत्तरे भागे त्रिलिङ्गविषये शुभे ।
कोल्लिपाक्याभिधानोऽस्ति कोऽपि ग्रामो महत्तरः[1] ॥८३॥

160 [तत्र लिङ्गादाविर्भाववरदानम्]

सोमेश्वराभिधानस्य तत्र वासवतो मम ।
अस्पृशन् मानुषं भावं लिङ्गात् प्रादुर्भविष्यसि ॥८४॥

161 [तदा पूजाप्राप्तिवरदानम्]

मदीयलिङ्गसम्भूतं मद्भक्तपरिपालकम् ।
विस्मिताः मानुषाः सर्वे त्वां भजन्तु मदाज्ञया ॥८५॥

162 [तदा शैवशास्त्रप्रवर्तनादेशः]

मदद्वैतपरं[2] शास्त्रं वेदवेदान्तसम्मतम् ।
स्थापयिष्यसि भूलोके सर्वेषां हितकारकम् ॥८६॥

163

मम प्रतापमतुलं मद्भक्तानां विशेषतः ।
प्रकाशाय महीभागे वेदमार्गानुसारतः ॥८७॥

---

त्रिलिङ्गविषये आन्ध्रदेशे कोल्लिपाक्याख्यमहाग्रामः अस्ति ॥८३॥

तत्र वासवतः सोमेश्वराभिधानस्य मम लिङ्गात् मानुषं भावं अस्पृशन् प्रादुर्भविष्यसि इत्यर्थः ॥८४॥

अथ सङ्ग्रहकर्तुः शिवयोगिनः वाक्यम् ॥८७॥

---

1 महत्तरः-अतिविस्तीर्णः ।
2 शिवाद्वैतपरमित्यर्थः ।

164 [परिच्छेदनिगमनम्]

इत्युक्त्वा परमेश्वरः स भगवान् भद्रासना[1]दुत्थितः
ब्रह्मोपेन्द्रमुखान् विसृज्य विबुधान् भ्रूसंज्ञया केवलम् ।
पार्वत्या सहितो गणैरभिमतैः प्राप स्वमन्तःपुरं
क्षोणीभागमवातरत् पशुपतेः आज्ञावशात् रेणुकः ।।८८।।

इति श्रीसिद्धान्तशिखामणौ
रेणुकस्य भूलोकावगतिर्नाम
तृतीयः परिच्छेदः

---

अभिमतैः अत्याप्तैः नन्द्यादिभिः स्वकं अन्तःपुरं भगवान् प्राप । अथ रेणुकः ब्रह्माधिपतेः शिवस्य आज्ञावशात् भूभागं प्राप्तवान् इत्यर्थः ॥८८॥

इति श्रीमत्पदवाक्यप्रमाणपारावारधुरीण
श्रीमरितोंटदार्येण विरचितायां
सिद्धान्तशिखामणिव्याख्यायां
रेणुकस्य भूलोकावगतिर्नाम तृतीयः
परिच्छेदः समाप्तः

---

1 नृपासनं यत् तद्भद्रासनम् इत्यमरः ।

॥श्रीशिवाय नमः ॥

# सिद्धान्तशिखामणिः

## चतुर्थः परिच्छेदः

## रेणुकागस्त्यदर्शनप्रसङ्गः

165 [ रेणुकगणेश्वरस्वरूपवर्णनम् ]

अथ त्रिलिङ्गविषये कोल्लिपाक्यभिधे पुरे ।
सोमेश्वरमहालिङ्गात् प्रादुरासीत् स रेणुकः ॥१॥

166

प्रादुर्भूतं तमालोक्य शिवलिङ्गात् त्रिलिङ्गजाः ।
विस्मिताः प्राणिनः सर्वे बभूवुरतितेजसम् ॥२॥

167

भस्मोद्धूलितसर्वाङ्गं साररुद्राक्षभूषणम् ।
जटामुकुटसंयुक्तं त्रिपुण्ड्राङ्कितमस्तकम् ॥३॥

168

कटीतटपटीभूत[1]कन्थापटलबन्धुरम् ।
दधानं योगदण्डं च भस्माधारं कमण्डलुम् ॥४॥

---

अथ शिवयोगी रेणुकगणेश्वरस्य स्वरूपं वर्णयति ॥१॥

सारशब्देन बाहुल्यमुच्यते[2] ॥३॥

---

1 कटीतटपटीभूतमित्यस्य अतिकोमलमिति कर्नाटकव्याख्या ।
2 सारो बलेऽधिकांशे च इति कोशः ।

169

शिवाद्वैतपरिज्ञानपरमानन्दमोदितम् ।
निर्मूलसर्वसंसारवासनादोषपञ्जरम् ॥५॥

170

शिवागमसुधासिन्धुसमुन्मेषसुधाकरम् ।
चित्तारविन्दसङ्गूढशिवपादाम्बुजद्वयम् ॥६॥

171

यमादियोगतन्त्रज्ञं[1] स्वतन्त्रं सर्वकर्मसु ।
समस्तसिद्धसन्तान[2] समुदायशिखामणिम् ॥७॥

172

वीरसिद्धान्तनिर्वाहकृतपट्टनिबन्धनम् ।[3]
आलोकमात्रनिर्भिन्न[4] समस्तप्राणिपातकम् ॥८॥

173 [तं प्रति जनानां प्रश्नाः, तेषां उत्तरं च]

तमपृच्छन् जनाः सर्वे नमन्तः को भवानिति ।
इति पृष्टो महायोगी जनैः विस्मितमानसैः ॥९॥

---

वीरसिद्धान्तशब्देन वीरशैवसिद्धान्त उच्यते । स्पष्टमन्यत् ॥८॥

अथ मर्त्यं प्राप्तः एषः रेणुकः जनैः पृष्टः सन् , उत्तरं दत्त्वा मलयाद्रिमगमदित्याह—तमपृच्छन्नित्यादिश्लोकपञ्चकेन—

---

1 यमनियमासनप्राणायामप्रत्याहाराधारणाध्यानसमाधिरूपाष्टाङ्गरहस्यज्ञमित्यर्थः ।

2 सन्ततिः परम्परा ।

3 पट्टनिबन्धनं–पट्टाभिषेकः ।

4 निर्भिन्नं–विनाशितम् ।

174

प्रत्युवाच शिवाद्वैतमहानन्दपरायणः ।
पिनाकिनः पार्श्ववर्ती रेणुकाख्यगणेश्वरः ॥१०॥

175 [स्वनामकथनपूर्वकं स्वाविर्भावोद्देशविवरणम्]

केनचित् कारणेनाहं शिवलिङ्गादिहाभवम् ।
नाम्ना रेणुकसिद्धोऽहं सिद्धसन्ताननायकः ॥११॥

स्वच्छन्दचारी लोकेऽस्मिन् शिवसिद्धान्तपालकः ।
खण्डयन् जैनचार्वाकबौद्धादीनां दुरागमान् ॥१२॥

176 [तस्य मलयाचलं प्रति गमनम्]

इत्युक्त्वा पश्यतां तेषां विस्मयस्थिरचक्षुषाम् ।
उत्थाय व्योममार्गेण मलयाद्रिमुपागमत् ॥१३॥

177 [मलयाचलसौन्दर्यवर्णनम्]

नवचन्दनकान्तारकन्दल[1]न्मन्दमारुतम् ।
अभङ्गुर[2]भुजङ्गस्त्रीसङ्गीतरससङ्कुलम् ॥१४॥

---

अथ सूत्रत्रयेण मलयाद्रिं वर्णयति—

नूतनश्रीचन्दनभेदनक्षममन्दमारुतः अतिनिबिडभुजङ्गस्त्रीसङ्गीतरसव्याप्तः ॥१४॥

---

1 कन्दलत्—प्रसरत् ।
2 अभङ्गुरं-नैरन्तर्येण प्रवर्तमानम् ।

178

करिपोतकराकृष्टस्फुरदेलातिवासितम् ।
वराहदंष्ट्रिकाध्वस्तमुस्तासुरभिकन्दरम् ॥१५॥

179

पटीरदलपर्यङ्कप्रसुप्तव्याधदम्पतिम् ।
माधवीमल्लिकाजातीमञ्जरीरेणुरञ्जितम् ॥१६॥

180 [तत्र अगस्त्याश्रमदर्शनम्]

तत्र कुत्रचिदाभोग[1]सर्वर्तुकुसुमद्रुमे ।
अपश्यदाश्रमं दिव्यं अगस्त्यस्य महामुनेः ॥१७॥

---

करिकलभकराकर्षणविकीर्णैलाफलसुगन्धवासितः वराहदंष्ट्रोत्खात-भद्रमुस्तासुरभिसानुप्रदेशः ॥१५॥

कर्पूरकदलीपत्रपर्यङ्कनिद्रितकिरातदम्पतिः, सेवन्त्यादिकुसुमगुच्छ-परागरञ्जितः । एतादृशं मलयाद्रिमगमत् इति पूर्वेण सम्बन्धः ॥१६॥

अथ अष्टभिः सूत्रैः अगस्त्याश्रमं वर्णयति—

सम्पूर्णवसन्तादिसर्वर्तुकुसुममयवृक्षवति तत्र मलयाचले कुत्रचित् कस्मिंश्चित् प्रदेशे दिव्यं मनोहरं अगस्त्याश्रमं अपश्यत् दृष्टवान् इत्यर्थः ॥१७॥

---

1 आभोगशब्दः सम्पूर्णपरः इति कर्णाटकव्याख्या ।

181 [अगस्त्याश्रमरमणीयतावर्णनम् ]

मन्दारचन्दनप्रायैः मण्डितं तरुमण्डलैः ।
शाखाशिखरसंलीनतारकागणकोरकैः ।।१८।।

182

मुनिकन्याकरानीतकलशाम्बुविवर्धितैः ।
आलवालजलास्वादमोदमानमृगीगणैः ।।१९।।

183

हेमारविन्दनिष्यन्दमकरन्दसुगन्धिभिः ।
मरालालापवाचालवीचीमालामनोहरैः ।।२०।।

184

इन्दीवरवरज्योतिरन्धीकृतहरिन्मुखैः ।[1]
लोपामुद्रापदन्याससचरितार्थतटाङ्कितैः ।।२१।।

185

हारनीहारकर्पूरहरहासामलोदकैः ।
नित्यनैमित्तिकस्नाननियमार्थैः तपस्विनाम् ।।२२।।

---

शाखाग्रसंविलीनतारकागणरूपकुसुमकुड्मलैः कल्पवृक्षश्रीचन्दनादितरुसमूहैर्मण्डितम् शोभितमित्यर्थः ॥१८॥

मरालालापेन[2]वाचालुरित्यर्थः ।।२०।।

---

1 हरित्-दिक् ।

2 राजहंसमधुरनिनादेन ।

186

प्रकृष्टमणिसोपानैः परिवीतं[1] सरोवरैः ।
विमुक्तसत्त्ववैरस्यं[2] ब्रह्मलोकमिवापरम् ॥२३॥

187

हूयमानाज्यसन्तानधूमगन्धि महास्थलम् ।
शुकसंसत्समारब्धश्रुतिशास्त्रोपबृंहणम् ॥२४॥

188 [तत्र अगस्त्यदर्शनम् तद्वर्णनं च]

तस्य मध्ये समासीनं मूले चन्दनभूरुहः ।[3]
सुकुमारदलच्छायादूरिता[4]दित्यतेजसः ॥२५॥

189

तटित्पिङ्गजटाभारः त्रिपुण्ड्राङ्कितमस्तकः ।
भस्मोद्धूलितसर्वाङ्गैः स्फुरद्रुद्राक्षभूषणैः ॥२६॥

190

नववल्कलवासोभिः नानानियमधारिभिः ।
परिवीतं[5]मुनिगणैः प्रमथैरिव शङ्करम् ॥२७॥

---

शुकसंसदा इत्यर्थः । स्पष्टमन्यत् । एतादृशं अगस्त्याश्रमं अपश्यत् इत्यर्थः ॥२४॥

अथ अगस्त्यमुनिं नवभिः सूत्रैः वर्णयति ॥२५॥

---

1 परिवीतं-व्याप्तम् ।
2 परस्परवैरशून्यसमस्तप्राणिवर्गसहितम् ।
3 चन्दनवृक्षस्य ।
4 दूरितं-दूरीकृतं-अच्छादितम् ।
5 परिवीतं-व्याप्तम् ।

191

समुज्ज्वलजटाजालैः तपःपादपपल्लवैः ।
स्फुरत्सौदामिनीकल्पैः ज्वालाजालैरिवानलम् ॥२८॥

192

विशुद्धभस्मकृतया त्रिपुण्ड्राङ्कितरेखया ।
त्रिस्रोतसेव सम्बद्धशिलाभागं हिमाचलम् ॥२९॥

193

भस्मालङ्कृतसर्वाङ्गं शशाङ्कमिव भूगतम् ।
वसानं वल्कलं नव्यं बालातपसमप्रभम् ॥३०॥

194

बडबाग्निशिखाजालसमालीढमिवार्णवम् ।
सर्वासामपि विद्यानां समुदायनिकेतनम् ॥३१॥

195

न्यक्कृतप्राकृताहन्तं निरूढशिवभावनम् ।
तृणीकृतजगज्जालं सिद्धीनामुदयस्थलम् ॥३२॥

---

शिवप्रसादभूततपोवृक्षपल्लवः स्फुरद्विद्युल्लतासदृशैः जटाजालैः अग्निमिव समुज्ज्वलन्तमित्यर्थः ॥२८॥

त्रिभागेन प्रवहद्गङ्गासम्बद्धशिलाभागम्, हिमाद्रिमिव सितत्रिपुण्ड्ररेखाङ्कितमस्तकमित्यर्थः ॥२९॥

समालीढं व्याप्तमित्यर्थः ॥३१॥

तिरस्कृतप्राकृतशरीराद्यहङ्कारवन्तमित्यर्थः । सिद्धीनां अणिमादिसिद्धीनामित्यर्थः ॥३२॥

---

1 अहन्ता—अहम्भावः ।

196

मोहान्धकारतपनम्[1] मूलबोधमहीरुहम् ।
ददर्श स महायोगी मुनिं कलशसम्भवम् ।।३३।।

197 [अगस्त्यकृतरेणुकाचार्यसत्कारवर्णनम्]

तमागतं महासिद्धं समीक्ष्य कलशोद्भवः ।
गणेन्द्रं रेणुकाभिख्यं विवेद ज्ञानचक्षुषा ।।३४।।

198

तस्यानुभावं विज्ञाय सहसैव समुत्थितः
लोपामुद्राकरानीतैः उदकैरतिपावनैः ।।३५।।

199

पादौ प्रक्षालयामास स तस्य शिवयोगिनः ।
सम्पूज्य तं यथाशास्त्रं तन्नियोगपुरस्सरम् ।।३६।।

---

मूलबोधस्य स्वरूपज्ञानस्य कल्पद्रुममित्यर्थः । एवमादिविशेषण-विशिष्ट कलशसम्भवं अगस्त्यं स रेणुकाचार्यः ददर्श दृष्टवान् इत्यर्थः ।।३३।।

अथ समागतं तं रेणुकाचार्यं अगस्त्यः पूजयामासेति चतुर्भिः सूत्रैः प्रतिपादयति ।।३४।।

सः अगस्त्यः तस्य रेणुकस्य अनुभावं सामर्थ्यं समन्वीक्ष्य, तस्मिन्नेव क्षणे समुत्थाय प्रणम्य आसने उपावेशयत् इत्यर्थः ।।३५।।

---

1 तपनः सविता रविः ।

200

मुनिर्विनयसम्पन्नः निषसादासनान्तरे ।
समासीनं मुनिवरं सर्वतेजस्विनां विभुम् ।।३७।।

201 [रेणुककृतः अगस्त्यकुशलप्रश्नः]

उवाच शान्तया वाचा रेवणः सिद्धशेखरः ।[1]
निर्विघ्नं वर्तसे किं नु नित्या ते नियमक्रिया ।।
अथवाऽगस्त्य ! तेजस्विन् ! कुतः स्युः तेऽन्तरायकाः ।।३८।।

202 [अगस्त्ये तन्महिमनिवेदनम्] [तत्सिद्धीनां वर्णनम्]

विन्ध्यो निरुद्धो भवता विश्वोल्लङ्घनविभ्रमः ।
नहुषो रोषलेशात्ते सद्यः सर्पत्वमागतः ।।३९।।

---

अथेति शेषः । तं रेणुकं शास्त्रोक्तप्रकारेण भक्तियुक्तः सन् अगस्त्यमुनिः सम्पूज्य तदाज्ञापुरःसरं यथा तथा पीठान्तरे उपविष्टः इत्यर्थः ।।३७।।

अथ अष्टभिः सूत्रैः श्रीरेणुकः अगस्त्यं कुशलप्रश्नपूर्वकं प्रस्तौति—

तेजस्विन् भो अगस्त्य ! अथ माङ्गल्येन निर्विघ्नं भवान् वर्तते किन्नु ? ते नियमक्रिया नित्या वा विच्छेदरहिता वा ? इत्यर्थः । ते अन्तरायकाः विघ्नकारिणः कुतः स्युः ?न स्युरित्यर्थः ।।३८।।

विश्वोल्लङ्घनविभ्रमः महामेरुप्रभृतिमहापर्वतोल्लङ्घनविलासवान् विन्ध्यः विन्ध्याद्रिः निरुद्धः भूमौ निपातितः इत्यर्थः । भो अगस्त्य ! ते क्रोधलेशात् सद्य एव नहुषः सर्पतां गतः ।।३९।।

---

1 सिद्धपुरुषेषु मूर्धन्यः ।

203

आचान्ते भवता पूर्वं पङ्कशेषाः पयोधयः ।
जीर्णस्ते जाठरे वह्नौ दृप्तो वातापिदानवः ॥४०॥

204

एवंविधानां चित्राणां सर्वलोकातिशायिनाम् ।
कृत्यानां तु भवान् कर्ता कस्तेऽगस्त्य ! समप्रभः ॥४१॥

205 [अगस्त्यस्य आध्यात्मिकसम्पद्वर्णनम्]

शिवाद्वैतपरानन्दप्रकाशनपरायणम् ।
भवन्तमेकं शंसन्ति प्रकृत्यासङ्ग[1]वर्जितम् ॥४२॥

---

पूर्वं भवता आचान्ते आचमने कृते सति पयोधयः समुद्राः पङ्कशेषेण अवशिष्टाःकृताः । ते जठराग्नौ दृप्तः उद्धतः वातापिदानवः वातापिनामा असुरः जीर्णो जातः इत्यर्थः ॥४०॥

सर्वजनातिशायिनां एवंविधचित्रकर्मणां त्वं कर्ता कर्माणि कुर्वाणः इत्यर्थः । तस्मात् भो अगस्त्य ! ते समानप्रभावः कः ? न कोऽपीत्यर्थः ॥४१॥

अत्र लोकाः भवन्तमेकमेव शिवाद्वैतविज्ञानाविर्भूतिपरमानन्दप्रकाशनतत्परं प्रकृतिसम्बन्धरहितं कथयन्तीत्यर्थः ॥४२॥

---

[1] आसङ्गः सलेपः सम्बन्धः ।

206 [अगस्त्येन शैवशास्त्रप्रवर्तनवर्णनम्]

पुरा हैमवतीसूनुः अवदत्ते[1]षडाननः ।
शिवधर्मोत्तरं नाम शास्त्रमीश्वरभाषितम् ॥४३॥

207

भक्तिः शैवी महाघोरसंसारभयहारिणी ।
त्वया राजन्वती[2]लोके जाताऽगस्त्य ! महामुने ! ॥४४॥

208 [अगस्त्येन रेणुकाचार्यदर्शनसम्पन्नभाग्यविवरणम्]

इति तस्य वचः श्रुत्वा सिद्धस्य मुनिपुङ्गवः ।
गम्भीरगुणया वाचा बभाषे भक्तिपूर्वकम् ॥४५॥

209

अहमेव मुनीन्द्राणां लालनीयोऽस्मि सर्वदा ।
भवदागमसम्पत्तिः मां विना कस्य सम्भवेत् ॥४६॥

---

तत् कथम्? इत्यत्राह—

हैमवतीसूनुः पार्वतीनन्दनः इत्यर्थः ॥४३॥

स्कन्दोपदेशमहिम्ना अतिक्रूरसंसारभयनाशिनी शिवभक्तिः त्वया भूलोके राजन्वती सम्यक् प्रकाशमाना जाता इत्यर्थः ॥४४॥

अथ अगस्त्यमुनिवचनम्—अथ अगस्त्यः स्वस्य रेणुकाचार्यदर्शनोत्थसौभाग्यं दशभिः सूत्रैः वर्णयति ॥४५।

अहमेव सदा मुनीन्द्रैः लालनीयः श्लाघनीयः। तत्र हेतुः भवदागमः। त्वदागमनसम्पत्तिः मां विना न कस्यापीति अहमेव सर्वैः श्लाघनीयः अस्मीति भावः ॥४६॥

---

1 अवदत् ते इति विभागः ।

2 राजन्वतीति । राजन्वान् सौराज्ये इति तु पाणिनिः ।

210

स्थिरमद्य शिवज्ञानं स्थिरा मे तापसक्रिया ।
भवद्दर्शनपुण्येन स्थिरा मे मुनिराजता ॥४७॥

211

संसारसर्पदष्टानां मूर्च्छितानां[1]शरीरिणाम् ।
कटाक्षस्तव कल्याणं समुज्जीवनभेषजम् ॥४८॥

212

समस्तलोकसन्दा[1]हतापत्रयमहानलः ।
त्वत्पदाम्बुकणास्वादात् उपशाम्यति देहिनाम् ॥४९॥

213 [स्वस्मिन् जातरेणुकताप्रत्याभिज्ञावर्णनम्]

रेणुकं त्वां विजानामि गणनाथं शिवप्रियम् ।
अवतीर्णमिमां भूमिं मदनुग्रहकाङ्क्षया ॥५०॥

214

भवादृशानां सिद्धानां प्रबोधध्वस्तजन्मनाम् ।
प्रवृत्तिरीदृशी लोके परानुग्रहकारिणी ॥५१॥

---

तापत्रयात्मसर्पदष्टानां अत एव मूर्च्छितानां प्राणिनां ते कटाक्षः कल्याणं मङ्गलात्मक समुज्जीवनंभेषजं सञ्जीवनौषधमित्यर्थः ॥४८॥

तर्हि कोऽहम्? इत्याकाङ्क्षायामाह ॥५०॥

प्रवृत्तिः सञ्चारः इत्यर्थः। ईदृशी एवं परानुग्रहरूपिणी इत्यर्थः॥५१॥

---

1 प्राप्तमूर्छावस्थानामित्यर्थः ।

215 [अगस्त्येन रेणुके सिद्धान्तश्रवणप्रार्थना]

त्वन्मुखात् श्रोतुमिच्छामि सिद्धान्तं श्रुतिसंमतम् ।
सर्वज्ञ ! वद मे साक्षात् शैवं सर्वार्थसाधकम् ॥५२॥

216

सद्यः सिद्धिकरं पुंसां सर्वयोगीन्द्रसेवितम् ।
दुराचारैरनाघ्रातं स्वीकृतं वेदवेदिभिः ॥
शिवात्मैक्यमहाबोधसम्प्रदायप्रवर्तकम् ॥५३॥

217 [निगमनम्]

उक्त्वा भवान् सकललोकमहोपकारं
सिद्धान्तसङ्ग्रहम् अनादृतबाह्यतन्त्रम् ।
सद्यः कृतार्थयितुमर्हति दिव्ययोगिन् !
नानागमश्रवणवर्तितसंशयं माम् ॥५४॥

---

दुराचारैः जैनबौद्धादिभिः अनाघ्रातं अस्वीकृतमित्यर्थः । साक्षात् शिवात्मैक्येति । सकललोकप्रत्यक्षभूतशिवजीवैक्यज्ञानसम्प्रदायप्राप्त-मित्यर्थः । एवमादिविशेषणविशिष्टं शैवसिद्धान्तं त्वन्मुखात् श्रोतुं इच्छामि। भो सर्वज्ञ ! मे मह्यं वद कृपयेत्यर्थः ॥५३॥

दिव्ययोगिन् ! मनोहरशिवयोगयुक्त ! रेवणसिद्धेश्वर ! अनादृतबाह्य-तन्त्रं=खण्डितजैनबौद्धादितन्त्रं सकललोकमहोपकारकं सकलप्राण्यनुग्राहकं

इति श्रीसिद्धान्तशिखामणौ
रेणुकागस्त्यदर्शनप्रसङ्गो नाम
चतुर्थः परिच्छेदः समाप्तः

सिद्धान्तसंग्रहं वेदसंमतसिद्धान्तसारं उक्त्वा उपदिश्य नानागमश्रवणवर्तित-संशयं कामिकादिवातुलान्तानेकागमश्रवणप्राप्तसंशयं मां भवान् सद्यः कृतार्थयितुमर्हति योग्योऽसि इत्यर्थः ।।५४।।

इति श्रीमत्पदवाक्यप्रमाणपारावारधुरीण-
श्रीमरितोण्टदार्येण विरचितायां
तत्त्वप्रदीपिकायां
सिद्धान्तशिखामणिव्याख्यायां
चतुर्थः परिच्छेदः

॥ श्रीशिवाय नमः ॥

# सिद्धान्तशिखामणिः

## पञ्चमः परिच्छेदः

## पिण्ड–ज्ञान–संसारहेयस्थलप्रसङ्गः

219 [रेणुकस्य उत्तरारम्भः]

अथागस्त्यवचः श्रुत्वा रेणुको गणनायकः ।
ध्यात्वा क्षणं महादेवं साम्बमाह समाहितः ॥ १॥

---

218 [परिच्छेदावतरणम्]

एवं अगस्त्यविज्ञापनावाक्यश्रवणानन्तरं तच्छास्त्रप्रचारार्थमेव भूलोकमधिगतः शिवगणाधीशः श्रीरेणुकाचार्यः क्षणमचञ्चलमनाः दयया प्रारम्भणीयशिवशास्त्रपरिसमाप्तिप्रतिबन्धकीभूतविघ्नदेवतासङ्घसमाधानशक्तं शिवध्यानरूपमङ्गलं मनसि विधाय तस्योत्तरमाहेति शिवयोगी निरूपयति— इत्यवतारिकयैव अस्यार्थस्य स्फुटत्वेऽपि योजनाद्वारेण ईषद्विशेषः सूच्यते—

अगस्त्यवचः श्रुत्वा अथ गणनायकः क्षणं एकाग्रचित्तः सन् साम्बं अम्बया जगज्जनन्या शक्तिप्रणवरूपमुख्यस्वसमवेतचित्क्रियासामरस्यलक्षण चिदम्बर शक्त्या सह वर्तमानं महादेवं क्रीडाविजिगीषाद्यनेकगुणरत्नाकरं परब्रह्म तेजोलिङ्गं ध्यात्वा आह तस्योत्तरवचनं निरूपयति इत्यर्थः ॥१॥

220

अगस्त्य ! मुनिशार्दूल ! समस्तागमपारग !
शिवज्ञानकरं वक्ष्ये सिद्धान्तं शृणु सादरम् ।।२।।

221 [सिद्धान्तानां बहुविधता]

अगस्त्य ! खलु सिद्धान्ताः विख्याताः रुचिभेदतः ।
भिन्नाचारसमायुक्ताः भिन्नार्थप्रतिपादकाः ।।३।।

222 [तत्र साङ्ख्यादीनां अखण्डनीयता]

साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
एतानि मानभूतानि नोपहन्यानि युक्तिभिः ।।४।।

---

समस्तागमपारग ! सकलनिगमागमपारङ्गत ! शिवशास्त्रप्रभुत्वात्, मुनिशार्दूल-मुनिश्रेष्ठ ! भो अगस्त्य ! शिवज्ञानकरं स्वतन्त्रशिवाद्वैतज्ञान-प्रकारकं सिद्धान्तं सिद्धान्तशास्त्रं वक्ष्ये, सादरः प्रीतियुक्तः सन् त्वं शृणु इत्यर्थः ।।२।।

अथ तस्य सिद्धान्तस्य आधिक्यं प्रतिपादयितुं सिद्धान्ताः बहवः सन्तीत्याह—

भो अगस्त्य ! रुचिभेदतः कपिलपतञ्जल्यादिऋषिप्रीतिवैचित्र्यात् भिन्नाचारस्य प्रतिपादकाः सिद्धान्ताः बहवः इति शेषः । विख्याताः खलु प्रसिद्धाः सन्तीत्यर्थः ।।३।।

ते के इत्याकाङ्क्षायामाह—

223 [साङ्ख्यादीनां प्रामाण्यमूलम्]

वेदः प्रधानं सर्वेषां साङ्ख्यादीनां महामुने !
वेदानुसरणादेषां प्रामाण्यमिति निश्चितम् ।।५।।

---

साङ्ख्यं कापिलं प्रकृतिपुरुषलक्षणपदार्थद्वयप्रतिपादकम्, तत्र अनीश्वराङ्गीकारः। योगः योगशास्त्रं पतञ्जलिप्रणीतम्, तत्र ईश्वराङ्गीकारः। तच्च कष्टकरयमनियमाद्यष्टाङ्गप्रतिपादकम्। पाञ्चरात्रं वासुदेवप्रणीतम्, वैष्णवम्, विष्णुदीक्षाङ्गभूततप्तमुद्राधारणादिप्रतिपादनद्वारा चिदचिदीश्वरलक्षणत्रिपदार्थप्रतिपादकम्। पाशुपतं शिवप्रणीतम्, पशु-पाश-पतिलक्षणत्रिपदार्थप्रतिपादकम्। वेदाः — "यस्य निःश्वसितं वेदाः" इति शिवस्य अप्रयत्नसिद्धनिःश्वासरूपाः अत एव अकृत्रिमाः ऋग्यजुस्सामरूपाः। तत्पूर्वकाण्डानुसारेण जैमिनिप्रोक्तं पूर्वमीमांसाख्यं यागादिकर्मप्राधान्यप्रतिपादकं निरीश्वरम्।

एतानि शास्त्राणि मानभूतानि प्रमाणभूतानि युक्तिभिः नोपहन्यानि, तर्कयुक्तिभिः न खण्डनीयानि—

"त्रयी साङ्ख्यं योगः पशुपतिमतं वैष्णवमिति" इति महिम्नस्तोत्रप्रसिद्धत्वात् इत्यर्थः ॥४॥

ननु कथमेषां प्रामाण्यम् ? इत्यत्राह—

उक्तलक्षणानां सर्वेषां साङ्ख्यादीनां मध्ये वेदः प्रधानं मुख्यप्रमाणम्, अपौरुषेयत्वात्। येषां साङ्ख्यादिसिद्धान्तानां वेदानुसरणात् वेदमूलकत्वात् प्रमाण्यमिति शास्त्रज्ञनिश्चितमित्यर्थः ॥५॥

224 [साङ्ख्यादिभ्यः शैवे भेदहेतुः]

पाञ्चरात्रस्य साङ्ख्यस्य योगस्य च तथा मुने !
वेदैकदेशवर्तित्वं शैवं वेदमयं मतम् ॥६॥

225 [शैवतन्त्रवैशिष्ट्यम्]

वेदैकदेशवर्तिभ्यः साङ्ख्यादिभ्यो महामुने !
सर्ववेदानुसारित्वात् शैवतन्त्रं विशिष्यते ॥७॥

226 [शैवतन्त्रस्य प्रामाण्ये हेतुः]

शैवतन्त्रमिति प्रोक्तं सिद्धान्ताख्यं शिवोदितम् ।
सर्ववेदार्थरूपत्वात् प्रामाण्यं वेदवत् सदा ॥८॥

---

ननु साङ्ख्यादिशास्त्राणामपि वेदमूलत्वात् एभ्यः शैवशास्त्रस्य को विशेषः ? इत्यत्राह—

अत्र चकारात् अवशिष्टद्वयं सङ्गृहीतम् । एवं च उक्तलक्षणपाञ्चरात्रादिपञ्चसिद्धान्तानां वेदैकदेशनिष्ठत्वम्, शैवं शिवशास्त्रं तु वेदमयं वेदस्वरूपमिति मतं निगमागमज्ञैः अङ्गीकृतमित्यर्थः ॥६॥

एवं स्थिते सर्ववेदमयत्वात् शैवतन्त्रं साङ्ख्यादिभ्यः श्रेष्ठमित्याह—

अत्र तन्त्रशब्देन शास्त्रमुच्यते । स्पष्टमन्यत् ॥७॥

ननु तर्हि शैवतन्त्रं केनचित् कल्पितमिति प्रतीयमानत्वात् कथमस्य प्रामाण्यम् ? इत्यत्राह—

शैवतन्त्रं शिवोक्तं सर्वज्ञशिवप्रोक्तम्, तत्सिद्धान्ताख्यमिति प्रोक्तम,

227 [आगमभेदाः]

आगमाः बहुधा प्रोक्ताः शिवेन परमात्मना ।
शैवं पाशुपतं सोमं लाकुलं चेति भेदतः ॥९॥

228 [शैवतन्त्रविभाग]

तेषु शैवं चतुर्भेदं तन्त्रं सर्वविनिश्चितम् ।
वामं च दक्षिणं चैव मिश्रं सिद्धान्तसंज्ञकम् ॥१०॥

229 [तेषां परस्परं वैलक्षण्यम्]

शक्तिप्रधानं वामाख्यं दक्षिणं भैरवात्मकम् ।
सप्तमातृपरं मिश्रं सिद्धान्तं वेदसंमतम् ॥११॥

---

सर्ववेदार्थरूपत्वात् मकुटोपनिषदर्थरूपत्वात्, सदा कालभेदराहित्येन वेदवत् प्रमाणमित्यर्थः ॥८॥

आगमाः परमात्मना शिवेन शैवमिति पाशुपतमिति सोममिति लाकुलमिति च भेदात् आगमाः बहवः प्रोक्ताः[1] ॥९॥

ननु शिवोक्ततन्त्राणां बाहुल्यात् तानि सर्वाणि वेदवत् प्रमाणानि किम्? इत्यत्राह—

तेषु शैवतन्त्रं चतुर्भेदवत् इति सर्वैः आगमज्ञैः निश्चितम् । ते के भेदाः? इत्यत्राह— वामं च दक्षिणं चैव मिश्रं सिद्धान्तसंज्ञकम् इति ॥१०॥

अथ तत्स्वरूपं प्रकटयति शक्तीत्यादिना ।

---

1 अधिकारिणां अधिकारानुगुण्येन सोपानरूपतया बहूनि विधानानि तत्तत्संज्ञया परिकल्पितानीति भावः ।

230 [तत्र सिद्धान्तशैवस्य वेदसम्मतत्वे हेतुः]

वेदधर्माभिधायित्वात् सिद्धान्ताख्यः शिवागमः ।
वेदबाह्यविरोधित्वात् वेदसंमत उच्यते ॥१२॥

231 [तस्य वेदसाम्यम्]

वेदसिद्धान्तयोरैक्यं एकार्थप्रतिपादनात् ।
प्रामाण्यं सदृशं ज्ञेयं पण्डितैरेतयोः सदा ॥१३ ।

---

वामाख्यतन्त्रं शक्तिपरम्, दक्षिणतन्त्रं भैरवपरम्, मिश्रतन्त्रं ब्राह्म्यादि सप्तमातृकापरम् । सिद्धान्तं वेदसम्मतम्, सिद्धाख्यं शैवतन्त्रं वेदसम्मतम् । अनेन सिद्धान्ताख्यशैवतन्त्रमेव वेदवत् प्रमाणम् । शिष्टं अवेदसम्मतत्वात् तद्वत् प्रमाणं[1] न भवतीति सूचितम् ॥११॥

ननु सिद्धन्ताख्यशैवतन्त्रं कथं वेदसंमतमित्यत्राह—

वेदोक्तभस्मलिङ्गधारणादिधर्मप्रतिपादकत्वात्, वेदबाह्यजैनचार्वाकादिमत-निरासकत्वात् सिद्धान्ताख्यः शिवागमः वेदसम्मतः इत्युच्यते इत्यर्थः ॥१२॥

एवं वेदसम्मतत्वात् सिद्धान्तः वेदवत्—प्रमाणमित्याह—

" सर्ववेदेषु यत् दृष्टं तत्सर्वं तु शिवागमः "

इति वीरागमोक्तेः वेदसिद्धान्तयोः एकार्थत्वात् वेदवत् सिद्धान्तोऽपि प्रमाणमिति भावः[2] ॥१३।

---

1 आत्यन्तिकं प्रमाणं न भवतीत्यर्थः । रोगिणो देहबलानुगुण्येन चिकित्सा विशेषस्यापि प्राथमिकस्य ग्राह्यत्वात् ।

2 वेदानुगुणत्वात् सिद्धान्तस्य, सिद्धान्तानुगुणत्वात् वेदस्य चेति उभय-प्रामाण्यानुगमः इति भावः ।

232 [सिद्धान्तशैवप्रतिपाद्यार्थः]

सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते ।
निर्दिष्टमुत्तरे भागे वीरशैवमतं परम् ॥१४॥

233 [वीरशैवस्य वेदान्तसम्मतता]

विद्यायां शिवरूपायां विशेषाद्रमणं यतः ।
तस्मादेते महाभागाः वीरशैवा इति स्मृताः ॥१५॥

234 [वीरशैवशब्दनिर्वचनम्]

वी शब्देनोच्यते विद्या शिवजीवैक्यबोधिका ।
तस्यां रमन्ते ये शैवाः वीरशैवास्तु ते मताः ॥१६॥

---

अथैवं सिद्धान्ताख्यशिवागमे किं प्रतिपाद्यते ? इत्यत्राह—

शिवोक्ते सिद्धान्ताख्ये कामिकादिवातुलान्ते महातन्त्रे उत्तरभागे परं सर्वोत्कृष्टं वीरशैवमतं निर्दिष्टं उपदिष्टम् । अनेन पूर्वभागे शैवं उपदिष्टम् इति सूचितम् ॥१४॥

अथ वेदशिरस्यपि वीरशैवशब्दं दर्शयति—

शिवरूपायां ब्रह्मस्वरूपायां विद्यायां

"वेदान्तवाक्यजा विद्या"

इति सूतगीतोक्तेः वेदान्तवेद्यायां विशेषात् रमणं रतिः अस्ति, तस्मात् एते तत्र रतिमन्तः महाभागाः परमश्रेष्ठाः वीरशैवाः इति स्मृताः इत्यर्थः ॥१५॥

अथ वेदागममस्तकयोरपि वीरशैवशब्दनिर्वचनं दर्शयति—

235 [वीरमाहेश्वरशब्दनिर्वचनम्]

विद्यायां रमते यस्मात् मायां हेयां श्ववद्रहेत् ।
अनेनैव निरुक्तेन वीरमाहेश्वरः स्मृतः ॥१७॥

---

शिवजीवैक्यबोधिका लिङ्गरूपशिवजीवैक्यप्रकाशिका विद्या वी शब्देनोच्यते[1] पण्डितैः कथ्यते इत्यर्थः ।

" वी गतिप्रजनव्याप्तिकान्त्यसनखादनेषु "
इति धातोः । तस्यां विद्यायां ये शैवाः शिवभक्ताः रमन्ते, ते तु वीरशैवाः इति मताः संमताः इत्यर्थः ॥१६॥

अथ वीरमाहेश्वरशब्दनिर्वचनं करोति—

यस्मात् लिङ्गाङ्गसम्बन्धकारणार्थं शिवजीवैक्यप्रकाशिकायां विद्यायां रमन्ते, मायां जगद्रूपां हेयां त्यजनीयां श्ववत् शुनकवत् रहेत निवारयेत्[3], अनेनैव निरुक्तेन एकद्वित्र्यादिपदगताद्याक्षरप्रवचनेनैव वीरमाहेश्वरः इति अन्वर्थनाम्ना स्मृत इत्यर्थः

---

1 विद्यापदप्रथमाक्षरविशब्दसूचिकैव वीशब्दः इति भावः । धातोरपि ईकारान्तत्वात् ।

2 शिवजीवैक्यप्रकाशकत्वमेव विद्यापदप्रवृत्तिनिमित्तं मुख्यमिति भावः । अन्यथा विद्ज्ञाने इति धात्वर्थं निमित्तीकृत्य घटपटज्ञानादीनामपि विद्यात्वं स्यादिति ।

3 भोगानन्तरं सारग्रहणेन निस्सारत्यागस्यैव लोकव्यवहारेणापि सिद्धत्वादिति भावः ।

236 [वीरशब्दस्य वेदान्त सिद्धान्तः]

वेदान्तजन्यं यद् ज्ञानं विद्येति परिकीर्त्यते ।
विद्यायां रमते तस्यां वीर इत्यभिधीयते ॥१८॥

237 [शैवमाहेश्वरयोः आत्यन्तिकभेदाभावः]

शैवैर्माहेश्वरैश्चैव कार्यमन्तर्बहिः क्रमात् ।
शिवो महेश्वरश्चेति नात्यन्तमिह भिद्यते ॥१९॥

---

एवं वेदान्तसिद्धान्तसिद्धवीरशब्दंसिध्दशैवशब्दमाहेश्वरशब्दांश्च विविच्य, अनन्तरं वेदागमशिद्धरस्सिवीरशैव-वीरमाहेश्वरस्वरूपं षड्भिः सूत्रैः विशदयति[1] ।।१७॥

तत्र प्रथमं वीरशब्दः कथं वेदान्तप्रसिद्धः इत्यत्राह—

"वेदान्तवाक्यजा[2] विद्या"

इति सूतगीतोक्तेः वेदान्तवाक्यप्रकाश्यं यत् ज्ञानं विद्या तस्यां यो रमते सः वीरः इत्यर्थः ।।१८॥

एवं वेदान्तप्रसिद्धवीरशब्दपूर्वकत्वेन सिद्धदान्तप्रसिशिवतत्त्वज्ञाननिष्ठान् शैवान्, माहेश्वरतत्त्वकर्मनिष्ठान् माहेश्वरांश्च सार्धसूत्रेण स्फुटयति—

---

1 लक्ष्यानुसारिलक्षणव्याख्याया एव व्याख्यापदार्थत्वादिति भावः ।

2 वेध्दान्तवाक्येषु अत्यन्तप्रसिद्धानां महावाक्यानां आध्यात्मिकदिव्यशक्तिसम्पन्नेभ्यो गुरुभ्यः श्रवणेन आन्तराविद्यानाशपूर्वकं ज्ञानोदयसम्भवात् विद्यायाः वाक्यजन्यत्वं भाव्यम् ।

238 [तत्र शैवानां आन्तरपूजारतता]

यथा तथा न भिद्यन्ते शैवाः माहेश्वराः अपि ।
शिवाश्रितेषु ते शैवाः ज्ञानयज्ञरताः नराः ॥२०॥

---

शैवैः वीरशब्दपूर्वकशैवैः वीरशैवैरित्यर्थः । माहेश्वरैः वीरमाहेश्वरैश्च अन्तर्बहिः क्रमात्, शिवलिङ्गार्चनमिति शेषः । कार्यं कर्तुं योग्यम् । एवं स्थिते शिवः निष्कलः शिवः महेश्वरः सकलः सदाशिवश्चेति स्थितौ, इह—

"शिवश्शूली महेश्वरः"

इत्यभिधानगुणपाठे । यथा अत्यन्तं न भिद्यते, तयोः[1] आत्यन्तिकोभेदः नास्ति ॥१९॥

अथ[2] शैवमाहेश्वरयोः अन्तर्बाह्यरूपलिङ्गार्चनं यदुक्तं तत् कीदृश-मित्यत्राह—

[3]तथा शैवाः शिवसम्बन्धिनः वीरशैवाः, माहेश्वरा अपि महेश्वर-सम्बन्धिनः वीरमाहेश्वराश्च न भिद्यन्ते भिन्नाः न भवन्ति ।

अत्र सदाशिवस्य सोपाधिकत्वेऽपि, तदुपाधेः वक्ष्यमाणरीत्या सत्त्व-

---

1 तथेति शेषः । तयोः वीरशैवमाहेश्वरयोः इत्यर्थः पूर्वं इहेति मूलगत-पदस्यार्थः; गुणपाठे इति । इति मूलाशयः इति भावः ।

2 दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह—उत्तरश्लोकेनेति भावः ।

3 पूर्ववाक्यस्थयथाशब्दसापेक्षमर्थं पूरयति तथेत्यादि ।

239 [माहेश्वराणां बहिःपूजारतता]

माहेश्वराः समाख्याताः कर्मयज्ञरताः भुवि ।
तस्मादभ्यन्तरे कुर्युः शैवाः माहेश्वराः बहिः ॥ १॥

---

गुणप्रधानत्वेन नापरत्वात्[1] तयोः आत्यन्तिकभेदो नास्तीति भावः[2]। शिवाश्रितेषु ये नराः पुरुषाः ज्ञानयज्ञरताः हृत्कमलस्थचिल्लिङ्गपूजायां[3] प्रीतियुक्ताः ते शैवाः वीरशैवाः इत्यर्थः ॥२०॥

कर्मयज्ञरताः करकमलस्थक्रियालिङ्गपूजायां प्रीतियुक्ताः माहेश्वराः वीरमाहेश्वराः इति भुवि समाख्याताः प्रख्याताः इत्यर्थः । तस्मात् शैवाः वीरशैवाः अभ्यन्तरे हृत्कमले कुर्युः । ज्ञानकाण्डप्रतिपादितप्राणलिङ्गिशरणाःशिवैक्यस्थलोक्तधर्माचरणं कुर्युरित्यर्थः ॥२१॥

माहेश्वराः वीरमाहेश्वराः[4] बहिः कर्मकाण्डस्थभक्तमाहेश्वर-प्रसादिस्थलोक्तधर्माचरणं कुर्युरित्यनुषङ्गः ।

" ज्ञानं प्रधानं न तु कर्महीनं
कर्मप्रधानं न तु [5]चिद्धिहीनम् ।

---

1 नापरत्वात् अभिन्नत्वात् ।

2 रूपभेददर्शनेऽपि स्वरूपे भेदाभावस्य युक्तियुक्तत्वादिति भावः ।

3 चिल्लिङ्गस्यैव ज्ञानपदार्थत्वात्, यजधातोः 'यजदेवपूजासङ्गतिकरणदानेषु' इति देवपूजार्थे एव निर्वचनात् चिल्लिङ्गपूजारूपार्थसिद्धिरिति भावः ।

4 प्रकाशरूपणेत्यर्थः ।

5 चिद्धिहीनं-ज्ञानहीनम् ।

240 [वीरशैवेषु षड्विधभेदवत्त्वम्]

वीरशैवास्तु षड्भेदाः स्थलधर्मविभेदतः ।
भक्तादिव्यवहारेण प्रोच्यन्ते शास्त्रपारगैः ॥२२॥

---

तस्मात् द्वयोरेव भवेत् प्रसिद्धिः[1]
न ह्येकपक्षो विहगः प्रयाति[2] ।।

''न क्रियारहितं ज्ञानं न ज्ञानरहिता क्रिया ।
अपश्यन्नन्धको दग्धः पश्यन् पङ्गुश्च दह्यते॥''॥[3]

इत्यादिवचनात् शैवमाहेश्वरयोः ज्ञानं क्रिया च[4] समानैवेत्यनुसन्धेयम् । किन्तु बाह्यान्तरपूजाप्रीतिमात्रं विशिष्यते इति ॥

अथ 'वीरमाहेश्वराः' इति प्रसिद्धवीरशैवास्तु भक्तादिशिवैक्यान्तव्यवहारेण स्थलधर्मविभेदतः पिण्डादिवृत्तिज्ञानशून्यान्तस्थलाचारभेदतः षड्भेदाः षड्विधभेदवन्तः इति शास्त्रपारगैः प्रोच्यन्ते इत्यर्थः ॥

अथ तच्छास्त्रभेदं दर्शयति—

---

1 प्रसिद्धिः सिद्धिहेतुत्वमित्यर्थः ।

2 प्रयाति-आकाशे डयते इत्यर्थः । न तु भूमौ गच्छतीति । भूमौ गमने पक्षापेक्षायाः अभावात् ।

3 अन्धस्य दर्शनाभावात्, पङ्गो: उत्तीर्य गमनाशक्तेश्च सङ्कटेपातान्निवारणाशक्यत्वं सूचयते ।

4 समकालक्रियाविषयः इति यावत् ।

7

241 [तत्प्रमाणभूतशास्त्रस्यापि षड्विधत्वम्]

[1]शास्त्रं तु वीरशैवानां [2]षड्विधं स्थलभेदतः ।
[3]धर्मभेदसमायोगात् अधिकारिविभेदतः ॥२३॥

243 [षण्णां स्थलानां क्रमशः नामानि]

आदौ भक्तस्थलं प्रोक्तं ततो माहेश्वरस्थलम् ।
प्रसादिस्थलमन्यत्तु प्राणलिङ्गिस्थलं ततः ॥
शरणस्थलमाख्यातं षष्ठमैक्यस्थलं मतम् ॥२४॥

---

वीरशैवानां शास्त्रं तु विशेषद्योतकस्थलभेदतः स्थलभेदात् धर्मभेदसमायोगात् स्थलोक्तसदाचारभेदसम्बन्धात् अधिकारिविभेदतः[4] स्थलनिष्ठभक्ताद्यधिकारिभेदतश्च षड्विधं षट्प्रकारवत् इत्यर्थः ॥

242 [प्रकृतशास्त्रस्य अनुबन्धचतुष्टयनिरूपणम्]

अस्य शास्त्रस्य वीरशैवधर्मनिष्ठ[5]स्सन्मुमुक्षुः भक्तः अधिकारी । शिवभक्तिलभ्यशिवैक्यरूपपरमुक्तिः प्रयोजनम् ।[6] एकोत्तरशतस्थलं विषयः अस्य ज्ञानस्य शास्त्रेण प्रकाश्यप्रकाशकभाव एव सम्बन्धः ॥

एवं अनुबन्धचतुष्टयवत्[7] एतच्छास्त्रम् ॥ अथ स्थलक्रमं निरूपयति —॥२३॥

स्पष्टम् ॥२४॥

---

1 'शासनात् शास्त्रमुच्यते' इति कार्याकार्यशासकमित्यर्थः ।

2 स्थूलतः भक्त-माहेश्वर-प्रसादि-प्राणलिङ्गि-शरण-ऐक्य रूपेण षड्विधं स्थलमित्यर्थः ।

3 धर्मपदस्य सदाचार एवार्थः ।

4 तत्तद्धर्माचरणयोग्यतावान् अधिकारी ।

5 निष्ठा — अचलनीयश्रद्धा ।

6 षण्णामेव स्थलानां विस्तारः एकोत्तरशतस्थलानि ।

7 मत्वर्थेवतिः, न तु सादृश्यार्थे ।

## १ तत्र प्रथमं भक्तस्थलम्

244 [तत्र प्रथमभक्तस्थलनिरूपणप्रतिज्ञा]

भक्तस्थलं प्रवक्ष्यामि प्रथमं कलशोद्भव ।[1]
तदवान्तरभेदांश्च समाहितमनाः[2] शृणु ॥२५॥

245 [भक्तस्थललक्षणम्]

[3]शैवी भक्तिः समुत्पन्ना यस्यासौ भक्त उच्यते[4]
[5]तस्यानुष्ठेयधर्माणां उक्तिः भक्तस्थलं मतम् ॥२६॥

---

अथैवं उद्दिष्टस्थलेषु क्रमप्राप्तभक्तस्थलं तदवान्तरभेदांश्च वक्ष्यामि शृणु -इत्यन्वयः ॥२५॥

अथ भक्तस्थलं लक्षयति—

यस्य शिवसम्बन्धिनी भक्तिरुत्पन्ना सोऽसौ भक्तः इत्युच्यते । तस्य भक्तस्य अनुष्ठेयधर्माणां आचरणीयवीरशैवधर्माणां, उक्तिः—

''सदाचारः, शिवे भक्तिः लिङ्गे जङ्गम एकधीः ।[6]
[7]लाञ्छने शरणे भक्तिः भक्तस्थलमनुत्तमम् ॥''

इत्याद्युपदेशनं भक्तस्थलमिति मतं संमतमित्यर्थः ॥२६॥

---

1 कलशोद्भवः—अगस्त्यः ।
2 सावधानतयेत्यर्थः ।
3 शिवविषयिणी । शिवे [घ] [ङ]
4 यस्मिन् भक्तः स उच्यते (ख. पा)
5 तेनानु (ख.प.)
6 समानताभावना ।
7 तद्बार्यासाधारणचिह्न ।

अवान्तरस्थलान्यत्र प्राहुः पञ्चदशोत्तमाः ।[1]
पिण्डता पिण्डविज्ञानं संसारगुणहेयता ॥२७॥

247

दीक्षा लिङ्गधृतिश्चैव विभूतेरपि धारणम् ।
रुद्राक्षधारणं पश्चात्[2] पञ्चाक्षरजपस्तथा[3] ॥२८॥

248

भक्तमार्गक्रिया चैव गुरोर्लिङ्गस्य चार्चनम् ।
जङ्गमस्य तथा ह्येषां प्रसादस्वीकृतिस्तथा ॥२९॥

249

अत्र दानत्रयं प्रोक्तं उपाधिनिरुपाधिनी[4]
सहजं चेति निर्दिष्टं समस्तागमपारगैः ॥३०॥

---

246 [एतदवान्तरस्थलानां पञ्चदशानां नामानि]

अथ[5] पिण्डादिभक्तस्थलावान्तरस्थलानि पञ्चदश इत्युक्त्वा तानि उद्दिशति[6]—

अत्र भक्तस्थले उत्तमा आर्याः अवान्तरस्थलानि पञ्चदशेत्याहुः। तानि कानीत्यत्राह–[7] पिण्डतेत्यादि ।

(१) पिण्डस्थलम् ।

(२) पिण्डज्ञानस्थलम् ।

(३) संसारहेयस्थलम् ।

---

1 उत्तमाः पञ्चदशेत्यर्थः ।

2 धारणं चैव (ख प)

3 जपं तथा (क)

4 निरुपाधिकम् (घ)

5 त्यत्र- (ख ग)

6 पिण्डादीत्यस्य अवान्तरपदार्थे अन्वयः ।

7 उद्देशः-शब्दतः परिगणनम् ।

250

एतानि शिवभक्तस्य कर्तव्यानि प्रयत्नतः ।

---

(४) दीक्षालक्षणगुरुकारुण्यस्थलम् ।

(५) लिङ्गधारणस्थलम् ।

(६) विभूतिधारणस्थलम् ।

(७) रुद्राक्षधारणस्थलम् ।

(८) पञ्चाक्षरीजपस्थलम् ।

(९) भक्तमार्गक्रियास्थलम् ।

(१०) गुरुलिङ्गार्चनरूपोभयस्थलम् ।

(११) जङ्गमार्चनलक्षणत्रिविधसम्पत्तिस्थलम् ।

(१२) एतत्त्रयप्रसादस्वीकारलक्षणचतुर्विधसारायस्थलम् ।

१३–१५ अत्र भक्तस्थले प्रोक्तदानत्रयमेव उपाधिमाटम्, निरुपाधिमाटम्, सहजमाटं चेति स्थलत्रयम् च ।[1]

एतान्येव अवान्तररूपपञ्चदशस्थलानि शिवभक्तस्य विधेयानीत्यर्थः ॥

251 [तत्र पिण्डस्थलम्]

(१) भक्तस्थले प्रथमं पिण्डस्थलम्—(1–1)

समस्तवेदागमशिरस्सिद्धाङ्गषट्स्थललिङ्गषट्स्थलान्तर्गतत्वेन समाचरणीयपिण्डतादिवृत्तिज्ञानशून्यान्तैकोत्तरशतस्थलानां मुख्यं पिण्डस्थलं निरूपयति—बहुजन्मकृतैरिति ।

---

1 च इति नास्ति

7a

252 [पिण्डशब्दार्थः]

बहुजन्मकृतैः पुण्यैः प्रक्षीणे पापपञ्जरे[1] ॥२१॥
शुद्धान्तःकरणो[2] देही[3] पिण्डशब्देन गीयते ॥

---

अनेकजन्मकृतधर्मैः मनोवाक्कायकर्मकृतपापसमूहे नष्टे सति निर्मलान्तःकरणवान् आत्मा पिण्डशब्देन कथ्यते इत्यर्थः ।

"पुनर्जन्मान्तरकर्मयोगात्[4] स एव जीवः"[5] इति श्रुतेः उक्तप्रकारेण शुद्धान्तःकरणः स एव जीवः पिण्डाभिधानः[6] इति यावत् ॥

अत्र पिण्डस्थलं साधनम्, वक्ष्यमाणपिण्डज्ञानादिशतस्थलानि साध्यानि। नेत्रे द्वे अपि यथा दर्शनमेकम्[7], पादौ द्वावपि यथा गमनमेकम्[8], तथा —

" आत्मलाभान्न परं विद्यते "

"नात्मनः परा देवता "[9]

इति श्रुत्यागमप्रतिपाद्यपिण्डस्थलं[10] गुरूपदेशस्वानुभवाभ्यां सत् विज्ञेयमिति भावः ॥

---

1 पापाचरणप्रेरके हीनदेहात्मके पञ्जरे निवृत्ते सतीत्यर्थः ।
2 अन्तःकरणं मनः ।
3 जीवः ।
4 जन्मान्तरहेतुभूतकर्मसंबन्धादित्यर्थः ।
5 पुनः पुनः उत्पद्यते इति शेषः
6 भवतीति शेषः ।
78 उभयत्रापि साधयतीति शेषः । 9 परदेवता (ग)
10 प्रतिपाद्यं साधनरूपं पिण्डस्थलं, साध्यरूपं स्थलशतकं चेत्यर्थः ।

शिवशक्तिसमुत्पन्ने[1] प्रपञ्चेऽस्मिन् विकल्प्यते[2] ॥३२॥
पुण्याधिकः क्षीणपापः[3] [4]शुद्धात्मा पिण्डनामकः ॥

एक एव शिवः साक्षात् चिदानन्दमयो विभुः ॥३३॥

---

[253 तत्र विशेषः]

ननु अयं पिण्डशब्दवाच्यः किं लोकसाधारणो वा ?[5] तद्विशिष्टो वा ?[6] इत्यत्राह—शिवशक्तीति।[6a]

शिवशक्तिसमुत्पन्ने—

"लिङ्गाङ्कितं पश्य जगत् भगाङ्कम्" इति व्यासवचनात् शिवशक्तिभ्यामुत्पन्ने अस्मिन् प्रपञ्चे पुण्याधिक्यात् पापक्षयात् शुद्धात्मा निर्मलान्तःकरणः पिण्डनामकः[7] पिण्डाभिधानः पुरुषः विशिष्यते इतरजनापेक्षया श्रेष्ठः भवति इत्यर्थः।

254 [पिण्डसंज्ञकस्य जीवस्य शिवांशत्वम्]

ननु तर्हि अयं पिण्डनामकः शिवो वा तदन्यो वा इत्यत्राह—एक एवेति।

---

1 शिवशक्त्योः समायोगेनोत्पन्ने इत्यर्थः।
2 विकल्प्यते विविधसृष्टिविषयो भवति इत्यर्थः। विशिष्यते ग।ङ)
3 क्षयमार्गे स्थितानि पापानि यस्य सः।
4 निर्मलमनाः।
5 साधारणः—प्रसिद्धः।
6 तद्विशिष्टः तद्विलक्षणः। 6a शिवशक्तीति इति नास्ति (ख)
7 पिण्डनामकः इति नास्ति (ख)

निर्विकल्पो निराकारः निर्गुणो निष्प्रपञ्चकः ।[1]
अनाद्यविद्यासम्बन्धात् तदंशो जीवनामकः[2] ॥३४॥

---

चिदानन्दमयः[3], स्वतन्त्रप्रकाशः[4] अत एव साक्षात् अहमिति देशकालाद्यचुम्बितत्वेन सर्वलोकप्रत्यक्षः ।

" उतैनं गोपा अदृशन् "[5]

इत्यादिश्रुतेः । विभुः पूर्ण ॥

निर्विकल्पः भेदरहितः, अत एव निष्प्रपञ्चकः मायिकप्रपञ्चशून्यः, निराकारः नीलपीताद्याकाररहितः निर्गुणः मायिकसत्वरजस्तमोगुणरहितः शिवः अकुण्ठितेच्छाद्यनेककल्याणगुणपूर्णः परमात्मा एक एव ।[6]

" एकमेवाद्वितीयम् "

इतिश्रुतेः । शिवातिरेकेण पदार्थान्तरं नास्तीत्यर्थः । तथाऽपि अनाद्यविद्यासम्बन्धात् तदंशः– [7]जीवब्रह्मविभागवद्वक्ष्यमाणस्वविमर्शशक्त्यनादिपरिकल्पितमायासम्बन्धात् ज्ञानक्रियसामरस्यात्मनः शिवस्य अंशः चित्क्रियालक्षणः जीवनामकः । जीव इत्यभिधानवान् इत्यर्थः ।

" ममैवांशो जीवलोके जीवभूतः सनातनः ।"

---

1 निष्प्रपञ्चकत्वे निर्विकल्पकत्वं, निर्गुणत्वे च निराकारत्वं हेतुरिति भावः ।
2 तदंशाः जीवसंज्ञकाः (क)
3 चित्स्वरूपः आनन्दस्वरूपश्चेत्यर्थः । नात्र विकारार्थे मयट् ।
4 प्रकाशान्तराप्रकाश्यः ।
5 आगोपालं आजाविपालंच तन्मनीषागोचरः इत्यर्थः ।
6 उक्तं धर्मद्वयं च ब्रह्मैक्ये हेतुः ।
7 अंशशब्दार्थमाह—जीवेत्यादिना ।

255 [शिवस्य जीवान्तःस्थत्वम्.]

देवतिर्यङ्मनुष्यादि[1]जातिभेदे व्यवस्थितः ।
मायी महेश्वरस्तेषां प्रेरको हृदि संस्थितः ॥३५॥

---

इति भगवदुक्तेः,[2]

"अंशो नाना व्यपदेशात्"[3]

इति ब्रह्मसूत्रस्थितेश्च ॥

अथ कथं शिवः तदन्तरङ्गे तिष्ठतीत्यत्राह—

सः जीवः देवतिर्यङ्मनुष्यादिजातिभेदेऽपि अवस्थितः ।[4]

"देवाः षोडशलक्षाणि नवलक्षाणि मानुषाः ।
दशभिर्दशभिस्तद्वत् जलजा विहगा मृगाः ॥
सरीसृपास्तु लक्षाणि एकादश चरेतराः[5] ।
अष्टौ च दशलक्षाणि सप्तजन्मान्यमूनि वै ॥"

इति स्कान्दवचनात् सुरनरोरगादिनानाजातिभेदे तिष्ठतीत्यर्थः । अत्र सरीसृपाः सर्पाः । स्पष्टमन्यत् ॥

महेश्वरः उक्तलक्षणः परशिवः ।

"मायां तु प्रकृतिं विद्यान्मायिनं तु[6] महेश्वरम्" इति श्रुतेः ।

---

1 जातिः जन्म ।

2 भगवद्गीतायां श्रीकृष्णेनोक्तेः इत्यर्थः ।

3 अवच्छेदवादानुसारेणेयमुक्तिरिति केचित् ।
अंशभूतः जीवः परस्परं भिन्न एवेत्यर्थः ।

4 जातिभेदव्यवस्थितः (ग)

5 चरेतराः - स्थावराः

6 मायामायिनं तु—(ख) (ग)

256 जीवस्य शिवाभेदे दृष्टान्ताः]

चन्द्रकान्ते यथा तोयं सूर्यकान्ते यथाऽनलः ।
बीजे यथाऽङ्कुरः सिद्धः तथाऽऽत्मनि शिवः स्थितः ॥३६॥

[1]आत्मत्वमीश्वरत्वं च ब्रह्मण्येकत्र कल्पितम्[2] ।
बिम्बत्वं प्रतिबिम्बत्वं यथा पूषणि[3]कल्पितम् ॥३७॥

---

उक्तलक्षणमायाशक्तिसहितः सन्, तेषां[4]उक्तनानाविधजीवानां प्रेरकः धर्माधर्मगोचरबुद्धिवृत्तिप्रेरकः सन् हृदि तदन्तरङ्गे संस्थितः तिष्ठतीत्यर्थः ॥

ननु कथं शिवः तदन्तरङ्गे तिष्ठतीत्यत्राह—चन्द्रेति ॥

जीवे शिवः तादात्म्यसम्बन्धेन तिष्ठतीत्यर्थः ॥

257 शिवजीवयोः बिम्बप्रतिबिम्बभावोपपत्तिः]

ननु प्रतिबिम्बस्य दर्पणाद्युपाधिकृतत्वेन प्रतिबिम्बत्वं तन्निरूपितबिम्बत्वं च सूर्ये कल्पितमिति वक्तुं युक्तम् । ब्रह्मणि तद्व्यतिरिक्तोपाधिर्नास्तीति तदयुक्तमिति दृष्टान्तोऽयं विषमः इत्यत्र एवंरूपायां स्थितौ जीवेश्वरौ न ब्रह्मातिरिक्तौ, किन्तु—ब्रह्मणि जीवत्वं ईश्वरत्वं च कल्पितमित्याह[5] आत्मत्वमिति ॥

एकत्र एकस्मिन् इत्यर्थः । शिष्टं स्पष्टम् ॥

---

1 अयं श्लोकः घ.पु, पुस्तकयोः नास्ते ।
2 ब्रह्मणि बिम्बत्वं, जगति तत्प्रतिबिम्बत्वं च उपपद्यते इति भावः ।
3 उपाधिभेदादिति भावः । पूषणि—सूर्ये ।
4 उक्तविध (ग)

258 [शिवे कल्पितगुणत्रयसम्बन्धोपपत्तिः]

[1]गुणत्रयविभेदेन[2] परतत्त्वे चिदात्मनि ।
भोक्तृत्वं चैव भोज्यत्वं[3] प्रेरकत्वं च कल्पितम्[4] ॥३८॥

259 [ब्रह्मनिष्ठसामरस्यात्मकविमर्शशक्तितारतम्यात् भोज्यादिसिद्धिः]

गुणत्रयात्मिका शक्तिः ब्रह्मनिष्ठा सनातनी ।
तद्वैषम्यात् समुत्पन्ना तस्मिन् वस्तुत्रयाभिधा ॥३९॥

---

ननु शुद्धचिद्रूपे परमशिवे सात्त्विकादिगुणत्रयसम्बन्धः नास्तीत्युक्तत्वात् कथं उक्तार्थसिद्धिः ?[5] इत्यत्राह—गुणेति ॥

सात्त्विकादिगुणत्रयभेदेन परतत्त्वे चिदात्मनि शुद्धचैतन्ये भोक्तृत्वं भोज्यत्वं प्रेरकत्वं च कल्पितमित्यर्थः ॥

ब्रह्मनिष्ठा—संयोगस्य क्रियापूर्वत्वात्, अन्यतरोभयकर्मजश्च संयोगः तावत् भिन्नदेशस्थितयोरेव उपपद्यते इति[6]ब्रह्मणः बाह्यदेशाभावेन संयोगस्य[7] असम्भवात् अक्रियापूर्वसंयोगस्य अप्रसिद्धत्वात्, विष्णोः[8] अनवच्छिन्नप्रसरत्वेन विच्छेदशून्यतया सन्निधिबन्धानवकाशश्च ।

"रसोऽहमप्सु कौन्तेय ![9] प्रभाऽस्मि शशिसूर्ययोः ॥"

इति भगवदुक्तेः ॥

---

1 अयं श्लोकः घ. ङ, पुस्तयोर्नास्ति ।
2 सत्त्व–रजः स्तमोरूपेणेत्यर्थः ।
3 भोग्यत्वं (क)
4 व्यवहारानुरोधादिति भावः ।
5 भेदोपाधिसिद्धिरित्यर्थः ।
6 ब्रह्मबाह्य (ख)
7 संभवात् (ख) सर्वव्यापकादित्यर्थः ।
8 विष्णोः—विष्ठ्व्याप्तौ इति धातोः ।
9 अपां रसमुदयं सन्—इत्यादि श्रुतेः इत्यर्थः ।

"औष्ण्यं हुताश इव[1] शीतलिमानमिन्दौ[2]
शय्यासु मार्दवमिवाश्मसु कर्कशत्वम् ।
बाह्येषु मोह इव योगिषु च प्रबोधः
स्वातन्त्र्यमस्ति हि नियन्त्रयितुर्महस्तः ॥"

इत्यभियुक्तोक्तेश्च[3] सा[4] सामरस्याभेदलक्षणतादात्म्यसम्बन्धेन वर्तमाना ॥ नातो भेदाभेदयोः विरोधः सार्वत्रिकः ।

सनातनी नित्या शक्ति ज्ञानक्रियासामरस्यात्मिका स्वाभाविकी विमर्शशक्तिः । अस्तीतिशेषः ॥[5]

260 [तेन च ब्रह्मणो जडतापत्तिनिरासः]

अन्यथा प्रकाशरूपत्वेऽपि ब्रह्मणः प्रतिबिम्बनक्षमत्वादिस्वस्वरूप-परामर्शशून्यत्वाच्च[6] स्फटिकमणिमुकुरादिप्रकाशवत् सच्चिदानन्दात्मक-स्वरूपपरामर्शशून्यत्वे जडतापत्तिः अनिवार्यैवेति ।

सा च[7]—

261 [तस्याः शक्तेः स्वरूपम्]

"पराऽस्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया[8] च ॥

1 अग्नाविवेत्यर्थः ।
2 चन्द्रे शीतलत्वमिव ।
3 अभियुक्तेश्च (ख)
4 सा इति नास्ति (ख)
5 ब्रह्मनिष्ठेत्यन्वयः । अत्र 'गुणातीतोऽपीशः त्रिगुणसचिवः त्र्यक्षरमयः' इत्यादि चिन्तामणिवाक्यमपि अनुसन्धेयम् ।
6 शून्याच्च (ख)
7 'च' इति नास्ति (ख)
8 ज्ञानं बलं क्रियाश्चेत्यर्थः ।

इति श्रुतेः, चिदानन्देच्छाज्ञानक्रियादिनामरूपिणी[1] । चकारस्य[2] अनुक्तार्थप्रकाशत्वात ।

तत्र चिदानन्दयोरखण्डत्वेन विक्षोभाभावात्, इच्छादिशक्तीनां सविषयत्वेन विक्षोभसम्भवात्[3], भेदाभेदस्फुरणमयी मयूराण्डरसगतपादपक्ष[4] वर्णवैचित्र्यन्यायेन स्वतादात्म्यक्रोडीकृतचराचरविश्वमयी ।

262 [तस्याः दशाभेदेन गुणत्रयशक्त्यविर्भाविः]

एवंरूपिणी विमर्शशक्तिः अविभागपरामर्शदशायां स्वस्था[5]; विभाग-परामर्शदायां गुणत्रयात्मिका भवति ।

कथमिति चेत् —उच्यते—

तद्विमर्शशक्तेः अंशमात्रे घृतकाठिन्यन्यायेन क्रियांशस्य ज्ञातृता-वियोगात् ज्ञानांशस्य कर्तृतावियोगात् उत्तमकर्तृताविनिर्मुक्तज्ञानांशात् सत्त्वगुणात्मिका विद्याशक्तिः उत्पन्नाभवति । तादृशज्ञातृताविनिर्मुक्त-क्रियांशात् किञ्चित्सत्त्वतमोमिश्ररजोगुणशक्तिः आविर्भवति[6] ।

'जानामि' इति व्यवहारे ज्ञानस्य क्रियाऽभिन्नत्वात्, 'करोमि' इत्यत्र कर्तृताया अपि स्फुरद्रूपत्वात्[7] ज्ञानक्रिययोः वस्तुतः ऐक्येऽपि

---

1 नामारूपिणी (ख) नानारूपिणी (ग)
2 ज्ञानबलक्रिया चेत्यत्रत्यचकारस्येत्यर्थः ।
3 भेदसामान्यस्य विक्षोभमूलकत्वादिति भावः .
4 मयूरपादयोः मयूरपक्षयोश्च वर्तमानेत्यर्थः ।
5 स्वस्था—अविकृतस्वस्वरूपे वर्तमाना ।
6 उक्तन्यायस्य उभयत्र दृष्टान्तत्वं ज्ञेयम् ।
7 स्पष्टं प्रकाशमानत्वादित्यर्थः ।

विभागपरामर्शमहिम्ना[1] ज्ञानं क्रिया न भवति क्रिया ज्ञानं न भवति' इति अन्योन्यभावबुद्धिरेव[2] तमे गुणशक्तिः आविर्भवति[3]।

इत्येवं गुणत्रयात्मिका सती, तद्वैषम्यात्=गुणत्रयतारम्यात् तस्मिन् शुद्धचिद्रूपे परमशिवे वस्तुत्रयाभिधा—भोज्यभोक्तृप्रेरकलक्षण[4]नामरूपक्रियावती सती समुत्पन्ना—प्रतिस्फुरणगत्या मायाख्यया आविर्भूता[5] इति उक्तार्थसिद्धिरिति भावः।

263 [परिणामवादनिरासः]

अनेन—सर्वं विश्वं अण्डरसन्यायेन[6] विभागपरामर्शरूपेणास्तीति सूचितमिति न परिणामवादकृतशङ्कावकाश[7]॥

''चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद्बहिः।
योगीव निरुपादानं[8] अर्थजातं प्रकाशयेत्॥

इति श्रीमदीश्वरप्रत्यभिज्ञोक्तेश्च असदुत्पत्त्यसम्भवात् अतिप्रसङ्गात्,

"नासतो विद्यते भावो नाभावो विद्यते सतः"

इति गीतत्वाच्च[9]॥

---

1 परामर्शः बुद्ध्या तत्त्वार्थसङ्गमनम्। महिमा (ख)
2 बुद्धिस्वरूपेति यावत्।
3 'आविर्भवति' इति नास्ति (ख) (ग)
4 लक्षणं—स्वरूपम्।
5 न तु असतः उत्पत्तिर्विवक्षितेति भावः।
6 पूर्वोक्तरीत्या मयूराण्डरसन्यायेनेति यावत्।
7 किन्तु पूर्वोक्तरीत्या विवर्त एवेति भावः।
8 सर्वं अन्तःस्थितमेव, न तु अपूर्वसृष्टिः इत्यर्थः।
9 अत्र सर्वत्रापि गीतपदेन भगवद्गीतोच्यते।

264 [जीवबन्धनिवृत्तेः ईश्वरेच्छामूलत्वम्]

नन्वेवं चेत् विश्वस्य सत्यतापत्त्या बन्धनिवृत्तिः न स्यात्,

"नाभावो विद्यते सतः"

इति गीतत्वात्—इति चेन्न। आद्यन्तकोटयोः चिदेकरूपत्वेन अकार्यकारित्वात् इच्छायाः भूमि[1]प्रविष्टघटादिवत् मुक्तस्यापि न पुनर्बन्धः। ईश्वरेच्छायाः तत्र नियामकत्वात्[2] इति।

265 [अस्याः शक्तेः अविद्यारूपत्वनिरसनम्]

ननु "अनाद्यविद्यासम्बन्धात्" (३४) इति पूर्वमुपक्रान्तत्वेन,—"[3]अनिर्वचनीयसम्बन्धेन ब्रह्मनिष्ठा सनातनी ब्रह्मसमानसत्ताका गुणत्रयमयी शक्तिः अध्यासरूपिणी अनाद्यविद्याशक्तिः अस्ति, तद्वैषम्यात् तस्मिन् ब्रह्मणि वस्तुत्रयाभिधा वस्तुत्रयमित्यभिधा समुत्पन्ना"— इति व्याख्यातुं[4] शक्यत्वात्, किमित्येतावान् प्रयासः? इति चेन्न।

266

"तदीया परमा शक्तिः सच्चिदानन्दलक्षणा।
समस्तलोकनिर्माणसमवायस्वरूपिणी॥
तदिच्छयाऽभवत् साक्षात् तत्स्वरूपानुकारिणी।"[5]

इति ततोऽपि पूर्वोपक्रान्तवचनविरोधात्।

---

1 इच्छाभूमि—(ख) (ग)
2 तया विना तृणस्यापि चलनासम्भवात्।
3 निर्वचनीय—[ख] [ग]
4 'अनाद्यविद्यासम्बन्धात् तदंशो जीवनामकः' इति एतदध्यायस्य ३४ तमश्लोकभाष्यस्येत्यर्थः।
5 द्वितीयपरिच्छेदे 12-13 श्लोकयोरित्यर्थः। अत्र परमाशक्तिः सच्चिदानन्दलक्षणा विमर्शशक्तिरिति पूर्वोक्तं स्मर्तव्यम्।

267

" ब्रह्माण्डशतकोटीनां सर्गस्थितिलयान् प्रति ।
स्थानभूतो विमर्शो यः तद्भाण्डस्थलमुच्यते ॥"[1]

" पराहन्तासमावेशपरिपूर्णविमर्शवान् ।
सर्वज्ञः सर्वगः साक्षी सर्वकर्ता महेश्वरः ॥"[2]

" [3]विश्वाधारं महासंवित्प्रकाशपरिपूरितम् ।
पराहन्तामयं प्राहुः विमर्शं परमात्मनः ॥"

[4]"यथा चन्द्रे स्थिरा ज्योत्स्ना विश्ववस्तु[5]प्रकाशिनी ।
तथा शक्तिर्विमर्शात्मा प्रकाशे ब्रह्मणि[6]स्थिता ॥"

इति वक्ष्यमाणभाण्डभाजनस्थलवचनविरोधाच्च ।

268 [अस्याः शक्तेः निरंशत्वेऽपि सांशजगदुपादानत्वोपपत्तिः]

अत्र शक्तेः शिवाभिन्नत्वेन निरवयवत्वात् कथं सांशप्रपञ्चोपादानकारणत्वम् सम्भवति ? इति नाशङ्कनीयम् ।[7] यथा परमाणूनां

1 भाण्डस्थले [96] प्रथमः श्लोकः। अत्र विमर्शः चराचरमलविनाशकस्य शिवयोगिनः शब्दब्रह्मरूपविचारः ।

2 तत्रैव चतुर्थःश्लोकः। परत्वादेः शिवजीवसाधारणभूतात्मत्व.क्रमणेन परिपूर्णविमर्शवान् इत्यर्थ; सर्वगः सर्वव्यापकः। साक्षी-सर्वकर्मसाक्षीभूतः ॥

3 विश्वाधारमहा [अ]

4 भाजनस्थले चतुर्थश्लोकः। स्थिरा--एकदेशे स्थिता ।

5 सर्ववस्तु-इत्यर्थः ।

6 प्रकाशे ब्रह्मणि दृक्क्रियात्मकशिवे इति यावत् ।

7 न्यायमते इत्यादिः ।

निरवयवत्वेऽपि तत्कार्यरूपद्व्यणुकादेः सावयवताप्राप्त्या विश्वोपादानत्व-मङ्गीक्रियते, तथा तत्स्वातन्त्र्यपरिकल्पितायाः मायाशक्तेः सावयवत्व-सम्भवात्[1] विश्वोपादानत्वं सम्भवतीति, शक्तेः अघटितघटनापटीयस्त्वात्। [2]अन्यथा—भवदङ्गीकृताविद्याङ्गीकारोऽपि न सम्भवति, [3]तस्याः दोषरूपत्वेन ब्रह्मणस्तदाश्रयत्वे दोषत्वप्रसङ्गात्।

269 ब्रह्मणि शक्तिसंबन्धनिमित्तदोषसंसर्गनिरासः]

ननु—शुक्तिकाशकल[4]भासमानरजतस्य यथा तत्सम्पर्को न विद्यते, तथा ब्रह्मणि भासमानाविद्याया अपि तत्सम्पर्काभावात् नोक्तदोषः इति चेत्—तर्हि जीवेश्वरविवेक एव न स्यात्, अविद्यासम्पर्काभावात्।

270 तत्र बिम्बप्रतिबिम्बभावदृष्टान्तानुपयोगः]

न च प्रतिबिम्बद्वारा तद्विवेकः सम्भवतीति वाच्यम्। मुखादि-बिम्बबाह्यदर्पणादिवत्[5] बिम्बरूपब्रह्मबाह्यदेशे दर्पणस्थानापन्नाविद्यास्थित्यङ्गी-कारासम्भवात् ब्रह्मबाह्यदेशाभावात्। जलप्रविष्टमुखवत् दर्पणरेखावच्च तत्रैव मग्नस्य तत्रैव प्रतिफलनासम्भावात्, ब्रह्मापेक्षया अविद्यायाः अस्वच्छत्वात्।

तथाऽपि दर्पणप्रतिबिम्बितमह्यादिवत् प्रतिबिम्बितपदार्थस्य अर्थक्रिया शून्यत्वेन भोक्तृत्वादेः निराश्रयत्वप्रसङ्गः।

---

1 तथा च औपाधिकत्वमेव, न तु सहजत्वमिति भावः।
2 अथ [ख] [ग]
3 तस्य [ख] [ग] तस्याः अविद्यायाः इत्यर्थः।
4 शकले इत्यर्थः।
5 मुखादिबिम्बवत् बाह्यदर्पणादिवच्चेत्यर्थः।

न च दर्पणप्रतिबिम्बितादित्यस्य नेत्रचञ्चुत्ववत् सम्भवतीति वाच्यम् । तद्वत् बिम्बरूपे ब्रह्मणि भोक्तृत्वादेः अभावात् ।

271

न च हरिद्राचूर्णयोगेन [1]अनुभवनिष्ठलौहित्यभासनमिव सम्भवतीति वाच्यम् । तद्वदविद्याप्रतिबिम्बयोः साक्षाद्वस्तुत्वासम्भवात्, संयोजकान्तरशून्यत्वाच्च, मुख्यप्रकाशस्य असङ्गतत्वात् । अनेनैव लोहमणिदृष्टान्तस्यापि दूरीकृतत्वात् ।

तथापि प्रतिबिम्बस्य दर्पणाद्युपाधिनिबन्धनत्वेन निश्चिततया, मायाकार्यत्वेन मिथ्यात्वात् प्रत्यगैक्यं[2] न सम्भवतीति—

"तत्त्वमसि"

इत्युपदेशः निरर्थक एव स्यात् ।

ननु अविद्यानिवृत्तिद्वारा तस्यापि निवृत्तिः जायते इति इदमेव प्रत्यगैक्यमिति चेत्—आत्महानिः[3] अपुरुषार्थः इति कस्यापि भवदभिमतमुक्तौ प्रवृत्तिरेव न स्यात् इति संक्षेपः ॥

272 ब्रह्मणि अविद्यावैशिष्ट्यानुपपत्तिः]

अथ तद्विशिष्टत्वमपि न सम्भवति । दोषित्वप्रसक्त्या ब्रह्मणस्तत्सम्पर्काभावादित्युक्तत्वात् । तदपि[4]अंशे वा ? साकल्ये वा ? नाद्यः ।

---

1 अनुभयनिष्ठ [ख] [ग]
2 जीवब्रह्माभेदः इत्यर्थः ।
3 तथविधाभेदस्य शून्यरूपत्वादिनिभावः ।
4 तथापि [ख[ [ग]

ब्रह्मणो निरंशत्वेन ऊर्ध्वाधस्तिर्यग्भागभेदशून्यत्वात् । कल्पितांशभेदोऽपि न सम्भवति । कुत्र स्थित्वा कल्पयत्यविद्येति वक्तुमशक्यत्वात्[1] ब्रह्मबाह्यदेशाभावात् । न च निरंशेऽप्याकाशे नक्षत्रादिस्थितिरिव सम्भवतीति वाच्यम् । तस्याः वाय्वाधारत्वात्, आकाशस्यापि जन्यद्रव्यत्वेन सांशत्वाङ्गीकारेण तद्दृष्टान्तस्य अनुभयवादिसिद्धत्वाच्च ।

273 [अविद्यायाः निर्वचनीयत्वासम्भवोपपादनम्]

ननु–अघटनघटनापटीयसी सा[2] इति चेत्, सत्यम् । तद्भावस्य[3] चैतन्याश्रयबलाधीनत्वेन उक्तरीत्या तदसम्भवात् । अन्यथा चैतन्यं खण्डितमेव भवेत्, साङ्ख्यमतप्रवेशापत्तिश्च । [4]नापि द्वितीयः। शुद्धाशुद्ध-विभागासम्भवात् ।

ननु-संसारावस्थायां अशुद्धत्वम्, मुक्त्यवस्थायां शुद्धत्वम्—इति चेन्न ।

"जीव ईशो विशुद्धा चित्[5]
तथा जीवेशयोर्भिदा ।
अविद्यातच्चितोर्योगः
षडस्माकमनादयः ॥"

इति संसारावस्थायामेव शुद्धाशुद्धविभागस्य अङ्गीकृतत्वात् ।

---

1 विज्ञातुमशक्यत्वात् (ख) (ग)
2 सा अविद्या मायाशक्तिः ।
3 अघटितघटनापटीयस्त्वस्य
4 तद्विशिष्टत्वस्य अंशे असंभवमुपपाद्य साकल्येऽपि असम्भवं उपपादयति–नापीति ।
5 जीव ईशो शुद्धचित्तिः (ख)

274 [अखण्डाविद्याङ्गीकारस्यायुक्तत्वम्]

[1]नन्वियं निर्वक्तुमशक्यत्वेऽपि–

"तम आसीत्"

इत्यादिश्रुत्यादिप्रमाणबलात्—अविद्या[2] अङ्गीकरणीयैव इति चेत्—तेषां श्रुत्यादिप्रमाणानां सत्यत्वप्रसङ्गः। प्रमाणप्रमेययोः घटं प्रति चक्षुरादिरिव तद्विजातीयतायाः अङ्गीकरणीयत्वात्।

न च व्यवसायं प्रति अनुव्यवसायस्य प्रामाण्याङ्गीकारात् नायं नियमः इति वाच्यम्। ज्ञानस्य ज्ञातृविश्रान्तत्वेन कदाऽपि[3] इदमिति प्रमेयपदनिष्ठत्वाभावेन अनुव्यवसायस्य व्यवसायभूत[4] घटहृदयङ्गमीकरणप्रवीणत्वात्। अन्यथा व्यवस्थाहानिः, अनवस्थापत्तिः। घटोऽपि घटान्तरविषयः स्यात् इति अतिप्रसङ्गश्चेति, तद्दृष्टान्तस्य अनुभयवादिसिद्धत्वात्।

275 [अविद्यायाः मिथ्यात्वानुपपत्तिः]

अविद्यायाश्च सत्यत्वप्रसङ्गः, अनादिभावत्वेन अङ्गीकृतत्वात्।

न च अप्रयोजकोऽयं हेतुः[5]। यदि सत्यत्वं न स्यात्, तर्हि अनादिभावत्वं च न स्यात्, घटवत् इति व्यतिरेकिदृष्टान्तस्यापि विद्या-

---

1 नन्वेवं (ख) (ग)

2 श्रुतिस्थतमश्शब्दस्य अविद्यापरत्वेनव्याख्यानात्।

3 तदापि (ग)

4 व्यवसाय भात (ग)

5 हेतुरस्तु साध्यं मास्तु इति अप्रयोजकत्वाशङ्का।

मानत्वात् ॥ ब्रह्मातिरिक्तत्वेनाङ्गीकृतत्वात् असत्कल्पतापत्तिश्च । तद्भिन्नस्य तद्बाह्यतानियमेन अस्तीत्यत्र मानाभावात् । [1]सकलप्रमाणशेषिमहाप्रकाश-बाह्यत्वात् ।

न च घटगतरूपादिदृष्टान्तः । तद्वदसमवेतत्वात् ।[2]

नापि घटाकाशदृष्टान्तः ।

"आत्मन आकाशः सम्भूतः"

इत्यादिश्रुतेः पवनादीनां साक्षात् परम्परया वा तत्कार्यत्वेन तदन्तर्गतत्व-सम्भवात् । नेह तथा । [3]द्वयोरप्यनादित्वात् ।

276

नापि क्षीरनीरन्यायः । क्षीरस्य नीरान्तर्गतत्वात् । नेह तथा[4] । आद्यन्तकोट्योः परस्परबाह्ययोः मध्यकोटौ प्रमात्रा संयोजितत्वेन चैतन्यस्य असङ्गत्वात् तद्वत् सजातीयत्वाभावाच्च ।

यथाकथञ्चिदङ्गीकारेऽपि तस्याः प्रमेयत्वात् । प्रमेयस्य प्रमाद्वारा प्रमातृविश्रान्तिरङ्गीकरणीयेति[5], सा विद्यैव भवेत्, अविद्येति वार्तैव न स्यात् । अन्यथा नष्टघटविषयिणी स्मृतिर्न स्यात् ।

न च संस्कारात् सम्भवतीति वाच्यम् ।

तस्यापि सविषयत्वेनैव[6] आत्मसमवेतत्वात् ।

---

1 श्रुत्यादिसकलप्रमाणप्रसिद्धेत्यर्थः ।

2 गुणगुणिनोः समवायसम्बन्धाङ्गीकारात् ।

3 द्वयोरपि जीवात्मपरमात्मनोः अविद्याब्रह्मणोश्च ।

4 क्षीरस्येत्यादि तथा इत्यन्तं संयोजितत्वेनेत्यनन्तरं दृश्यते (ख) (ग)

5 सा इति नास्ति (ख) (ग)

6 निर्विषयस्य संस्कारस्य असंभवात् ।

### 277 [अविद्यानिरासघट्टनिगमनम्]

एवं च[1] भवद्भिमताविद्यायां मानाभावात् अङ्गीकारेऽपि निर्वाहाभावात्, बाधकाविर्भावाच्च अनुपपन्नत्वेन ब्रह्मणो जडतानिवृत्त्यर्थं बलात्[2] तत्स्वभावभूतविमर्शशक्तेः अङ्गीकरणीयत्वेन, तस्याः विश्वोपादानकरणीभूत मायारूपत्वमुपपादयितुं प्रयासोऽयं सार्थकः इति ।

### 278 [ब्रह्मणि स्वानुभावस्यैव परमप्रामाण्योपपादनम्]

नन्वेवं चेत् ब्रह्मणि किं प्रमाणम्? स्वातिरिक्तमानान्तराभावात्[3]। अन्यथा ब्रह्म असदेव भवेत् इति चेन्न । तस्य स्वप्रकाशत्वेन अहंपरामर्शमयस्वानुभूतिप्रमाणस्य जागरूकत्वात् । विमर्शशक्तेः प्रकाशाभिन्नत्वेऽपि अघटनघटनापटीयस्त्वात् । स्वस्वातन्त्र्यपरिकल्पित[4] सामरस्याभेदसद्भावात् प्रमेयप्रमाणव्यवहारः सम्भवतीति न काचिदनुपपत्तिः ।

स्वातिरिक्तमानान्तरगम्यत्वे तु[5] घटवत् जडत्वापत्तिः । श्रुत्यादिप्रमाणानां—

"चत्वारि वाक्परिमिता पदानि"

इति श्रुतेः आरम्भविवक्षाध्यवसायोक्तिरूपे विमर्शमयत्वेन विभागापरामर्शदशायां तन्माहात्म्यप्रकाशनपरत्वात् । श्रुत्यादिप्रसिद्धाविद्यादिशब्दानां स्वातन्त्र्यपरिकल्पितमायापरत्वसम्भवादिति-सर्वं समञ्जसम् ।

---

1 च इति नास्ति (ख) (ग)

2 अन्यथानुपपत्तेरित्यर्थः निवृत्त्यर्थंबलात् (ख)

3 मानान्तरस्य सत्त्वाङ्गीकारे शिवाद्वैतभङ्गप्रसङ्गात् ।

4 सामरस्यरूपस्य अभेदस्येत्यर्थः ।

5 तु इति नास्ति (ख) (ग)

279 [गुणभेदेन जन्यवस्तुविभागः]

परतत्त्वमयोपाधिर्ब्रह्मचैतन्यमीश्वरः ।[1]
किञ्चित् सत्त्वरजोरूपं भोक्तृसंज्ञकमुच्यते ।
अत्यन्ततामसोपाधिः[2] भोज्यमित्यभिधीयते[3] ॥४०॥

280 [तस्य वस्तुत्रयस्य भोक्तृभोज्यप्रेरयितृरूपत्वम्]

भोक्ता भोज्यं[4] प्रेरयिता वस्तुत्रयमिदं स्मृतम् ।
[5]अखण्डे ब्रह्मचैतन्ये[6] कल्पितं गुणभेदतः ॥४१॥

---

अथ केन गुणेन किंवस्तुजातम् ? इत्यत्राह—परेति ।
रजोगुणस्य किञ्चित्सत्वतमोमिश्रत्वात्

"चातुर्वर्ण्यं मया सृष्टं
गुणकर्मविभागशः ॥"

इति भगवदुक्तेः । तादृग्रजोगुणमिश्रचैतन्यं भोक्तृजीवचैतन्यमित्यर्थः । अत्यन्ततामसोपाधिविशिष्टचैतन्यं भोज्यरसादिरूपम् ॥ परतत्त्वमयोपाधिः आभ्यां उत्कृष्टत्वेन परतत्वेन परतत्वरूपसत्त्वगुणोपाधिविशिष्टचैतन्य प्रेरकीभूतः महेश्वरः इत्यर्थः ॥४०॥

अथ उक्तमर्थं द्रढयति—[7] भोक्तेति
स्पष्टम् ।४१॥

---

1 इदमर्धं नास्ति (ख)
2 सोपाधि (क)
3 सर्वत्र ब्रह्मचैतन्यमित्येव विशेष्यम् ।
4 भोग्यम् (क)
5 इदमर्धं घ.ङ. पुस्तकयोःनास्ति
6 परब्रह्मपरशिवपर्यायमहालिङ्गचैतन्ये इत्यर्थः
7 दृढयति (ग)

281 [तेषां रूपपरिकल्पनम्]

अत्र प्रेरयिता शम्भुः[1] शुद्धोपाधिर्महेश्वरः ।

[2]संमिश्रोपाधयः सर्वे [3]भोक्तारः पशवः स्मृताः ॥४२॥

282 [तेषां गुणाः पर्यायश्च]

भोज्यमव्यक्तमित्युक्तं [4]शुद्धतामसरूपकम् ।

सर्वज्ञः प्रेरकः शम्भुः किञ्चिज्ज्ञो जीव उच्यते ।

283

अत्यन्तगूढचैतन्यं जडमव्यक्तमुच्यते ॥४३॥

---

अथ तेषां गुणनामान्तराण्याह—

अधिकसत्त्वोपाधिकत्वात् महेश्वरः सर्वज्ञः सुखभोक्ता शम्भुः, किञ्चित्तमोमिश्रत्वात् संहारकृत्यप्रवीणः क्रोधयुक्तः । जीवास्तु किञ्चित्सत्त्वतमोमिश्ररजउपाधिकत्वात्[5] किञ्चिज्ज्ञाः ज्ञानाज्ञानसंमिलिताः अतएव सुखदुःखभोक्तारः । शुद्धतामसोपाधिकं भोज्यं अव्यक्तं प्रकृतिरित्यर्थः । किमिदमव्यक्तम् ? इत्यत्राह—अत्यन्तेति । वृक्षादीनां इन्द्रियप्राणादिशून्यत्वेन केवलजडत्वेऽपि पिपासाया विद्यमानत्वात्, सस्यादीनां शिलादीनां

---

1 प्रेरयिताप्रोक्तः (क) शुद्धोपाधिः शुद्धसत्त्वगुणोपाधिः इत्यर्थः ।

2 समिश्रो (क) सत्त्वरजोगुणमिश्रोपाधय इत्यर्थः ।

3 भोक्तारः समस्ताः जीवाः ।

4 शुद्धमिति केवलपर्यायः । तामसरूपकं=तामसात्मकम् ।

5 रजोपाधिकत्वात् (ख) (ग)

285 [तत्र शुद्धः ऊर्ध्वमाया]

उपाधिः[1] पुनराख्यातः शुद्धाशुद्धविभेदतः ।
शुध्दोपाधिःपरा माया स्वाश्रयाऽमोहकारिणी ॥४४॥

286 [अशुद्धःजीवः]

अशुध्दोपाधिरप्येवं अविद्याऽऽश्रयमोहिनी ।
अविद्या शक्तिभेदेन[2] जीवाः बहुविधाः स्मृताः ॥४५॥

---

वृद्धिदर्शनाच्च अव्यक्तचैतन्यमिति व्यवहारः । अव्यक्त प्रकृतिः माया इति पर्यायः ॥४३॥

284 [मायोपाधेः पिण्डस्थलस्य द्विधा विभागः]

एवं मायागुणभेदरूपोपाधित्रयं प्रदर्श्य, अनन्तरं लिङ्गाङ्गरूपशिव-जीवस्वरूपं सुलक्षयितुं पूर्वोक्तमायोपाधिं द्विधा विभज्य दर्शयति—

पिण्डस्थलं[3] उपाधिः । पूर्वोक्तमायोपाधिः पुनः शुद्धाशुद्धभेदेन द्विधा भवति । तत्र शुद्धोपाधिःपरा[4] माया स्वाश्रयाअमोहकारिणीति । ऊर्ध्वमायेत्यर्थः ॥४४॥

अशुद्धोपाधिः अविद्या आश्रयमोहिनीति । अधोमायेत्यर्थः । अविद्याशक्तिभेदेन—अंशभेदेनेत्यर्थः जीवाः बहुविधाः स्मृताः ॥४५॥

---

1 उपाधिः शिवजीवाख्यनामोपाधिः इत्यर्थः ।

2 अशुद्धमायाशक्तिभेदेनेत्यर्थः ।

3 पिण्डज्ञानस्थलम् (ग)

4 शुद्धोपाधिपरा (ख) (क)

[287 शिवस्वरूपम्]

[1]मायाशक्तिवशादीशः नानामूर्तिधरः प्रभुः ।
सर्वज्ञ. सर्वकर्ता च नित्यमुक्तो महेश्वरः ॥४६॥

288 [जीवस्वरूपम्, जीवानां संसारपरिभ्रमणे हेतुश्च]

[2]किञ्चित्कर्ता च किञ्चिज्ज्ञः बद्धोऽनादि शरीरवान्[3]
अविद्यामोहिताः जीवाः ब्रह्मैक्यज्ञानवर्जिताः ॥४७॥

---

ईशः शुद्धोपाधिमहेश्वरः मायाशक्तिवशात् महामायाशक्तिवशात् सद्योजातादिनानामूर्तिधरः जीवानां बुद्धिप्रेरकः प्रभुः कर्तुमकर्तुमन्यथाकर्तुं च[4] समर्थः सर्वज्ञः सदसत्सकलपदार्थविषयकानादिज्ञानशक्तिमान् सर्वकर्ता च सकलप्रपञ्चनिर्माणनिमित्तकारणीभूतः नित्यमुक्तः आणवाद्यनादिमलसम्बन्धरहितः । सर्वज्ञकर्ता च ।

"सर्वज्ञः पञ्चकृत्यसम्पन्नः सर्वेश्वर ईशः" इति वृद्धजाबालश्रुतेः ॥४६॥

अथ जीवस्वरूपमाह—किञ्चित्कर्तेति । किञ्चित्कर्ता किञ्चिज्ज्ञः बद्धः आणवाद्यनादिमलपाशबद्धः । ईशप्रेरितः स जीवः अनादिशरीरवान् अनादितः प्राप्तशरीराभिमानवान् ।

तच्च—

---

1 शुद्धमायाशक्तिवशादित्यर्थः ।
2 अथेदानीं क्रमेण शिवजीवयोः लक्षणमाह—
3 नादिःशरीरवान् (क)
4 च इति नास्ति (ग)

289

परिभ्रमन्ति संसारे निजकर्मानुसारतः ।
देवतिर्यङ्मनुष्यादिनानायोनिविभेदतः[1] ॥४८॥

290

"'ज्ञाज्ञौ[2] द्वावजावीशनीशौ
अजो ह्येको [3]भोक्तृभोगार्थयुक्तः ॥"
"अनीशश्चात्मा[4] बध्यते भोक्तृभावात्
ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥"

इति श्वेताश्वतरश्रुतेः ।

"अनादिमलसम्बन्धात्
कीञ्चिज्जूज्ञोऽणुर्मयोदितः ।
अनादिमलमुक्तत्वात्[4]
सर्वज्ञोऽसौ शिवः स्मृतः ॥"[5]

इति किरणागमोक्तेश्च ॥

एवं रूपाः जीवाः अविद्यामोहिताः सन्तः ब्रह्मैवयज्ञानवर्जिता "अहं ब्रह्मास्मि" इति तादात्म्यज्ञान(वर्जिताः) शून्याः सन्तः निजकर्मानु· सारतः देवतिर्यङ्मनुष्यादिनानायोनिभेदमधिगम्य संसारे परिभ्रमन्तीत्यर्थः ॥

---

1 विशेषतः (क)
2 तद्ज्ञाज्ञौ (क) (ख) 'भोक्तृ' इतिनास्ति (ख)
3 अनीशस्वात्मा (ख)
4 युक्तत्वात् (क)
5 सौ तवः शिवः (क)

292 [भ्रमणस्य च चक्ररूपता]

चक्रनेमिक्रमेणैव भ्रमन्ति हि शरीरिणः ।
जात्यायुर्भोगवैषम्यकारणं कर्म केवलम्[1] ॥४९॥

294

एतेषां देहिनां साक्षी[2] प्रेरकः परमेश्वरः ।
एतेषां भ्रमतां नित्यं कर्मयन्त्रनियन्त्रणे ॥५०॥

---

291 [सद्वादेन जीवानां संसारसम्बन्धोपपत्तिः]

अत्र सृष्टेः प्राक् कर्माभावात् कथम् ? इति नाशङ्कनीयम् । सद्वादमर्यादया सर्वं विश्वं अण्डरसन्यायेन परब्रह्मणि अविभागपरामर्शात्मना अस्तीति अङ्गीकृतत्वात् ॥

अथ कथ भ्रमन्तीत्यत्राह—

रथाङ्गमस्तकगतलोहवलयवत् भ्रमन्तीत्यर्थः ॥४९॥

293 [कर्मातिरिक्तेश्वराङ्गीकारे हेतुः]

ननु जीवाः कर्मानुसारेण परिभ्रमन्ति, तेषां जात्यायुर्भोगवैषम्यकारणं केवलं कर्मैवेत्युक्तत्वात् ईश्वरः किमर्थं अङ्गीकरणीयः ? इत्यत्राह—

कर्मसूत्रबद्धे संसारचक्रे सदा परिभ्रमतां एतेषां कर्मणामिति शेषः ।

---

1 'यथानादिमलस्थस्य कर्माप्येवमनादिकम्' इति किरणागमवाक्यानुसारेणैव मुक्तम् ।

2 'यथार्कः पङ्कजं नित्यं बोधसंशोषणादिभिः कर्मभिः बोधकार्यख्यां लभतेऽत्र तथा शिवः'" इतिपौष्करानुसारेणैवमुक्तम् ।

295 [तत्रैव हेत्वन्तरं च]

देहिनां प्रेरकः शम्भुः हितमार्गोपदेशकः ।
पुनरावृत्तिरहितमोक्षमार्गोपदेशकः ॥५१॥[1]

296 [ईश्वरेण जीवानां बन्धमोचनविधिः]

स्वकर्मपरिपाकेन प्रक्षीणामलवासनः ।
शिवप्रसादात् जीवोऽयं जायते शुद्धमानसः ॥५२॥

---

परमेश्वरः प्रेरकः । कर्मणां जडत्वेन प्रेरकत्वासम्भवात् । प्रेरकत्वेन साक्षित्वेन च ईश्वरः अङ्गीकरणीयः इत्यर्थः ॥५०॥

अथवा अस्य नैतावन्मात्रम् । विशेषोऽप्यस्तीत्याह—

स्पष्टम् ॥५१॥

कथमित्यत्राह—

अयं जीवः स्वकर्मपरिपाकेन[2]—

"विज्ञानयोगसंन्यासैः
भोगाद्वा कर्मणः क्षयः ॥"

इतिशिवागमोक्तेः स्वस्वकर्मपरीपाकेन विनष्टमलवासनः सन् शिवप्रसादात् शुद्धान्तःकरणो जायते ॥५२॥

---

1 इदमर्धं (क) पुस्तके नास्ति ।
2 स्वबन्धकमोचकर्मणोः क्षयेणेत्यर्थः ।

297

शुद्धान्तःकरणे जीवे शुद्धकर्मविपाकतः ।
जायते शिवकारुण्यात् प्रस्फुटा[1] भक्तिरैश्वरी ॥५३॥

298 [पिण्डस्वरूपनिरूपणेन पिण्डस्थलनिगमनम्]

जन्तुरन्त्यशरीरोऽसौ
पिण्डशब्दाभिधेयकः[2] ॥५४॥

(२) ॥ भक्तस्थले पिण्डज्ञानस्थलम् ॥ (१–२)

॥ इति पिण्डस्थलम् ॥१॥

——•——

---

तस्मिन् शुद्धकर्मविपाकतः श्रुत्यागमोक्तशुद्धकर्मपरिपाकवशात् शिवस्य कृपा भवति । शिवविषयिणी भक्तिः प्रस्फुटा भवति । तद्द्वारा मोक्षमार्गोपदेशः इत्यर्थः ॥५३॥

एवं उत्पन्नशिवभक्तिमान् चरमदेही[3] पिण्डशब्दाभिधेयः इत्युक्त्वा पिण्डस्थलं समापयति—

असौ जन्तुः एवमुत्पन्नशिव[4]भक्तिमान् जीवः अन्त्यशरीरः—
"तदस्य तृतीयं जन्म"
इति श्रुतेः चरमशरीरवान् सन् पिण्डशब्दाभिधेयकः पिण्डशब्दाभिधानवान् इत्यर्थः ॥५४॥

——o——

---

1 प्रस्फुटा–उत्तमोत्तमप्रकारा ।
2 भिधेयतः (ख)
3 इतःपरंजन्मभावात् ।
4 उत्पन्नशिव इति नास्ति(ख)

300 [पिण्डज्ञानिस्वरूपम् । तदितराणां स्वरूपं च]

शरीरात्मविवेकेन[1] पिण्डज्ञानी स कथ्यते ।
[2]शरीरमेव चार्वाकैः[3] आत्मेति परिकीर्त्यते ॥१॥

301

इन्द्रियाणां तथाऽऽत्मत्वं अपरै[4] परिभाष्यते ।
बुद्धितत्त्वगतैः[5] बौद्धैः बुद्धिरात्मेति गीयते ॥२॥

---

299 [पिण्डज्ञानस्थलनिरूपणम्]

अथ[6] पिण्डज्ञानस्थलं निरूपयति । ननु शरीरात्मविवेकः [7]किमित्यपेक्षितः ? इत्यत्राह—

शरीरात्मविवेकेन शरीरशरीरिणोर्विवेकेन पिण्डज्ञानी इति शास्त्रज्ञैः कथ्यते इत्यर्थः । एवंविधवादिभिः आत्मतत्त्वस्य सन्दिग्धत्वात्

"सन्दिग्धेऽर्थेन्यायः प्रवर्तते"

इति शास्त्रकृद्भिः अङ्गीकृतत्वात् शरीरात्मत्वे[8] विवेकः] आवश्यकः इति भावः[6] ॥२॥

---

1 शरीरात्मनोः भेदज्ञानेन ।
2 अथ शरीरात्मविषये मतभेदानाह—
3 चारुवचना एव चार्वाका इति कथ्यन्ते ।
4 अपरैः चार्वाकैकदेशिभिः ।
5 बुद्धितत्त्वविचारकैः ।
6 'अथ' इति नास्ति–(ग)
7 किमिति–केन कारणेनेत्यर्थः ।
8 शरीरात्मनोः परस्परभेदविषये इत्यर्थः ।
9 इत्यर्थः—(ख) (ग)

302 [शरीरात्मविवेकोपायः]

नेन्द्रियाणां न देहस्य न बुद्धेरात्मता भवेत्[1] ।
अहंप्रत्ययवेद्यत्वात् अनुभूतस्मृतेरपि[2] ॥३॥

303

शरीरेन्द्रियबुद्धिभ्यः व्यतिरिक्तः सनातनः ।
आत्मास्तीति विवेको[3] यः पिण्डज्ञानी स कथ्यते[4] ॥४॥

---

ननु[5] कथं तद्विवेकः ? इत्यत्राह—

304 [आत्मनि शरीरादिभेदज्ञानसाधनविचारोपपादनम्]

305 [तत्र विषयात्मवादः]

अयं भावः—

गृहक्षेत्रादिनाशे सति दुःखदर्शनात्, तदभिवृद्धौ सुखातिशयात्,[6] गृहक्षेत्रादिकमेवात्मा इति विषयात्मवादिनो[7] लौकिकाः मन्यन्ते ।

306 [शरीरात्मवादः]

ततोऽपि समाधिकविवेकभाजः गृहक्षेत्रादीनां मृगपक्षिसरिद्गिरिग्रामादिविवेकाभावात् शरीरस्य तादृग्विवेकसद्भावात् शरीरमेवात्मा इति चार्वाकाः मन्यन्ते ।

---

1 'नात्मता' इति प्रत्येकं संबध्यते ।
2 अनुभूता स्मृतेरपि (क)
3 आत्मास्मीति विवेकी (क)
आत्मस्थितिविवेकी (ख) ग
4 स गीयते (क)
5 'ननु' इति नास्ति (ख)
6 अतिशयदर्शनादिति यावत् ।
7 भूतात्मवादिनः इत्यर्थः ।

307 [प्राणात्मवादः]

शरीरे प्राणवायुपरिस्पन्दाभावे ज्ञानानुदयात् न शरीरम्,प्राण[1] एवात्मा इति केचित् वदन्ति ।

308 [इन्द्रियात्मवादः]

सुप्तिकाले प्राणस्पन्दस्य विद्यमानत्वेऽपि इन्द्रियव्यापाराभावेन ज्ञान-शून्यत्वात् इन्द्रियमेवात्मेत्यपरे ।

अत्र इन्द्रियाणां बाहुल्यात्–इन्द्रियसमूहः आत्मेत्युच्यते वा ? व्यष्टिरूपस्यात्मत्वमुच्यते वा ? इति विकल्पे[2] नाद्यः । तत्र एकस्य द्वयोर्वा नाशे समुदायनाशेन ज्ञानानुदयप्रसङ्गात् ।। न द्वितीयः ।

"जलमिदं मधुरं स्वच्छं च"[3]

इति प्रतीतिर्न स्यादिति । एकैकार्थप्रकाशकत्वाद्व्यष्टेरिति ।।[4]

309 [बुद्ध्यात्मवादः]

एवं शरीरादेः ज्ञानशून्यत्वेन जडत्वात् आत्मत्वं न सम्भवतीति बुद्धिरेवात्मा । अत्र–बुद्धेः चक्षुरादिकरणसाध्यत्वात्[5] करणानां कुठारादिवत् कर्त्रधीनत्वात् बुद्ध्युत्तीर्णः कश्चित् कर्ता अङ्गीकरणीयः–इति नाशङ्कनीयम् । करणजन्यस्य जडत्वनियमेन बुद्धेर्जडतापत्त्या अर्थग्रहणापटुत्वात् । न चे-

1 सन्ततं स्वयंचलनकर्मा प्राणो वायुः ।
2 विकल्पः (ख) (ग)
3 स्वच्छं मधुरं च (ख) (ग)
4 'इति' इति नास्ति ख. (ग)
5 साध्यत्वात्–जन्यत्वात् ।

ष्टापत्तिः । जडबुद्धेः आत्मनोऽपि जडत्वापत्तेरनिवार्यत्वात् लोकव्यवहारो विलुप्येतेति, भवदभिमतात्मवत् बुद्धिः स्वतस्सिद्धैवेत्यङ्गीकरणीयतया ; प्रथमं घटानुभवः, ततो घटविकल्पः, तदनन्तरं तज्जनितसंस्कारात् भाविकोटिनिष्ठा[1] स्मृतिः, स्मृत्या च[2] लोकव्यवहारः इति भिन्नकालभिन्नाकारभिन्नविषयिणी क्षणिकज्ञानसन्ततिरेव आत्मा इति बुद्धिप्राधान्यवादिनः बौद्धाः वदन्ति ।

310 [तन्निरसनम्]

अत्रोत्तरम् — [3]अहंप्रत्ययेत्यादि।। 'आत्माऽस्तीति' 'मम शरीरम्' 'ममेन्द्रियम्' 'मम बुद्धिः' 'मम स्मृतिः' 'शरीरी अहम्' 'स्फुटेन्द्रियोऽहम्' 'जानामि' 'स्मरामि' इति शरीरेन्द्रियबुद्ध्युत्तीर्णः[4] अहंप्रत्ययाधीनतया स्मृत्यादीनामपि भासमानत्वात् तद्व्यतिरिक्तः कश्चिदात्मा अङ्गीकरणीयः इत्यर्थः ।

311 [बौद्धानां प्रत्यवस्थानम्]

ननु — अहंप्रत्ययस्य अस्माभिः निर्विकल्पकसविकल्पकलक्षण[5] ज्ञानद्वयान्तर्गतत्वेनाङ्गीकृतत्वात् न तद्व्यतिरिक्तः । न च तर्हि-अयं आत्मव्यतिरिक्तं न किञ्चिद्विकल्पयतीति आत्मा सिद्ध एव[6] इति वाच्यम्। 'स्थूलोऽहम्'

---

1 भविष्यन्निश्चयात्मकज्ञानविषयीभूतेत्यर्थः ।
2 'च' इति नास्ति (ख)(ग)
3 अत्र सः श्लोकः एव पुनः पूर्णतया पठितः (ख) (ग)
4 उत्तीर्णः इत्यस्य उत्तरत्र आत्मेत्यनेनान्वयः ।
5 धर्मिमात्रविषयकं निर्विकल्पकम् । धर्मिधर्मोभयाविषयकं सविकल्पकम्।
6 'एव' इति नास्ति—(ख)

'कृशोऽहम्' 'सुख्यहम्' 'दुःख्यहम्' इति रूपवेदना[1]-सन्तानसंस्पर्शित्वेन शरीरादीन् विकल्पयतीति ॥ तस्मात् अस्मदङ्गीकृतरूपविज्ञानवेदनासंज्ञा[2] संस्कारलक्षणपञ्चसन्तानोत्तीर्णः शरीरादिसन्तानमूर्धन्योऽपि अहंप्रत्ययः नात्मा भवितुमर्हति । रूपवेदनासन्तानसंस्पर्शित्वेन अनित्यत्वात् । सुप्तिमूर्च्छादौ अभावाच्च । नच—'घटमहं जानामि' इत्यत्र वेद्यरूपकर्मप्रकाशात् वेदना-रूपज्ञानप्रकाशाच्च उत्तीर्णत्वेन भासमानत्वात् अहंप्रत्ययः आत्मानमेव विकल्प-यतीति वाच्यम् । तस्य अहंप्रत्ययव्यतिरेकेण अदृश्यत्वात् । अहंप्रत्ययस्य च[3] अनित्यत्वात् । यदि–प्रत्ययस्य सविषयत्वान्यथानुपपत्त्या तद्व्यतिरिक्तः आत्मा अनुमीयते–तर्हि कोऽयमनुमाता ? अहंप्रत्ययो वा? तद्व्यतिरिक्तो वा ? नाद्यः । अनित्ये अहंप्रत्ययस्य अनुमातृताङ्गीकारेण अस्मन्मत[4]प्रवेशापत्तेः । न द्वितीयः ।[5] तद्व्यतिरिक्तस्यानुमातुरदृश्यत्वात् । यदि दृश्यः — तर्हि तस्य बुद्धितुल्यत्वप्रसङ्गात् । तस्मात्[6] बुद्धिरेव आत्मा–इति चेत्—

312 [तन्निरसनम्]

मैवम् ॥ बुद्धेः क्षणिकत्वेन, भिन्नकालभिन्नविषय-भिन्नाकारत्वेन अङ्गीकृतत्वात् ।

"नीलं पीताद्भिन्नम्" "पीत नीलाद्भिन्नम्"

"नीलमहं जानामि" "पीतमहं जानामि"

---

1 वेदना ज्ञानभेदः ।

2 रूपनिवेदनसंज्ञा न विज्ञान-(ख)

3 'च' इति नास्ति (ख)

4 अस्मन्मतं -आस्तिकमतम् ।

5 न द्वितीयः इति नास्ति (ख)

6 तस्मात् इति नास्ति (ख)

"योऽहं बाल्ये पितरावन्वभूवम्, स एवाह इदानीं पुत्रदारानन्नुभवामि" इति एकसंविल्लग्नतया[1] बाह्याभ्यन्तरानुसन्धानासम्भवात्, क्षणद्वयावगाहिसंविदन्तरानङ्गीकारात्; स्मृतेः स्वसमानविषयताव्यवस्थापकत्वेन संस्कारस्य कृतार्थत्वात्,[2] स्मृतिजनकं न कञ्चित्पश्यामः इति स्मृतेः गगनकुसुमायमानत्वेन तन्मूलकस्य सर्वस्यापि लोकव्यवहारस्यउच्छित्तिप्रसङ्गाच्च ॥[3]

313 [आत्मनोऽतिरिक्तत्वसिद्धिः ।

तस्मात् नित्यः कश्चिदात्मा अनुसन्धाता ज्ञानस्मृत्यपोहनशक्तिमान् अङ्गीकरणीयः ।

"मत्तः स्मृतिः ज्ञानमपोहनं च"[4]

इति एतदभिप्रायेणैव भगवताऽपि गीतवात् ।

314 [आत्मनः अहं प्रत्ययस्वरूपत्वम् ]

स च अहंप्रत्ययस्वरूप एव । तद्भिन्नस्य अदृश्यत्वादिति [5]सूक्तत्वात् । तस्य सुप्तिमूर्च्छादौ अभावान्नानित्यत्वमाशङ्कनीयम् । तदा तस्य शून्यस्थाननिमग्नत्वेन तदीयस्वप्रकाशस्य तिरोहितत्वात् । अन्यथा—उत्थितस्य "सुखमहमस्वाप्सम्" इति सुखस्मृत्यनुदयप्रसङ्गः । स्मृतेः अनुभवमूलत्वात्, स्वतन्त्रांशीभूतप्राणवायुपरिस्पन्दस्य विद्यमानत्वेन तस्य

---

1 अनुवृत्तैकज्ञानसम्बन्धितयेत्यर्थः ।
2 शान्तत्वादित्यर्थः ।
3 सम्पूर्णनाशप्रसंगाच्चेत्यर्थः ।
4 अपोहनं-विस्मृतिभेदः ।
5 अनुभवसिद्धत्वाभावादित्यर्थः ।

316 [पिण्ड-पिण्डज्ञ विवेकौ]

नश्वराणि शरीराणि नानारूपाणि कर्मणा ।
आश्रितो नित्य एवासौ इति जन्तोर्विवेकिता ॥५॥

हानादानादिरूपतया[1] कर्तृनिरूपितत्वात्, कर्तुः[2] ज्ञानपुरस्सरत्वात् इति सङ्क्षेपः ।

315 [आत्मसाधकमार्गान्तरनिरसनम् ]

अनेन[3]—"नन्वेतावता शरीरी कश्चित् जीवात्मा सिद्धः, न तत्प्रेरकः ईश्वरः—इत्याशङ्क्य,[4] लोके विदारणादिक्रियाणां कुठारादिकरण-साध्यत्ववत्, करणानां कर्मेन्द्रियाधीनत्वात्, तेषां ज्ञानेन्द्रियाधीनत्वात्, तेषां [5]अन्तरिन्द्रियाधीनत्वात्, तेषां[6] शरीर्यधीनत्वात्, तस्य देशकालादि-परतन्त्रत्वात्, स्वतन्त्रेण विना न सम्भवतीति व्यवहारान्यथानुपपत्त्यैव सोऽपि सिद्धः" इति वदन्तः वैयासिकाश्च प्रत्युक्ताः इति– मन्तव्यम् ।

कर्मवशात् प्राप्तानि नानारूपाणि शरीराणि नश्वराणीति जीवस्य विवेकिता पिण्डविवेकः । तादृक्पिण्डाश्रितो जीवः नित्यः इति विवेकिता पिण्डज्ञविवेकः ॥५॥

---

1 त्यागस्वीकारादिरूपतयेत्यर्थः ।
2 कर्तृ (ख)
3 'अनेन' इति नास्ति (ख)
4 'इत्याशंक्य' इति नास्ति (ख)
5 अन्तरिन्द्रियं=मनः ।
6 शरीरी=आत्मा ।

317 [स्वमतस्य साङ्ख्याद्भेदनिरूपणम्]

शरीरात् पृथगात्मानं आत्मभ्य[1]: पृथगीश्वरम् ।
प्रेरकं यो विजानाति पिण्डज्ञानीति[2] कथ्यते ॥६।

इति पिण्डज्ञानस्थलम्

—०—

---

ननु अयं विवेकः साङ्ख्यमतसदृशो जात इत्यत्राह—

स्पष्टम् ॥

अयमेव नित्यानित्यलक्षणक्षेत्रज्ञविवेकः[3] । क्षेत्रज्ञे जीवेप्रेरकत्वेन ईश्वरस्य

"चन्द्रकान्ते[4] यथा तोयम्"

इत्याद्युक्तदृष्टान्तेन तादात्म्येन विद्यमानत्वात् । उक्तं च गीतायाम् ॥६॥

318

"इदं शरीरं कौन्तेय ! क्षेत्रमित्यभिधीयते ।
एतद्यो वेद[5] तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥
क्षेत्रक्षेत्रज्ञयोः ज्ञानं यत्तत् ज्ञानं मतं मम ।
क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत !"

इति ।

---

1 आत्मनः (ख. ग. घ) ।
2 ज्ञानी सः (ख. ग. घ)
3 क्षेत्रज्ञ आत्मा पुरुषः ।
4 चन्द्रकान्तनामकशिलाभेदेत्यर्थः ।
5 वेत्ति–(ग)

## (3) भक्तस्थले–संसारहेयस्थलम् ॥ (1-3)

---

319 [पिण्डज्ञानस्थलनिगमनम्]

एवं—[1]

"सत्येन लभ्यस्तपसा ह्येष आत्मा
सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ।
अन्तश्शरीरे ज्योतिर्मयो हि शुभ्रः
यं पश्यन्ति यतयः क्षीणपापाः ॥[2]

इति मण्डूकश्रुतेः ।

"अशरीरं यदाऽऽत्मानं पश्यति[3] ज्ञानचक्षुषा ।
तदा भवति शान्तात्मा[4] सर्वतो विगतस्पृहः ॥"

इति देवीकालोत्तरवचनाच्च, देहदेहि[5]स्वरूपं अङ्गाङ्गिनोः जीवेश्वरयोः स्वरूपं च विज्ञेयमिति पिण्डज्ञानस्थलम् ।

---

1 एवं इति नास्ति (ख. ग.)
2 क्षीणदोषाः [ख]
3 पश्यन्ति–[ख. ग.]
4 इन्द्रियानधीनजीवनः इत्यर्थः ।
5 देही-जीवात्मा

320 [संसारहेयस्थलनिरूपणम् ]

निरस्तहृत्कलङ्कस्य[1] नित्यनित्याविवेकिनः ।
संसारहेयताबुद्धिः जायते[2] वासनाबलात् ॥१॥

321 [संसारस्य हेयत्वे हेतुः]

ऐहिके क्षणिके सौख्ये पुत्रदारादिसम्भवे ।
[3]क्षयित्वादियुते स्वर्गे कस्य वाञ्छा विवेकिनः ॥२ ॥

---

अथैवंरूपपिण्डज्ञानिनः उत्पद्यमानसंसारहेयस्थलं निरूपयति—

उक्तप्रकारेण अनेकजन्मार्जितसुकृतवशात् प्रक्षीणपापत्वेन शुद्धान्तःकरणस्य नित्यानित्यविवेकिनः पुण्याधिक्येन सत्संस्कारबलात् संसारे त्यागबुद्धिः उत्पद्यते इत्यर्थः॥ १॥

कुतः इत्यत्राह—

पुत्रदारादिजायमानसुखस्य नश्वरत्वं प्रत्यक्षेणानुभूयते । ज्योतिष्टोमादियागजन्यस्वर्गसुखस्यापि—

"ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति"

इति भगवदुक्तेः नश्वरता अवगम्यते[4] । एवंरूपैहिकामुष्मिकसुखयोः

---

1 हृद्गतसर्वविधदोषजालरहितस्येत्यर्थः
2 वासना-जन्मान्तरीयसंस्कारविशेषः ।
3 क्षयित्वं=आशुविनाशित्वम् ।
4 अभियुक्तोक्तेरित्यर्थः ।

322 [सांसारिकदोषोपपादनम्]

जातस्य हि ध्रुवो[1] मृत्युः ध्रुवं जन्म[2] मृतस्य च ।
जन्तुः मरणजन्मभ्यां[3] परिभ्रमति चक्रवत् ॥३॥

323

मत्स्यकूर्मवराहाङ्गैः[4] नृसिंहमनुजादिभिः ।[5]
जातेन निधनं प्राप्तं विष्णुनाऽपि महात्मना ॥४॥

---

नित्यानित्यविवेकिनः कस्य वाञ्छा भवेत्? न कस्यापीत्यर्थः । नश्वरत्वात् हेयताबुद्धिरेव [6]भवेदिति भावः ॥२॥

अथ [7]सांसारिकसुखस्य अनित्यत्वात् परित्यागो युक्तः । संसार एव[8] किमर्थं त्यजनीयः? इत्यत्र दोषान्[9] उद्भावयति—

विश्रान्त्यभावादिति भावः ।

अस्मिन्नर्थे कर्माधीनपुरुषदृष्टान्तमाह—

दुष्टदैत्यनिबर्हणार्थं भक्तानुग्रहार्थं च मत्स्यकूर्मादिशरीरैः सह जातेन

---

1 नियतो (क)
2 तथा जन्म (क)
3 जन्माभ्यां (क)
4 वराहादिरूपैः अङ्गैः शरीरैः ।
5 तत्तद्रूपैः शरीरैः ।
6 हेयबुद्धिरेव (ख)
7 ननु (ख)
8 'एव' इति नास्ति (ख)
9 त्यागहेतून्दोषान् इत्यर्थः ।

324 [सांसारिकाणि त्रिविधतापजन्यदुःखानि]

भूत्वा कर्मवशाज्जन्तुः [1]ब्राह्मणादिषु जातिषु ।
तापत्रयमहावह्निसन्तापात् दह्यते भृशम् ॥५॥

325 [संसारिणि तापानां सार्वदिकत्वम्]

कर्ममूलेन दुःखेन पीड्यमानस्य देहिनः ।
आध्यात्मिकादिना नित्यं कुत्र[2] विश्रान्तिरिष्यते[3] ॥६॥

---

अवतारं धृतवता महात्मना महापुरुषेण कर्माधीनेन विष्णुनाऽपि नारायणेनापि निधनं मरणं प्राप्तम् इत्यर्थः ॥४॥[4]

एवंस्थिते पराधीनो जन्तुः तापत्रयाद्दह्यते एवेत्याह—

दह्यते तप्यते इत्यर्थः ॥५॥

ननु तापत्रयानुवृत्तिविच्छत्तिः[5] अस्मिन् संसारे कदाऽप्यस्ति वा ? न वा ? इत्यत्राह—

कर्ममूलेन आध्यात्मिकादिना दुःखेन सदा बाध्यमानस्य प्राणिनः कुत्र कस्मिन्नधिकरणे विश्रान्तिः विश्रमणं इष्यते=इच्छाविषयीक्रियते ?[6] न क्वापीत्यर्थः ॥६॥

---

1 ब्रह्माणादिषु (क)
2 कुत्र—कस्मिन् काले ।
3 विश्रान्तिराप्यते (घ)
4 इदानीं अस्माभिः अदर्शनादिति भावः ।
5 विच्छित्तिः=विच्छेदनं=नाशः ।
6 सर्वेषु तत्तज्जन्मस्वेव परमसुखत्वभ्रान्तेर्जागरूकत्वात्।

326 [त्रिविधतापस्वरूपोपपादनम्]

[1]आध्यात्मिकं तु प्रथमं द्वितीयं चाधिभौतिकम् ।
आधिदैविकमन्यच्च दुःखत्रयमिदं स्मृतम् ॥७॥

327

[2]आध्यात्मिकं द्विधा प्रोक्तं बाह्याभ्यन्तरभेदतः ।
वातपित्तादिजं दुःखं बाह्यं आध्यात्मिकं[2] मतम्[3] ॥८॥

328

रागद्वेषादिसम्पन्नं [4]आन्तरं परिकीर्त्यते ।
आधिभौतिकमेतद्धि दुःखं राजादिभूतजम् ॥९॥

329

आधिदैविकमाख्यातं ग्रहयक्षादिसम्भवम् ।
दुःखैरेतैरुपेतस्य कर्मबद्धस्य देहिनः ॥

330

स्वर्गे वा यदि वा भूमौ
[5]सुखलेशो न विद्यते ॥१०॥

---

अथ किं तत् तापत्रयम् ? इत्यत्राह— ॥७॥

स्पष्टम् ॥८॥

---

1 अध्यात्मिकं (क)
2 बाह्यं वाध्यात्मिकं मतम् (क)
3 अन्तरं (क)
4 दुःखलेशो (क)

331 [राज्यादिसम्पत्तेरपि तापरूपत्वम्]

तटित्सु [1]वीचिमालासु प्रदीपस्य प्रभासु च ।
सम्पत्सु कर्ममूलासु कस्य वा स्थिरतामतिः ॥११॥

333

मलकोशे शरीरेऽस्मिन् महादुःखविवर्धने ।
तडिदङ्कुरसङ्काशे को वा रुच्येत[2] पण्डितः ॥१२॥

---

अथ राज्यादिसम्पत्तेः[3] सुखं नास्ति वा ? इत्यत्र नास्तीति दृष्टान्तपूर्वकमाह—

विद्युत्सु तरङ्गमालासु दीपशिखासु यथा स्थिरताबुद्धिः नास्ति, तथा कर्ममूलासु सम्पत्स्वपि स्थिरताबुद्धिः विवेकिनो नास्तीत्यर्थः ॥११॥

332 [विवेकिनः शरीरेऽपि विरक्त्युपपत्तिः]

ननु विद्युदादिविलक्षणत्वात् सुखसाधनत्वात् शरीरं वाञ्छाविषयमस्तु इत्यत्र —[3]

"भगवन् ! अस्थिचर्मस्नायुमज्जामांसशुक्रशोणितश्लेष्माश्रुदूषिते विण्मूत्रवातपित्तकफसङ्घाते दुर्गन्धे निःसारे किं कामोपभोगैः"

इति मैत्रेयश्रुत्यनुसारेण आह—

मलकोशे मलमूत्राद्याधारभूते क्षणिके अस्मिन् शरीरे को वा पापपिण्डे विवेकी[5] प्रीतिं कुर्यात् ? न कोऽपि कुर्यात् इत्यर्थः ॥१२॥

---

1 वीचीमालासु (क)
2 को वा मोदेत (घ)
3 सम्पत्तिः (ख)
4 इत्याशङ्कायां उत्तमाहेत्यन्वयः ।
5 पापपिण्डोऽविवेकी (ख)

334

नित्यानन्दचिदाकारं[1] आत्मतत्त्वं विहाय कः ?
विवेकी रमते देहे नश्वरे दुःखभाजने ॥१३॥

335 [विवेकिनः सर्वत्र विरक्त्युपपादनम्]

विवेकी शुद्धहृदयः निश्चितात्म[2]सुखोदयः ।
दुःखहेतौ शरीरेऽस्मिन् कलत्रे च सुतेषु च ॥१४॥

---

ननु शरीरस्यैव परमप्रेमास्पदत्वात् तत्र रुचिरस्तु[3]—इत्यत्राह—

नित्यानन्दस्वरूपस्य आत्मतत्त्वस्य विद्यमानत्वात् तस्यैव परमप्रेमास्पदत्वात् तद्विहाय नश्वरे दुःखपात्रे शरीरे को वा विवेकी रमते ? न कोऽपि रमते इत्यर्थः ॥१३॥

अथ विवेकिनः नश्वरे शरीरमात्रे एव विरक्तिरिति न ; तत्सम्बन्धिषु सर्वेष्वपि विरक्तिः इत्याह—

शुद्धहृदयः निर्मलान्तःकरणः अत एव निश्चितात्मसुखोदयः श्रुतिगुरुस्वानुभवैः निश्चितनित्यानित्यसुखस्फूर्तिमान् विवेकी नित्यानित्यवस्तुविवेकी दुःखहेतौ उक्तलक्षणसकलदुःखकारणे अस्मिन् शरीरे, कलत्रे स्त्रीषु सुतेषु च—[4] ॥१४॥

---

1 ज्ञानस्वरूपमिति यावत् ।
2 निश्चितात्मा (क)
3 रुचिः—रतिः । यथेदानीं वर्तते तथा तस्या एवानुवृत्तिरस्तु इत्यर्थः ।
4 'सुतेषु च' इति नास्ति (ख)

336

सुहृत्सु बन्धुवर्गेषु धनेषु कुलपद्धतौ ।[1]
अनित्यबुद्ध्या[2] सर्वत्र वैराग्यं परमश्नुते ।।१५।।

337 [विरक्तस्य संसारविमोचनाधीः]

विवेकिनो विरक्तस्य विषयेष्वनुरागिणः ।[3]
संसारदुःखविच्छेदहेतौ बुद्धिः प्रवर्तते ।।१५।।

338 [ईश्वरभक्तेः संसारोच्छेदहेतुत्वोक्त्या निगमनम्]

नित्यानित्यविवेकिनः सुकृतिनः शुद्धाशयस्यात्मनः [3]
ब्रह्मोपेन्द्रमहेन्द्रमुख्यविभवेषु[5]अस्थायितां पश्यतः ।

---

[4]एवं सुहृत्सु मित्रेषु बान्धवसमूहेषु कुलपद्धतौ कुलक्रमे धनेषु गोधनादि धनेषु सर्वत्र एतद्व्यतिरिक्तसकलवस्तुष्वपि अनित्यबुद्ध्या परं वैराग्यं अश्नुते-आश्रयतीत्यर्थः ।।१५।।

[5]अथ एवमाद्यनित्यवस्तुविरक्तस्य[6] नित्यवस्तुरागिणः[7] संसारदुःख-विच्छेदहेतौ बुद्धिः उत्पद्यते इत्याह—

स्पष्टम् ।।१६।।

अथ कोऽयं संसारदुःखविच्छेदहेतुः ? इत्यत्र पिण्ड-पिण्डज्ञानस्थला-गर्भीकृत्य वृत्तेनाह—

---

1 अर्थहीनेषु कुलागतसम्प्रदायेषु इत्यर्थः ।
2 अनित्यताबुद्ध्या इत्यर्थः ।
3 परिशुद्धहृदयस्य जीवस्येत्यर्थः ।
4 एवं इति नास्ति (ख)
5 नित्यं वस्तु प्राप्तुं उत्सुकस्येत्यर्थः ।
6 विषयेषु अनुरागंप्राप्य तज्जन्ये दुःखसागरे निमग्नस्येत्यर्थः ।
7 विभवेऽपि (क)

नित्यानन्दपदे निराकृत[1] जगत्संसारदुःखोदये
साम्बे चन्द्रशिरोमणौ[2] समुदयेत् भक्तिः भवध्वंसिनि ॥२७॥

इति श्री वीरशैवधर्मनिर्णये
सिद्धान्तशिखामणौ भक्तस्थले पिण्ड-
ज्ञान-संसारहेयस्थलप्रसङ्गो
नाम[3] पञ्चमः परिच्छेदः
समाप्तः

---

सुकृतिनः निगमागमोक्तधर्मिणः शुद्धाशयस्य निर्मलान्तःकरणस्य आत्मनः पिण्डशब्दवाच्यस्य नित्यानित्यविवेकिनः पिण्डज्ञानिनः ब्रह्मोपेन्द्र-महेन्द्रमुख्यसमस्तदेवसम्पत्सु अस्थायितां क्षणिकत्वं पश्यतः जानतः अत एव संसारहेयबुद्धिमतः नित्यानन्दपदे नित्यपरिपूर्णसच्चिदानन्दाश्रये निराकृतजगत्संसारदुःखोदये साम्बे उमासमेते चन्द्रशिरोमणौ—

"चन्द्रललाटाय कृत्तिवाससे
नमो नमः"

इत्याथर्वणश्रुतेः चन्द्रधरादिनानालीलाविग्रहकारणीभूतमहालिङ्गे भक्तिः अष्टत्रिधा भवध्वंसिनी सती समुदयेत्–प्रकाशयतीत्यर्थः ॥१७॥

---

1 निराकृतं–अनित्यमिति य वत् ।
2 शिखामणौ (क)
3 पिण्डादिस्थलत्रयप्रसङ्गो न म (घ)

इति संसारहेयस्थलम् ।।३।।

—o—

---

अत्र शुद्धान्तःकरणस्य नित्यानित्यवस्तुविवेकिनः ऐहिकामुष्मिकफलभोगविरागद्वारा रागद्वेषादिशब्दाद्यन्तर्बाह्येन्द्रियविषयवैमुख्येन शममादिसम्पत्त्या मुमुक्षुत्वेन संसारदुःखनिवृत्त्यङ्गभूते महालिङ्गे भक्तिः उत्पद्यते इत्युक्तं भवति ।

इति श्रीमत्पदवाक्यप्रमाणपारवारधुरीण
मरितोण्टदार्येण विरचितायाम्
तत्त्वप्रदीपिकायां सिद्धान्तशिरोमणिव्याख्यायां
भक्तस्थले पिण्डज्ञान-संसारहेयस्थल-प्रसङ्गो नाम
पञ्चमः परिच्छेदः समाप्तः ॥

—o—

॥ श्रीशिवाय नमः ॥

# सिद्धान्तशिखामणिः

## षष्ठः परिच्छेदः

### गुरुकारुण्य – लिङ्गधारणप्रसङ्गः

—o—

## (4) भक्तस्थले दीक्षालक्षणगुरुकारुण्यस्थलम् (1-4)

—o—

340 [ उत्तमगुरूपसदनम् ]

ततो विवेकसम्पन्नः विरागी शुद्धमानसः ।
जिज्ञासुः सर्वसंसारदोषध्वंसकरं शिवम्[1] ॥१॥

341

उपैति लोकविख्यातं लोभमोहविवर्जितम् ।
आत्मतत्त्वविचारज्ञं विमुक्तविषयभ्रमम् ॥२॥

---

339 [दीक्षालक्षणगुरुकारुण्यस्थलनिरूपणम् ]

अथ — "तद्विज्ञानार्थं[2] स गुरुमेवाभिगच्छेत्
समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् "

इति मुण्डकश्रुतेः पूर्वोक्तपिण्ड-पिण्डज्ञानसंसारहेयस्थलसम्पन्नः संसारनाशकर-महालिङ्गं जिज्ञासुः श्रीगुरुं उपैतीति, कुम्भजं प्रति[3] दीक्षालक्षणगुरुकारुण्य स्थलं निरूपयति श्रीरेणुकः—

---

1 मङ्गलस्वरूपमित्यर्थः ।

2 सद्गुरुमेव (ख)

3 अगस्त्यं प्रतीत्यर्थः ।

342

शिवसिद्धान्ततत्त्वज्ञं छिन्नसन्देहविभ्रमम् ।
सर्वतन्त्रप्रयोगज्ञं धार्मिकं सत्यवादिनम् ॥३॥

343

कुलक्रमागताचारं कुमार्गाचारवर्जितम् ।
शिवध्यानपरं शान्तं शिवतत्त्वविवेकिनम् ॥४॥

344

भस्मोद्धूलननिष्णातं[1] भस्मतत्त्वविवेकिनम् ।
त्रिपुण्ड्रधारणोत्कण्ठं धृतरुद्राक्षमालिकम् ॥५॥

345

लिङ्गधारणसंयुक्तं लिङ्गपूजापरायणम् ।
लिङ्गाङ्गयोगतत्त्वज्ञं निरूढाद्वैतवासनम् ॥६॥

346

लिङ्गाङ्गस्थलभेदज्ञं श्रीगुरुं शिववादिनम् ॥७॥

---

अत्र–ततः संसारहेयबुद्ध्युत्पत्त्यनन्तरं, शुद्धमानसः निर्मलान्तःकरणत्वेन पिण्डशब्दवाच्यः, विवेकसम्पन्नः शरीरात्मविवेकेन पिण्डज्ञानवान्, विरागी अनित्यसुखवैमुख्येन संसारहेयबुद्धिमान् साधकः, सर्वसंसारदोषध्वंसकरम्–दोषः दुःखमित्यर्थः, सांसारिकसकलदुःखनिवारकम् शिवम्, परब्रह्मापरपर्यायपरशिवमहालिङ्गम् जिज्ञासुः सन् शिववादिनं महालिङ्गस्वरूपमुपदेष्टारम् श्रीगुरुं उपैति इति योजना ॥७।

---

1 निष्ठात्मं (य)

347 [श्री गुरुलक्षणविवरणम्]

सः कीदृशः ? इत्यत्राह—लोकविख्यातं इत्यादिना ।[1] सर्वलोकप्रसिद्धः, लोभमोहविवर्जितः– मोहः अज्ञानमित्यर्थः, आत्मनतत्त्वविचारज्ञः देहेन्द्रियादिवैलक्षण्येन आत्मयाथार्थ्यस्वरूपज्ञः, विमुक्तविषयभ्रमः—

"यस्य यस्य पदार्थस्य या या शक्तिरुदीरिता ।
सा सा सर्वेश्वरी देवी स स सर्वो महेश्वरः ॥"

इति सर्वमङ्गलागमस्थितेः ।

348

"शब्दजालमशेषं तु धत्ते शर्वस्य वल्लभा ।
अर्थजालमशेषं तु धत्ते मुग्धेन्दुशेखरः ॥"

इति वायुसंहितोक्तेश्च सर्वस्यापि विश्वस्य शिवशक्तिमयत्वात्, तयोरभेदात्, विगलितत्रिषयगतभेदभ्रान्तिः इत्यर्थः ।

349

अत एव–निरूढाद्वैतवासनः—दृढीभूताद्वैतसंस्कारविशिष्टः, शिवसिद्धान्ततत्त्वज्ञः– शिवागमसिद्धान्ताभिज्ञः, छिन्नसन्देहविभ्रमः– निराकृतसंशयविपर्ययवान् इत्यर्थः । सर्वतन्त्रप्रयोगज्ञः चतुष्षष्टितन्त्र[2]प्रयोगज्ञः धार्मिकः– शिवधर्मनिष्ठः सत्यवादी च ।

---

1 विख्यात इत्यादिना (ख)

2 चतुष्पष्टिविभेदभिन्नानि तन्त्राणि अन्यत्रागमग्रन्थेषु उक्तानि । इमान्येव क्वचित् कलाशब्देनाप्युच्यन्ते ।

352 [सद्गुरुसेवाविधिः]

सेवेत[1] परमाचार्यं शिष्यो भक्तिभयान्वितः ।[2]
षण्मासान् वत्सरं वाऽपि[3] यावदेष प्रसीदति ॥८॥

---

कुलक्रमागताचारः[4] गुरुवंशक्रमानुगताचारवान् , कुमार्गाचार-वर्जितः कुलप्राप्तसमयाचारवर्जितः,[5] शिवध्यानपरः– शिवलिङ्गचिन्तानिष्ठः, शान्तः– रागद्वेषरहितः, शिवतत्त्वविवेकी–शिवपरशिवस्वरूपज्ञः ।

350

भस्मोद्धूलननिष्णातः– तत्र कुशलः इत्यर्थः । भस्मतत्त्वविवेकी भस्मस्वरूपविवेकवान् । त्रिपुण्ड्रधारणोत्कण्ठः– तत्र उत्सुकः इत्यर्थः । धृतरुद्राक्षमालिकः ।

लिङ्गधारणसंयुक्तः– बाह्यान्तर्लिङ्गधारणवान् , लिङ्गपूजापरायणः– बाह्यान्तर्लिङ्गपूजानिष्ठः । लिङ्गाङ्गयोगतत्त्वज्ञः ।

351

लिङ्गाङ्गस्थलभेदज्ञः– लिङ्गाङ्गस्थलगतैकोत्तरशतस्थलभेदज्ञानवान् इत्यर्थः । शिववादी माङ्गल्यवचनप्रयोक्ता च ।

एवं सद्गुरुमधिगम्य तत्सेवा कर्तव्या इत्याह—

आप्तस्थानाङ्गसद्भावैः सेवेदित्यर्थः । शिष्टं स्पष्टम् ॥८॥

एवंविधसल्लक्षणसम्पन्नं श्रीमन्तं सद्गुरुस्वामिनं संसारहेयबुद्धिमान् पक्वः4 शिष्यः मुमुक्षुरिति यावत् । उपैति-उपायनपाणिः सन् अधिगच्छे-दित्यर्थः ।

---

1 सेवेत्त (क)
2 उपचारे भक्तिः, अपचारे भयं चेत्यर्थः ।
3 क्वचित् द्वादशवर्षा अपि विहिताः ।
4 कौलमतमित्येवान्यद्वर्तते ।
5 समयाचारावर्जितः (ख)

353 [गुरुसन्निधौ प्रार्थनाविधिः]

प्रसन्नं परमाचार्यं भक्त्या मुक्तिप्रदर्शकम् ।[1]
प्रार्थयेदग्रतः शिष्यः प्राञ्जलिर्विनयान्वितः ॥९॥

354

भो ! कल्याण ! महाभाग ! शिवज्ञानमहोदधे !
आचार्यवर्य ! सम्प्राप्तं रक्ष मां भवरोगिणम् ॥१०॥

---

एवंविधसल्लक्षणसम्पन्नं श्रीमन्तं सद्गुरुस्वामिनं संसारहेयबुद्धिमान् पक्वः[3] शिष्यः मुमुक्षुरिति यावत् । उपैति-उपायनपाणिः सन् अधिगच्छेदित्यर्थः ।[4]

अथ तद्विज्ञापनप्रकारं सूत्रद्वयेन वर्णयति ।९॥

भक्त्या सेवया प्रसन्नं अनुग्रहोन्मुखं मुक्तिप्रदर्शकं परापरमोक्ष-प्रदर्शकं परमाचार्यं महागुरुम् विनयान्वितः भयभक्तिसमन्वितः शिष्यः प्राञ्जलिः मुकुलितकरः सन् अग्रतः पुरतः प्रार्थयेत् ।

किमित्यत्राह– भो कल्याण ! मङ्गलात्मक ! महाभाग-अतिश्रेष्ठ ! शिवज्ञानस्य समुद्र! आचार्यवर्य–गुरूत्तम ! भवरोगिणं–संसारार्तं सम्प्राप्तं समागतं मां रक्षपाहि इति ॥१०॥

---

4 भुक्तिमुक्तिप्रदर्शकम् (घ)
3 पक्वः इति नास्ति (ख)
4 विध्यर्थे लडिति भावः ।
5 किमित्यत्र (ख)

355 [तत्र गुरूणां कर्तव्यम् ]

इति शुद्धेन शिष्येण प्रार्थितः परमो गुरुः ।
शक्तिपातं समालोक्य[1] दीक्षया योजयेदमुम् ॥११॥

356 [दीक्षापदार्थः]

दीयते च[2] शिवज्ञानं क्षीयते पाशबन्धनम् ।
यस्मादतः समाख्याता दीक्षेतीयं विचक्षणैः ॥१२॥

---

एवं प्रार्थितवन्तं शिष्यं गुरुः उपदेशाङ्गभूतदीक्षया योजयेदित्याह—

इति-एवंप्रकारेण, शुद्धेन–शुद्धान्तःकरणेन शिष्येण प्रार्थितः विज्ञापितः, परमो गुरुः, महागुरुः, तस्येति शेषः । शक्तिपातं तीव्रतर-शक्तिपातं समालोक्य सम्यगवलोक्य अमुं अग्रतः स्थितं शिष्यं दीक्षया योजयेत्–सम्बन्धयेदित्यर्थः ॥११॥

अथ का नाम दीक्षा ? इत्यत्राह—

यस्मात्— "दो दाने" इति धातुगत्त्या, शिवज्ञानं-परब्रह्मपर-शिवाख्यमहालिङ्गज्ञानं दीयते–स्व–स्वात्माभेदेन प्रदास्यते, पाशबन्धनं, मलमायाकर्मबन्धनं, "क्षीक्षये" इति धातुगत्या क्षीयते । अतः– इयं ज्ञानक्रियात्मिका शक्तिरेव दीक्षा इति विचक्षणैः शास्त्रज्ञैः सम्यगाख्याता इत्यर्थः ॥१२॥

---

1 स्वामिन् तद्विषये आन्तरं शक्तिपातसहकारं दृष्टवान् चेत् इत्यर्थः ।
2 दीयतेऽत्र (ख) दीयते (क)

357 [दीक्षायाः त्रैविध्यम्]

सा दीक्षा त्रिविधा प्रोक्ता शिवागमविशारदैः
वेधारूपा क्रियारूपा मन्त्ररूपा च तापस ॥१३॥

358 [तत्र वेधादीक्षालक्षणम्]

गुरोरालोकमात्रेण हस्तमस्तकयोगतः ।
यः शिवत्वसमावेशः वेधादीक्षेति[1] सामता ॥१४॥

359 [मन्त्रदीक्षालक्षणम्]

मन्त्रदीक्षेति[2] सा प्रोक्ता मन्त्रमात्रोपदेशिनी ॥१५॥

---

अथेयं दीक्षा त्रिविधा इत्याह—

स्पष्टम् ॥१३॥

अथ तद्दीक्षात्रयलक्षणमाह–

श्रीगुरोः निरीक्षणमात्रेण हस्तमस्तकसम्बन्धात् यः ज्ञानक्रियात्मकशिवतत्त्वसमावेशः अस्ति, सा वेधादीक्षा इति स्मृतेत्यर्थः । गुरोः दृष्टिगर्भे स्थित्वा करकमले समुत्पन्नस्य आत्मनः चिन्मयस्वरूपोपदेशः वेधादीक्षा–इति तात्पर्यम् ॥१४॥

मन्त्रमात्रोपदेशिनी ''सोऽहम्'' इति प्रणवमन्त्रस्वरूपस्य प्राणिनः[3]

---

1 वेधारूपा दीक्षेत्यर्थः
2 मन्त्रदीक्षेति (क)
3 अस्य जीवात्मनः इत्यर्थः स्यात् ।
4 मान्त्रीदीक्षा (ख)

360 [क्रियादीक्षालक्षणम्]

कुण्डमण्डलिकोपेता क्रियादीक्षा क्रियोत्तरा ॥१६॥

361 [दीक्षादानविधिः]

शुभमासे शुभतिथौ शुभकाले शुभेऽहनि ।
विभूतिं शिवभक्तेभ्यः दत्त्वा ताम्बूलपूर्वकम् ॥१७॥

362

यथाविधि यथायोगं शिष्यमानीय देशिकः ।
स्नातं शुक्लाम्बरधरं दन्तधावनपूर्वकम् ॥१८॥

363

मण्डले[1] स्थापयेच्छिष्यं प्राङ्मुखं तमुदङ्मुखः ।
शिवस्य नाम कीर्तिं[2] च चिन्तामपि[3] च कारयेत् ॥१९॥

---

पञ्चाक्षरीमन्त्रमात्रोपदेशः यः अस्ति सा मननत्राणधर्मिणी मन्त्रदीक्षा[4] इति कथिता इत्यर्थः ॥१५॥

कलशबन्धस्वस्तिकमण्डलुसंयुक्ता[4] क्रियापरा लिङ्गधारणक्रियासमेता क्रियादीक्षा इत्यर्थः ॥१६॥

अथ तत्प्रकारं पञ्चभिः श्लोकैः प्रदर्शयति —

शुभमासे माघादिशुभमासे शुभतिथौ भद्रादिशुभतिथौ शुभेऽहनि

---

1 शिष्योपवेशनार्थं एकं मान्त्रिकंमण्डलं निर्माय तत्रोपवेशितव्यः शिष्य इत्यर्थः ।

2 नामसंकीर्तिं-(घ ङ)

3 चिन्ता-ध्यानम् ।

4 कलशबन्धादिस्वरूपं कारणागमे विस्तरेणोक्तम् इति व्याख्या ।

364 [शिष्यस्नापनविधिः]

विभूतिपट्टं दत्त्वाऽग्रे[1] यथास्थानं यथाविधि ।
पञ्चब्रह्ममयैस्तत्र स्थापितैः कलशोदकैः ॥२०॥

आचार्यः समभूत्विग्भिः त्रिः शिष्यमभिषिञ्चयेत्[2] ॥२१॥

---

सोमशुक्रादिशुभवासरे शुभकाले अमृतयुक्तशुभमुहूर्ते विध्युक्तप्रकारेण शास्त्रोक्तक्रमेण शिवभक्तेभ्यः ताम्बूलपूर्वकं विभूतिं दत्त्वा आचार्यः दन्तधावनपूर्वकं स्नातं शुक्लाम्बरधरं शिष्यं स्वसमीपमाहूय प्राङ्मुखं कृत्वा स्वयं उदङ्मुखः सन् स्वस्तिकमण्डले[3] स्थापयेत् । अनन्तरम्—

"अपि वा यश्चण्डालः शिवेति वाचं
वदेत् तेन सह संवसेत्, तेन सह संविशेत्,[4]
तेन सह भुञ्जीत"

इति श्रुतेः सकृत्प्रायश्चित्तरूपं शिवनामकीर्तनं शिवध्यानं च कारयेत् इत्यर्थः ॥१९॥

अनन्तरम्—

प्रथमं यथाविधि यथास्थानं विभूतिधारणं कृत्वा, तत्र तस्मिन् मण्डले स्थापितैः पञ्चब्रह्ममयैः ईशानादिपञ्चब्रह्मस्वरूपैः कलशोदकैः पञ्चाक्षरात्मककलशोदकैः ऋत्विग्भिः भुवनप्रसिद्धपञ्चाचार्यसम्प्रदायानुगैः

---

[1] कृत्वाग्रे (क घ)
[2] शिष्यमभिषेचयेत् (क घ ङ)
[3] स्वस्तिकाकारे मन्त्रपूर्वकं निर्मिते महामण्डले इत्यर्थः ।
[4] संविशेत्=शयनं कुर्यात् ।

अभिषिच्य गुरुः शिष्यं आसीनं परितः[1] शुचिम् ।
ततः पञ्चाक्षरीं शैवीं संसारभयतारिणीम् ॥२२॥

तस्य दक्षिणकर्णे तु निगूढमपि कीर्तयेत् ।
छन्दो रूपमृषिं चास्य देवता[2]न्यासपद्धतिम् ॥२३॥

इति दीक्षालक्षणगुरुकारुण्यस्थलम्

—०—

---

ऋत्विग्भिः समं आचार्यः तत्सम्प्रदाय एव आचार्यपट्टाभिषिक्तः श्रीगुरुः शिष्यं त्रिः अभिषिञ्चेत् ॥२१॥

365 [मन्त्रोपदेशविधिः]

अथ मांसपिण्डं मन्त्रपिण्डं विधातुं[3] मन्त्रोपदेशं कुर्यात्—इत्याह—

अभिषिच्य ततः तदनन्तरं गुरुः शुचिं समीपे स्थितं शिष्यं प्रति तस्य दक्षिणकर्णे संसारभयतारिणीं शैवीं शिवसम्बन्धिनीं पञ्चाक्षरीं—

"नमः शिवाय च"

इति श्रीरुद्रप्रसिद्धां विद्यां परतत्त्वप्रकाशिनीं निगूढं—परश्रुतिगोचरीभूतं यथा न भवति तथा कीर्तयेत्—उपदिशेत् इत्यर्थः ।

अस्याः पञ्चाक्षर्याः रूपं स्वरूपम्, छन्दः, ऋषिं मन्त्रद्रष्टारं

---

1 पुरतः (घ ङ)
2 देवतां (घ ङ)
3 शिष्यस्य मांसादिमयं पाञ्चभौतिकं इदं शरीरं मन्त्रमयं कर्तुमित्यर्थः ।
4 अत्र चकारः वेदानुपूर्वीसिद्धः, मन्त्रस्तु वह्निवर्जित एव ।

## (5) भक्तस्थले लिङ्गधारणस्थलम् (1-5)

—०—

महर्षि, देवतान्यासपद्धतिम् अधिदेवता-प्रत्यधिदेवतारूप पञ्चब्रह्म पञ्चप्रसादाख्यपर्यायनामवदाचारादिपञ्चत्रिलिङ्गन्यासमार्गम् न्यासक्रममित्यर्थः। कीर्तयेदित्यनुषङ्गः ॥२३॥

367 [निगमनम्]

[1]आज्ञाचक्रस्थितप्रणवमयमहालिङ्गं करतले स्थापयितुम्, प्रथमं आधारादि पञ्चचक्रेषु नकारादिबीजमयाचारादिलिङ्गपञ्चकं शिवागमोक्तप्रकारेण उपदिशेत्-इति रहस्यम् ।

इति दीक्षालक्षणगुरुकारुण्यस्थलं

समाप्तम् ।।५।।

—०—

368 [लिङ्गधारणस्थलनिरूपणम्]

अथ—

"एतत्सोमस्य सूर्यस्य सर्वलिङ्गं

स्थापयति पाणिमन्त्रं पवित्रम्"

इति श्रुत्युक्तप्रकारेण श्रीगुरुविधीयमानलिङ्गधारणस्थलं निरूपयति । पाणौ मननात् त्रायते इति पाणिमन्त्रः इत्यर्थः ।

---

1 देहस्थषट्चक्रेषु भ्रूमध्यस्थितं आज्ञाचक्रम् ।

369 [लिङ्गस्वरूपम्]

[1]स्फाटिकं शैलजं वाऽपि चन्द्रकान्तमयं तु वा ।
बाणं वा सूर्यकान्तं वा लिङ्गमेकं समाहरेत् ॥१॥

370 [लिङ्गे शिवकलाऽऽवाहनविधिः]

[2]सर्वलक्षणसम्पन्ने तस्मिन् लिङ्गे विशोधिते ।
पीठस्थितेऽभिषिक्ते च गन्धपुष्पादिपूजिते ॥२॥
मन्त्रपूते कलां शैवीं योजयेद्विधिना गुरुः ॥३॥

---

अत्रादौ धारणीयलिङ्गस्वरूपं निर्दिशति—

शैलजं श्रीशैलादिमहापर्वतशिलासम्भवमित्यर्थः । एतेषु परीक्ष्य[2] गृह्णीयादित्यर्थः ॥१॥

अथ तल्लिङ्गे शिवकलां आवाहयेदित्याह ॥२॥

शिल्पशास्त्रोक्तसर्वलक्षणसम्पन्ने पञ्चगव्यैः परिशुद्धे पञ्चामृताभिषिक्ते सुगन्धपुष्पादिना परिपूजिते मूलपञ्चाक्षरीमन्त्रसंस्कृते करपीठस्थिते तस्मिन् लिङ्गे गुरुः आचार्यः शैवीं कलां शिष्यमस्तकस्थितां[3] शिवकलां विध्युक्तप्रकारेण[4] आवाहयेत् इत्यर्थः ॥३॥

---

1 एषां सामवायिकं स्वरूपं अत्रैवाग्रे वक्ष्यते ।
2 शिल्पशास्त्रोक्तेति शेषः ।
3 उत्तमलक्षणसम्पन्नमिति शेषः ।
4 चिन्मयीमिति शेषः ।
5 योजयेदितिमूलस्य दद्यात् व्याख्या (क)

372 [शिष्यहस्ते लिङ्गस्थापनविधिः]

शिष्यस्य प्राणमादाय लिङ्गे तत्र निधापयेत् ।
तल्लिङ्गं तस्य तु प्राणे स्थापयेदेकभावतः ॥

---

371 [तत्प्रकारविवरणम्]

तत्प्रकारः इत्थम्—

शिष्यमस्तके सुगन्धेन पञ्चारचक्रं विलिख्य, मध्ये प्रणवं, पञ्चदलेषु पञ्चाक्षराणि च विभाव्य,

"नित्यानन्दां निरुपमपदां
निष्कलां निर्विशेषाम् ॥"
"निर्व्याजेनोर्ध्वमायाविरचित-
वपुषं विश्ववन्द्यां परां ताम्
आधारामादिशक्तिं गुणगणनमितां
देवदेवीं शिवाख्याम्
वन्दे हृत्पद्मपीठे परमशिवपदां
श्रीमतीमूर्ध्वसंज्ञाम् ॥"

इति सकलजगद्व्यवहारप्रवृत्तिकां चराचरचैतन्यतेजोरूपिणीं शिवकलां ध्यात्वा गन्धादिना अभ्यर्च्य, प्रदीपात् दीपान्तरमिव 'क्रोम्' इत्यङ्कुशमुद्रया आकृष्य आवाह्य तदाधारां विचिन्त्य पुनः गन्धाद्युपचारैः सम्पूजयेत् इति ।

अथ लिङ्गप्राणसामरस्यं कृत्वा तल्लिङ्गं शिष्यहस्ते स्थापयेत्—

373
एवं कृत्वा गुरुर्लिङ्गं शिष्यहस्ते निधापयेत् ॥४॥

374 [शिष्यं प्रति तत्प्रातिभाव्योपदेशः]

प्राणवत् धारणीयं तत् प्राणलिङ्गमिदं तव ।
कदाचित् कुत्रचिद्वाऽपि न वियोजय देहतः ॥५॥

375 [आकस्मिकतद्वियोगे कर्तव्यविधिः]

यदि प्रमादात् पतिते लिङ्गे देहान्महीतले ।
प्राणान् विमुञ्च सहसा[1] प्राप्तये मोक्षसम्पदः ॥६॥

---

तत्र लिङ्गे[2] शिवकलाभरितलिङ्गे शिष्यस्य जीवकलारूपं प्राणं आदाय आकृष्य निधापयेत् प्रतिष्ठापयेत् । तल्लिङ्गं शिवकलापूरितलिङ्गं तस्य शिष्यस्य प्राणे प्रणवरूपत्वेन जीवकलारूपे प्राणे एकभावतः तादत्म्येन[3] स्थापयेत् नियोजयेदित्यर्थः । एवं प्रकारेण गुरुःलिङ्गं शिवजीवकलासामरस्यात्मकं कृत्वा शिष्यकरकमले स्थापयेदित्यर्थः ॥४॥

अथ शिष्यं शिक्षयति—

भो ! शिष्य ! तदिदं प्राणलिङ्गं तव त्वया प्राणवत् धारणीयम् । जातु क्वापि देहतो न वियोजय–शरीराद्विमुक्तं मा कुरु इत्यर्थः ॥५॥

यदि प्रमादात् शरीराद्विमुक्तं चेत्, तदा किं कर्तव्यमित्यत्राह—

---

1 एवं सहसा प्राणत्यागोक्तिः निरंतरलिङ्गधारणदार्ढ्यायोक्ता स्यादिति आधुनिकानामाभिप्रायः ।
2 शिवकलाधारित (क) शिवकलापूरित (ख)
3 मूले निधापयेदित्यस्यार्थः ।

376 [लिङ्गधारणम्]

इति सम्बोधितः शिष्यः गुरुणा शास्त्रवेदिना ।
धारयेच्छाङ्करं लिंङ्ग शरीरे[1] प्राणयोगतः ॥७॥

377 [लिङ्गधारणफलम्]

लिङ्गस्य धारणं पुण्यं सर्वपापप्रणाशनम् ।
आहतं मुनिभिः सर्वैः आगमार्थविशारदैः ॥८॥

378 [द्विधा लिङ्गधारणस्य मुनिसम्मतत्त्वम्]

लिङ्गधारणमाख्यातं [2]द्विधा सर्वार्थसाधकैः ।
बाह्यमाभ्यन्तरं चेति मुनिभिः मोक्षकाङ्क्षिभिः ॥९॥

---

स्पष्टम् । बलात्कारेण प्राणत्यागे दुर्मरणं किं न स्यात् ? इत्यत्रोक्तम्– "प्राप्तये मोक्षसम्पदः" इति । [3]अन्यथा नरक एवेति भावः ॥६॥

यावत्पर्यन्तं शरीरे प्राणःतिष्ठतिः तावत्पर्यन्तं वीरशैवशास्त्रज्ञेन गुरुण बोधितःशिष्यः शाङ्करं लिङ्गं धारयेदित्यर्थः ॥७॥

अथ किमस्य धारणेन प्रयोजनम् ? कैरङ्गीकृतम् ? इत्यत्राह—

वीरशैवागमज्ञैः[4] मुनिभिः सर्वैरप्यङ्गीकृतमित्यर्थः ॥८॥

अथ एवं लिंङ्गधारणं मोक्षकाङ्क्षिभिः मुनिभिः द्विधा अङ्गीकृतमित्याह[5]–

---

1 यावत्प्राणयोगमितियावत् ।

2 बाह्य आभ्यन्तरं चेति इत्यर्थः ।

3 लिङ्गधारणं विनापि स्थित्यनुवर्तने ।

4 गमाभिज्ञैः (ख)

5 मित्यत्राह (ख)

379 [तत्र आन्तरलिङ्गधारणम्]

चिद्रूपं परमं लिङ्गं शाङ्करं सर्वकारणम् ।
यत्तस्य धारणं चित्ते[1] तदान्तरमुदाहृतम् ॥१०॥

380 [आन्तरलिंगस्य बहुधा वर्णनम्]

चिद्रूपं हि परं तत्त्वं शिवाख्यं विश्वकारणम् ।
निरस्तविश्वकालुष्यं [2]निष्कलं निर्विकल्पकम् ॥११॥

381

सत्तानन्दपरिस्फूर्तिसमुल्लासकलामयम् ।
अनुमेयमनिर्देश्यं मुमुक्षुभिरुपासितम् ॥१२॥

---

सर्वार्थसाधकम् भोगमोक्षप्रदमित्यर्थः[3] शिष्टं स्पष्टम् ॥९॥

किमदमान्तरम् ? इत्यत्राह—

चिद्रूपं सच्चिदात्मकं परमम् । अतएव देशकालोत्तीर्णम् देशकालाकारलक्षण[4] विश्वकारणम् , शाङ्करं शिवसम्बन्धि यत् लिङ्गमस्ति तस्य महालिङ्गस्य चित्ते स्वहृत्कमले यत् धारणं ध्यानरूपेण धारणम्[5] तत् आन्तरं अन्तर्लिङ्गधारणमित्युदाहृतमित्यर्थः[6] ॥१०॥

अथ [7]एतत्स्वरूपं बहुधा प्रकाशयति ॥११॥

---

1 चित्ते=हृदयकमले ।
2 निष्फलम् (ख)
3 एका क्रियाद्व्यर्थकरी बभूवेतिन्यायादिति भावः।
4 तद्रूपमित्यर्थः ।
5 हृदयकमले द्रव्यरूपेण धारणासंभवात् ।
6 पारिभाषिकमित्यर्थः ।
7 अन्तर्लिङ्गस्वरूपम्।

382

परं ब्रह्म महालिङ्गं प्रपञ्चातीतमव्ययम् ॥१३॥

383 [तदुपासनविधिः]

तदेव सर्वभूतानां [1]अन्तस्त्रिस्थानगोचरम् ।
मूलाधारे च हृदये भ्रूमध्ये सर्वदेहिनाम् ।
ज्योतिर्लिङ्गं सदा भाति यद् ब्रह्मेत्याहुरागमाः ॥१४॥

---

जडविलक्षणत्वात् चिद्रूपम्, जीवविलक्षणत्वात् परम्, अत एव चराचरप्रपञ्चकारणम्, निरस्तसमस्तदोषम्, निरवयवं भेदरहितम्, नित्यानन्दप्रकाशात्मकत्वेन व्याप्रियमाणतुर्यातीत सप्तदशकलास्वरूपम् प्रत्यक्षादिप्रमाणागम्यम्, वक्तुमशक्यम् मोक्षकाङ्क्षिभिर्भजनीयम्, विश्वातीतम्, कालत्रयाबाध्यम्[2], शिवाख्यम् परब्रह्ममहालिङ्गमाह=महालिङ्गमिति प्रसिद्धमित्यर्थः ।

ननु एतादृशस्य महालिङ्गस्य स्थान-ध्यानशून्यत्वात्[3] कथमुपासनीयम्? इत्यत्राह—

तदेव पूर्वोक्तमहालिङ्गमेव समस्तप्राणिनां अन्तः त्रिस्थानगोचरं, स्थानत्रयवदित्यर्थः । यत् शिवागमप्रसिद्धमहालिङ्गतत्त्वम् आगमाः

---

1 अन्तस्त्रिः (ख)
2 अयं अव्ययमित्यस्यार्थः ।
3 आश्रयाभावादितिभावः ।

384 [अपरिच्छिन्नस्य तस्य परिच्छेदोपपत्तिः]

अपरिच्छिन्नमव्यक्तं लिङ्गं ब्रह्म सनातनम् ।
उपासनार्थमन्तःस्थं परिच्छिन्नं स्वमायया ॥१५॥

385 [ब्रह्मणः लिङ्गसंज्ञाहेतुः]

लयं गच्छति यत्रैव जगदेतच्चराचरम् ।
पुनः पुनः समुत्पत्तिं तल्लिङ्गं ब्रह्म शाश्वतम् ॥१६॥

---

उपनिषदः[1] ब्रह्मेत्याहुः, तत् ज्योतिर्लिङ्गम् सर्वदेहिनां समस्तप्राणिनां[2] पूर्वहृदये–मूलाधारे मध्यहृदये–हृदये ऊर्ध्वहृदये भ्रूमध्ये सदा भाति । तच्च[3] गुरूपदेशात् विज्ञेयमित्यर्थः ॥१४॥

ननु अखण्डितस्य महालिङ्गस्य खण्डितत्वं ? कथम् ? इत्यत्राह—

[4]अखण्डितं अप्रकटम् नित्यं ब्रह्मशब्दाभिधेयम् अन्तःस्थलिङ्गं एकमपि उपासनार्थं भक्तानां ध्यानपूजार्थं स्वमायया स्वस्वातन्त्र्यापरपर्यायमायाशक्त्या परिच्छिन्नं स्थानभेदेन लिङ्गत्रयरूपम् जातमित्यर्थः ॥१५॥

ननु परब्रह्मलिङ्गरूपमिति कथं व्यवह्रियते ? इत्यत्राह—

यत्र ब्रह्मणि एतच्चराचरं जगत् लयं गच्छति पुनःपुनरुत्पत्तिं गच्छतीति[5] तत् शाश्वतं ब्रह्मलिङ्गमित्यर्थः ॥१६॥

---

1 अत्र उपनिषदएव आगमपदार्थः इतिभावः
2 हृदयपदार्थस्य स्थानत्रयवृत्तित्वाभिप्रायेणाह—
3 तच्च इति नास्ति-(ख)
4 अपरिच्छिन्नपदार्थः अखण्डितमिति ।
5 अस्मिन् अर्थे लीनं अर्थं गमयतीतिव्युत्पत्तिः ।

386

उक्तार्थं निगमयति—

[1]तस्माल्लिङ्गमिति ख्यातं सत्ताऽऽनन्दचिदात्मकम् ।
बृहत्त्वात् बृंहणत्वाच्च ब्रह्म शब्दाभिधेयकम् ॥ १७ ॥

387 [आन्तरलिङ्गानुसन्धानस्थाननिर्देशः]

आधारे हृदये वाऽपि भ्रूमध्ये वा निरन्तरम् ।
ज्योतिर्लिङ्गानुसन्धानं आन्तरं लिङ्गधारणम् ॥ १८ ॥

---

तस्मात् सच्चिदानन्दात्मकं लिङ्गं महालिङ्गं बृहत्त्वात् महत्त्वात् बृंहणत्वात् विश्वसृष्ट्युन्मुखत्वात् च ब्रह्मशब्दाभिधेयकमिति ख्यातम्—प्रख्यातमित्यर्थः । एवं परब्रह्मैव महालिङ्गम्, महालिङ्गमेव परब्रह्मेति भावः ॥१७॥

अथ उक्तस्थानेषु [2]एकत्र ज्योतिर्लिङ्गानुसन्धानं आन्तरलिङ्गधारणमित्याह—आधारे इति ॥ स्पष्टम् ॥ १८ ॥

अथ केन प्रकारेणानुसन्धेयम् ? इत्यत्राह —

---

1 तल्लिङ्गमेव ब्रह्मपदार्थः इत्याह—

2 अन्यतमस्थाने इत्यर्थः ।

[388 तदनुसन्धानप्रकारः]

आधारे [1]कनकप्रख्यं हृदये विद्रुमप्रभम् ।
भ्रूमध्ये स्फटिकच्छाय[2] लिङ्गं योगी विभावयेत्[3] ॥ १९ ॥

389 [बाह्यापेक्षया अस्य वैशिष्ट्यम्]

निरुपाधिकमाख्यातं लिङ्गस्याऽऽन्तरधारणम् ।[4]
विशिष्टं कोटिगुणितं बाह्यलिङ्गस्य धारणात् ॥ २० ॥

390

ये धारयन्ति हृदये लिंङ्ग चिद्रूपमैश्वरम् ।[5]
न तेषां पुनरावृत्तिः घोरसंसारमण्डले ॥ २१ ॥

---

स्पष्टम् ॥ १९ ॥

अथदेमन्तर्लिङ्गधारणं बाह्यलिङ्गधारणापेक्षया विशिष्टमित्याह—
स्पष्टम् ॥ २० ॥

परममुक्तिरेवेत्यर्थः ॥ २१ ॥

तत् कथमित्यत्राह—

---

1 कनकं-सुवर्णम्-तद्वत् प्रकाशविशिष्टम् ।
2 छाया-कान्तिः
3 धारयेत् । ध्यायेदित्यपि ।
4 आन्तरविषये सर्वत्र धारणपदं ध्यानपरमिति पूर्वमेवोक्तम् ।
5 ऐश्वरं = शैवम्

391

अन्तर्लिङ्गानुसन्धानं आत्मविद्यापरिश्रमः ।
गुरूपासनशक्तिश्च[1] कारणं मोक्षसम्पदाम् ॥ २२ ॥

392 [शिवयोगिनामस्मिन्नेवाभिरुचिसत्वोपपादनम् ]

वैराग्यज्ञानयुक्तानां योगिनां स्थिरचेतसाम् ।
अन्तर्लिङ्गानुसन्धाने रुचिः बाह्ये न जायते ॥ २३ ॥

---

[2]"आत्मलाभान्न परं विद्यते" इतिश्रुतेः, नाहमीश्वरः, इति अज्ञाननिवारकीभूतात्मविद्यानैशित्यगुरुभजनसामर्थ्ययोरपि अन्तर्लिङ्गानुसन्धानं मोक्षसम्पत्कारणमित्यर्थः ॥ २२ ॥

तस्मात् अचञ्चलहृदयानां शिवयोगिनां अन्तर्लिङ्गानुसन्धाने एव रुचिः,[3] न बाह्ये,[4] इत्याह—

स्पष्टम् ॥ २३ ॥

किमुत [5] परिपक्वब्रह्मादयोऽपि सुज्ञानयोगेनैव ज्योतिर्लिङ्गं [6]पश्यन्तीत्याह—

---

1 इति त्रयमपि इतिशेषः ।
2 आत्मलाभः–स्वात्मदर्शनम्
3 रुचिः हार्दी अपेक्षा ।
4 बाह्ये तावद्रुचिर्नास्तीतिभावात ।
7 परिपक्वहृदयाः इतियावत् ।
6 ध्यायन्तीत्यर्थः ः

393 [देवतानामप्यन्तराभिरुचिसत्त्वम्]

ब्रह्मा विष्णुश्च रुद्रश्च वासवाद्याश्च लोकपाः ।
मुनयः सिद्धगन्धर्वाः दानवा मानवास्तथा ॥ २४ ॥

394

सर्वे[1] च ज्ञानयोगेन सर्वकारणकारणम् ।
पश्यन्ति हृदये लिङ्गं परमानन्दलक्षणम् ॥ २५ ॥

395 [अन्तर्लिङ्गानुसन्धानस्यैव प्रामुख्यम्]

तस्मात् सर्वप्रयत्नेन शाङ्करं लिङ्गमुत्तमम् ।
अन्तर्विभावयेद्विद्वान्[2] अशेषक्लेशमुक्तये ॥ २६ ॥

---

अत्र—

"ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते"

इति श्रुतेः कार्यकोटिप्रविष्टरुद्रो विवक्षितः ।[3] न तु त्रिमूर्तिकारणीभूत महालिङ्गरुद्रः इति अनुसन्धेयम्[4] ॥ २४ ॥

तस्मात् सांसारिकदुःखनिवृत्त्यर्थं अन्तर्लिङ्गानुसन्धानमेव कुर्यादित्याह ॥ २५ ॥

स्पष्टम् ॥ २६ ॥

---

1 सुज्ञानयोगेन (घ)

2 मनसि ध्यायेत् ।

3 यथा वेदान्तिषु परंब्रह्मेति तथैति भावः ।

4 तथाच रुद्रोद्विविधः—नित्यकोटिप्रविष्ट : कार्यकोटि प्रविष्टः इति भावः त्रिमूर्तिष्वपि इदं समानमिति आशयः ।

396 [बाह्यलिङ्गधारणे वध्युद्देशः]

अन्तर्धारियितुं लिङ्गं अशक्तः[1] शक्त एव वा ।
बाह्यं च धारयेल्लिङ्गं तद्रूपमिति निश्चयात् ॥२७॥

397 [लिङ्गस्यप्रकारान्तरेणत्रैविध्यम्]

लिङ्गं तु त्रिविधं प्रोक्तं स्थूलसूक्ष्मपरात्परं ।
इष्टलिङ्गमिदं स्थूलं यद् बाह्ये[2] धारयेत्तनौ[3] ॥२८॥

---

नन्वेवं चेत् बाह्यलिङ्गधारणं किमर्थमित्याकाङ्क्षायामाह—.

अन्तर्लिङ्गधारणे यद्यशक्तः शक्त एव वा. स्फटिकशिलादिनिर्मितबाह्यलिङ्ग तद्रूपमिति हृदयकमलाश्रितचिन्मयमहालिङ्गस्वरूपवदिति निश्चयात् सन्देहराहित्येन धारयेत् ।

बिन्दुस्वरूपामलमूलपीठं नादस्वरूपम् स्फुरदूर्ध्वपीठम् ।
कलात्मतिर्यग्गतगोमुखाढ्यं चिद्रूपलिङ्गं हृदयाब्जसंस्थम् ।।"

इति शिवालोकवचनात् तद्रूपबाह्यलिङ्गं अन्तर्लिङ्गस्मरणार्थं वीरशैवः धारयेत् इत्यर्थः ॥२७॥

अथ महालिङ्गभेदं निरूपयति—

लिङ्गं तु महालिङ्गमित्यर्थः ।तत् स्थूलं सूक्ष्मं परात्परं इति त्रिविधम्। तत्र यत् बाह्ये तनौ धार्यते तदिदमिष्टलिङ्गं स्थूलम् । यत् यल्लिङ्ग

---

1 ध्यानाभ्यासस्य अतिकष्टसाध्यत्वात् ।

2 धार्यते तनौ (ङ)

3 एतदनन्तरं–प्राणलिङ्गमिदं सूक्ष्मं यदन्तर्भावनामयम् । परात् परंतु यत् प्रोक्तं तृप्तिलिङ्गं तदुच्यते इत्यधिकं (घ. ङ)

398 [तत्र स्थूललिङ्गधारणोद्देशः]

भावनातीतमव्यक्तं परब्रह्मशिवाभिधम् ।
इष्टलिङ्गमिदं साक्षात् अनिष्टपरिहारतः ॥२९॥

399

धारयेदवधानेन शरीरे सर्वदा बुधः ॥३०॥

---

अन्तः हृदयकमले भावनामयं । [1]सन्मात्रभावनारूपम् तत् प्राणलिङ्गम् सूक्ष्मम्, यत् यल्लिङ्ग परात्परमिति प्रोक्तं तत् तृप्तिलिङ्गमित्युच्यते इत्यर्थः[2] ॥२८

नन्विदं स्थूललिङ्ग किमर्थं धारणीयम् ? इत्यत्राह—

अव्यक्तं रूपाद्यभावात् अबाह्येन्द्रियगोचरम्, समलमानसप्रवृत्त्यगम्यत्वात् भावनातीतं शिवाभिधं परं ब्रह्म निगमागमप्रसिद्धशिवाख्यपरब्रह्मैव, अनिष्टपरिहारतः संसारपाशलक्षणानिष्टपरिहारतः इष्टरूपपरात्परमुक्तिप्रदानतः साक्षात् प्रत्यक्षीभूतेष्टलिङ्गं इदं

[3] "इष्टमूर्जं तपसाऽनुयच्छत"

इत्यथर्वशिरस्सिद्धं, बुधः निगमागमनिपुणः शरीरे सावधानेन सदा धारयेदित्यर्थः ॥२९ ३०॥

---

1 ब्रह्माभेदभावनयेत्यर्थः ।
2 एतद्व्याख्यानुसारेण अत्र सः अधिकपाठः श्लोकः आसीदेवेति ज्ञायते ।
3 अत्र इषमूर्जमिति मूलपाठः ।

400 [धारणस्थानानि]

मूर्ध्नि वा कण्ठदेशे वा [1]कक्षे वक्षःस्थलेऽपि वा ।
[2]कुक्षौ हस्तस्थले वाऽपि धारयेल्लिङ्गमैश्वरम् ॥[3]३१ ॥

401 [धारणे निषिद्धस्थानानि]

नाभेरधस्ताल्लिङ्गस्य धारणं पापकारणम् ।
जटाग्रे त्रिकभागे वा मलस्थाने[4] न धारयेत् ॥३२॥

402 [लिङ्गपूजास्थानम्]

लिङ्गधारी सदा शुद्धः [5]निजलिङ्गं मनोरमम् ।
अर्चयेत् गन्धपुष्पाद्यैः करपीठे[6] समाहितः ॥३३॥

---

अथेदमिष्टलिंङ्ग शरीरे कुत्र धारणीयम्? इत्यत्राह—
स्पष्टम् ॥ ३१ ॥

अथ निषेधस्थानमाह—
त्रिकभागः पृष्ठभागः इत्यर्थः । शिष्टं स्पष्टम् ॥ ३२ ॥

अथेदं लिङ्गं कुत्र पूजनीयम्? इत्यत्राह—
स्पष्टम् ॥३३॥

---

1 कक्षः=कण्ठदेशः ।
2 कुक्षिः=अन्ननाभिप्रदेशः इति केचित् ।
3 ऐश्वरं=शिवसम्बन्धि शैवम् ।
4 मलस्थानं=मलमूत्रादिनिस्सरणस्थानम् ।
5 निजलिङ्गं=स्वधृतंलिङ्गम् ।
6 हस्तरूपे पीठे इत्यर्थः ।

403

बाह्यपीठार्चनादेतत् करपीठार्चनं वरम् ।
सर्वेषां वीरशैवानां मुमुक्षूणां निरन्तरम् ॥ ३४ ॥

404 [लिङ्गधारणे पूर्वसम्मतिः]

ब्रह्मविष्ण्वादयो देवाः मुनयो गौतमादयः ।
धारयन्ति सदा लिंङ्ग [1]उत्तमाङ्गे विशेषतः ॥ ३५ ॥

405

लक्ष्म्यादिशक्तयः सर्वाः शिवभक्तिविभाविताः ।[2]
धारयन्त्यलिकाग्रेषु[3] शिवलिङ्गमहर्निशम् ॥ ३६ ॥

406 [लिङ्गधारणे प्रमाणानि]

वेदशास्त्रपुराणेषु कामिकाद्यागमेषु च ।
लिङ्गधारणमाख्यातं वीरशैवस्य निश्चयात्[4] ॥३७॥

---

स्पष्टम् ॥३४॥

अथेदं लिङ्गधारणं कैरङ्गीकृतमित्यत्राह ॥३५॥

अनेन स्त्रीपुरुषयोरपि लिङ्गधारणं उक्तं भवति ॥३६॥

अथेदं लिङ्गधारणं कुत्रोक्तमित्यत्राह—

स्पष्टम् ॥३७॥

---

1 उत्तमाङ्गे = मस्तकस्थाने ।
2 विभाविताः = परिपूर्णाः ।
3 न्त्यलकाग्रेषु (क) अलिका = अलका ।
4 निश्चयात् = सुदृढम् ।

407 [तत्र ऋग्वेदे लिङ्गधारणविधिवाक्यनिर्देशः]

ऋगित्याह पवित्रं ते विततं ब्रह्मणस्पते ।[1]
तस्मात् पवित्रं तल्लिङ्गं धार्यं शैवमनामयम् ॥३८॥

408 [लिङ्गधारणोपयोगः]

ब्रह्मेति लिङ्गमाख्यातं [2]ब्रह्मणः पतिरीश्वरः
[3]पवित्रं तद्धि विख्यातं तत्सम्पर्कात् तनुः शुचिः[4] ॥३९॥

---

अथश्रुतौ कुत्र प्रसिद्धम्? इत्यत्राह—
"पवित्रं ते विततं ब्रह्मणस्पते"

इति ऋग्वेदः आह[5] । भो ब्रह्मणस्पते ! ते तव लिङ्गमिति शेषः । विततं शिवादिभूम्यन्तं विस्तृतम् पवित्रं पावनम् । तस्मात् अनामयं दोषरहितं शैवं तल्लिङ्गं धारयेदित्यर्थः ॥३८॥

ननु किमस्य धारणेनेत्यत्राह—

तत् पवित्रमिति तत्सम्पर्कात् तनुः शरीरं पवित्रं भवतीत्यर्थः ॥३९॥

---

1 पवित्रं ते विततं ब्रह्मणस्पते । प्रभुर्गात्राणिपर्येति विश्वतः । अतप्ततनूर्नतदामो अश्नुते । शृतासइद्वहन्तस्तत्समासत । इतिश्रुतिः ।
2 ब्रह्मणस्पति-(क)
3 पवित्रतदितिख्यातं-(क)
4 एतच्छ्लोकानन्तरं 'ऋगित्याहेति पूर्वः श्लोकः (क)
5 यजुर्वेदोऽप्याह ।

409 [लिङ्गधारणस्य दीक्षापूर्वकत्वम् ]

[1]अतप्ततनुरज्ञो वै आमः संस्कारवर्जितः ।
दीक्षया रहितः साक्षात् नाप्नुयाल्लिङ्गमुत्तमम् ॥४०॥

410 लिङ्गधारणेयाजुष प्रतिप्रामाण्यम् ]

अघोराऽपापकाशीति या ते रुद्र ! शिवा तनूः ।[2]
यजुषा गीयते यस्मात् तस्माच्छैवो[3]ऽघवर्जितः ।४१॥

---

अथ एतादृशं लिङ्गं दीक्षया रहितः न धारयेदित्याह —

अतप्ततनुः तपोरहितदेहः आमः अपरिपक्वः अवैराग्यशीलः इत्यर्थः। संस्कारवर्जितः शिवसंस्काररहितः अज्ञः नित्यानित्यवस्तुविवेकशून्यः दीक्षया रहितः गुरुकारुण्यरहितः साक्षात् प्रत्यक्षं उत्तमं श्रेष्ठलिङ्गं न आप्नुयात् न धारयेत् । अस्मिन्नर्थे—

"अतप्ततनूर्न तदामो अश्नुते"

इति श्रुतिः ॥ तत् आमः इति विच्छेदः । तत् तल्लिङ्गमित्यर्थः ॥

अनेन सुप्रसन्नेन गुरुणा दत्तं लिङ्गमेव भोगमोक्षप्रदम्, स्वेच्छया धृतं तु विफलमिति सूचितम् ।॥४०॥

अथ लिङ्गधारणे याजुषीश्रुतिरप्यस्तीयह—

---

1 अतप्ततनुः=अज्ञः ।
2 उत्तरार्धं तु–तयानस्तनुवा शंतमया गिरिशंताभिचाकशीहि इति ।
3 शैवः=शिवलिङ्गधृक् ।

411 [निगमनम्]

यो लिङ्गधारी नियतान्तरात्मा[1] नित्यं शिवाराधनबद्धचित्तः ।
स धारयेत् सर्वमलापहत्यै भस्मामलं चारु[2] यथाप्रयोगम् ॥४२॥

इति श्री वीरशैवधर्मनिर्णये सिद्धान्त
शिखामणौ भक्तस्थले
गुरुकारुण्य-लिङ्गधारणप्रसङ्गो नाम
षष्ठः परिच्छेदः समाप्तः

---

"या ते रुद्र शिवातनूः अघोराऽपापकाशिनी".

इति श्रीरुद्रश्रुतिः । अस्याः श्रुतेः अयमर्थः—भो रुद्र ! ते तव शिवा मङ्गलस्वरूपा या तनूः—

"लिङ्ग तु शिवयोर्देहः"

इत्यागमोक्तेः शिवशक्त्यालिङ्गमूर्तिः, सा अघोरा शान्ता अपापकाशी अपापेषु भक्तेषु काशते इत्यपापकाशी इष्टलिङ्गरूपेण तत्र स्थिता इति यजुषा यजुर्वेदेन यस्मात् गीयते तस्मात् शैवः शिवलिङ्गसम्बन्धी अघवर्जितः पापरहितः इत्यर्थः ।।।।४१॥

अथ लिङ्गधारणस्थलं समाप्य तत्सम्पन्नस्य भस्मधारणस्थलं सूचयति —

यः पुरुषः लिङ्गधारी लिङ्गधारणसम्पन्नः नियतान्तरात्मा निर्मलान्तः-करणः, नित्यं शिवपूजाबद्धचित्तः सः लिङ्गधारकः सर्वमलापहत्यै सर्वदोष-

---

1 संयतमनस्कः ।
2 शास्त्रोक्तविध्यनुसारेण ।

निवृत्त्यै भस्म यथाप्रयोगं शास्त्रोक्तप्रकारेण धारयेदित्यर्थः ॥४२॥

इति श्रीमत्पदवाक्यप्रमाणपारावाराधुरीण श्रीमरि-
तोण्टदार्येण विरचितायां तत्त्वप्रदीपिकाख्यायां
सिद्धान्तशिखामणिव्याख्यायां भक्तस्थले
गुरुकारुण्यलिङ्गधारणप्रसङ्गोनाम षष्ठः परिच्छेदः समाप्तः

॥ श्री शिवाय नमः ॥

# सिद्धान्तशिखामणिः

## सप्तमः परिच्छेदः

### विभूति-रुद्राक्षधारणप्रसङ्गः

—— ० ——

### (6) भक्तस्थले विभूतिधारणस्थलम् (1-6)

—— ० ——

413 [तत्र निरूपाधिकं भस्म]

भस्मधारणसंयुक्तः पवित्रो नियताशयः ।
शिवाभिधानं यत् प्रोक्तं [1]भासनात् भसितं तथा ॥१॥

414

महाभस्मेति सञ्चित्य महादेवं प्रभामयम् ।
वर्तन्ते ये महाभागाः मुख्यास्ते भस्मधारिणः ॥२॥

---

412 [विभूतिधारणस्थलनिरूपणम् ]

अथ "भूत्यै [2]न प्रमदितव्यम्" इति श्रुतिप्रसिद्धभस्मधारणस्थलं निरूपयति श्रीरेणुकः ।

तत्रादौ सूत्रद्वयेन निरुपाधिकभस्मधारणं निरूपयति ॥१॥

[3]भस्मधारणसंयुक्तः शिवलिङ्गधारकः नियताशयः—

'भस्मध्यानात् सन्धानं भवति ।

---

1 भासनात्=स्वयंप्रकाशनात्, धृतस्य प्रकाशकरणाच्च ।

2 अत्रभूतिशब्दः—'भूतिर्भसितभस्मनी' इत्युक्तभस्मवाचकः इति भावः । तथाच भस्मधारणविषये प्रमादः नकर्तव्यः इत्यर्थः ।

3 भस्मेत्यादिश्लोकादौ 'रेणुक उवाच' इति (क)

415 [सोपाधिकभस्म]

शिवाग्न्यादिसमुत्पन्नं मन्त्रन्यासादियोगतः ।
तदुपाधिकमित्याहुः[1] भस्मतन्त्रविशारदाः ॥३॥

---

भस्मध्यानात् पञ्चाक्षरी स्मरणं भवति । तस्मात् ध्यानात् स्थाणुत्वं च गच्छति । स एषः भस्मज्योतिः, स एष भस्मज्योतिः ॥"

इति भस्मजाबालश्रुतेः, भस्मज्योतिर्लिङ्गमयं इति नियमितचित्तः सन्, पवित्रः शुद्धः, यत् भस्मज्योतिर्लिंङ्ग शिवाभिधानं परशिवपरब्रह्माभिधानं सत् प्रोक्तमिति प्रभामयं ज्योतिर्लिङ्गस्वरूपम्. तं महादेवम्, भासनात् प्रकाशनात् भसितं भसितमिति तथा महाभस्मेति संचिन्त्य[2], महाभागाः श्रेष्ठाः ये केचित् लिङ्गधारकाः वर्तन्ते ते मुख्याः मुख्यभस्मधारिणः निरुपाधिकभस्मधारिणः इत्यर्थः ॥२॥

अथ सोपाधिकं भस्मस्वरूपं दर्शयति—

यत् भस्म मन्त्रन्यासादियोगतःपञ्चब्रह्ममन्त्रन्यासादिसम्बन्धात् शिवाग्न्यादि समुत्पन्नं शिवमन्त्रसंस्कृताग्निसमुत्पन्नं भवति तत् तद्भस्म तन्त्र विशारदाः शिवागमप्रवीणाः उपाधिकं भस्म सोपाधिकंभस्मेत्याहुः इत्यर्थः ॥३॥

---

1 तत्सोपाधिकमित्याहुः (घ. ङ)
2 संचिन्त्य इत्यस्यस्थाने संचिन्त्य इत्युक्त्वा-ध्यात्वा इति व्याख्यातम् (क)

416 [भस्मनो नामपञ्चकम्]

विभूतिर्भसितं भस्म क्षारं रक्षेति भस्मनः ।
एतानि पञ्चनामानि हेतुभिः पञ्चभिः भृशम् ॥४॥

417 [विभूतिसंज्ञायाः अन्वर्थत्वम्]

विभूतिर्भूतिहेतुत्वात् भसितं तत्त्वभासनात् ।
पापानां भर्त्सनात् भस्म क्षारणात् क्षारमापदाम् ॥५॥

418

रक्षणात् सर्वभूतेभ्यः रक्षेति परिगीयते ॥६॥

---

अथास्य भस्मनः कारणभेदेन [1]नामपञ्चकं अस्तीत्याह—स्पष्टम् ॥४॥

तत् कारणं अन्वर्थनाम कृत्वा कथयति[2] ॥५॥

अणिमाद्यष्टैश्वर्यकारणत्वात् विभूतिः,[3] शिवतत्त्वप्रकाशनात् भसितम्[4], पापानां मनोवाक्कायजन्यानां भर्त्सनात् भयोत्पादनात् भस्म,[5] आपदां तापत्रयोत्पन्नविपदां क्षारणात् क्षारम्[6], सर्वभूतेभ्यः ग्रहपक्षादिभ्यः रक्षणात् रक्षा[7] इति परिगीयते इत्यर्थः ॥६॥

---

1 नाम-उपादानानुगुणं अन्वर्थनाम ।
2 तेषां अन्वर्थत्वं उपपादयति इत्यर्थः ।
3 विभूतिर्भूतिरैश्वर्यम् अणिमादिकमष्टधा इत्यमरः ।
4 भासधातुः ।
5 भर्त्सधातोः भस्मेत्यर्थः ।
6 क्षरधातोः क्षारः ।
7 क्षारो रक्षा चेत्यमरः ।

12

419 [भस्मस्वरूपभेदस्य गोमूलकत्वोपपादनम्]

नन्दा भद्रा च सुरभिः सुशीला सुमनास्तथा ।
पञ्च गावो विभोर्जाताः सद्योजातादिवक्त्रतः ॥७॥

420 [तादृशगोभेदाः]

कपिला कृष्णा च धवला धूम्रा रक्ता तथैव च ।[1]
नन्दादीनां गवां वर्णाः क्रमेण परिकीर्तिताः ॥८॥

421 [गोभेदनिमित्तभस्मभेदेश्रुतिप्रामाण्यम्]

सद्योजाताद्विभूतिश्च वामात् भसितमेव च ।
अघोरात् भस्म सञ्जातं तत्पुरुषात् क्षारनाम च ॥
रक्षा चेशानवक्त्राच्च नन्दादिद्वारतो भवेत् ॥९॥

---

नन्वेवंविधः क्रियाभेदः किंनिबन्धनः ? इत्यत्र गोमूलकः इत्याह—

शिवस्य सद्योजातमुखात् नन्दा, वामदेववदनात् भद्रा, अघोराख्यात् सुरभिः, तत्पुरुषवक्त्रात् सुशीला, ईशाननात् सुमनाः इत्येवं पञ्च गावो जाताः । तत्कृतोऽयं कार्यभेदः इत्यर्थः ॥७॥

तर्हि किमासां[2] रूपमित्यत्राह—

तथैव क्रमेणेति सम्बन्धः ॥८॥

अथ कया गवा कीदृशं भस्म उत्पन्नम् ? इत्यत्राह बृहज्जाबालोपनिषदर्थमेव—

सद्योजातमुखोत्पन्ननन्दया विभूतिः, वामदेवमुखोत्पन्नभद्रया

---

1 कपिलः कृष्णधवलधूम्ररक्तास्तथैव च—(ख)
2 आसां=पञ्चानां गवाम्।

422 [भस्मनामुपयोगविधिः]

धारयेन्नित्यकार्येषु विभूतिं च प्रयत्नतः ।
नैमित्तिकेषु भसितं क्षारं कार्येषु सर्वदा ॥१०॥

423

प्रायश्चित्तेषु सर्वेषु भस्मनाम यथाविधि ।
रक्षा च मोक्षकार्येषु प्रयोक्तव्या सदा बुधैः[1] ॥११॥

424 [भस्मनां वर्णाः]

नन्दादीनां तु ये वर्णाः कपिलाद्याः प्रकीर्तिताः ।
त एव वर्णाः विख्याताः भूत्यादीनां यथाक्रमम् ॥१२॥

---

भसितम्, अघोरमुखसञ्जातसुरभिगवा भस्म, तत्पुरुषमुखाविर्भूतसुशीलया क्षारम्, ईशानमुखनिर्गतसुमनसा रक्षा च अभवत् आसीदित्यर्थः ॥९॥

अथैषां विनियोगमाह॥१०॥

बुधैः वीरशैवमतप्रविद्वज्जनैः प्रयोक्तव्यं धार्यमित्यर्थः । शिष्टं स्पष्टम् ॥११॥

अथवंविधभस्मनां वर्णमाह—

स्पष्टम् ॥१२॥

---

1 कार्यं च नित्यं, नैमित्तिकं, सार्वदिकं, प्रायश्चित्तं, मोक्षानुबन्धि—इति पञ्चविधमित्यर्थः ।

425 [भस्मोत्पत्तौ चातुर्विध्यम्]

भस्मोत्पादनमुद्दिष्टं चतुर्धा तन्त्रवेदिभिः ।
कल्पं चैवानुकल्पं तु उपकल्पमकल्पकम् ॥१३॥

426

एषामादिममुत्कृष्टं अन्यत् सर्वमभावतः ॥१४॥

427 [तेषां स्वरूपम्]

[1]यथाशास्त्रोक्तविधिना गृहीत्वा गोमयं नवम् ।
[2]सद्येन वामदेवेन कुर्यात् पिण्डमनुत्तमम् ॥१५॥

428

शोषयेत् पुरुषेणैव दहेत् घोरात् शिवाग्निना ।
कल्पं तद्भस्म विज्ञेयम् अनुकल्पमथोच्यते ॥१६॥

---

[3]अथ एतद्भस्मोत्पत्तिः चतुर्विधेत्याह —॥१३॥

कल्पानुकल्पोपकल्पाकल्पाख्यचतुर्विधभस्मसु आदिमं प्राथमिकं कल्पं भस्म उत्कृष्टम् । अन्यत् सर्वं शिष्टत्रिविधभस्म अभावतः कल्पभस्मालाभात्[4] अङ्गीकरणीयमित्यर्थः ॥१४॥

अथ तेषां स्वरूपं क्रमेण कथयति ॥१५॥

---

1 तथाशास्त्रोक्त (ङ)
2 अत्रसद्यादिपदं तत्तन्मन्त्रवाचकम् ।
3 अथ तन्त्रशास्त्रानुसारेण भस्मोत्पत्तौ चातुर्विध्यमाह—
4 अलाभेसतीति यावत् ।

429

वनेषु गोमयं यच्च शुष्कं चूर्णीकृतं तथा ।
दग्धं चैवानुकल्पाख्यं आपणादिगतं तु यत् ।।१७।।

430

वस्त्रेणोच्चारितं भस्म गोमूत्राबद्धपिण्डितम् ।

431

दग्धं प्रागुक्तविधिना भवेत् भस्मोपकल्पकम् ।
अन्यैरापादितं भस्माप्यकल्पमिति[1] निश्चितम् ।।१८।।

---

शास्त्रोक्तप्रकारेण नन्दादिभिराविर्भूतनूतनगोमयं सद्येन सद्योजातमन्त्रेण अन्तरे गृहीत्वा, वामदेवमन्त्रेण पिण्डीकृत्य, तत्पुरुषमन्त्रेण शोषयित्वा, शिवमन्त्रसंस्कृताग्निना अघोरात् अघोरमन्त्रात् दहेत् भस्मीकुर्यात् इत्यर्थः ।

अथेशानमन्त्रेण बिल्वादिपत्रे स्थापितं तत् भस्मकल्पमिति ज्ञातुं योग्यमित्यर्थः । अरण्येषु यत् शुष्कं गोमयं चूर्णीकृत्य पूर्ववत्दग्धं भस्मानुकल्पाख्यमित्यर्थः ।।

(अत्र मन्त्रत्रयलोपः ।)

आपणादिगतं यत् भस्मास्ति तत् वस्त्रेण संशोधितं सत्, पुनर्गोमूत्रेण पिण्डीकृतं सत् पश्चात् प्रागुक्तविधिना दग्धं चेत् उपकल्पाख्यं भस्म भवेत् स्यात् इत्यर्थः । अन्यैः अमन्त्रज्ञैः आपादितं सम्पादितं भस्म अकल्पमिति कल्पितं कथितमित्यर्थः[2] ।।१८।।

---

1 भस्म अकल्पमिति (घ)

2 तथाच भस्मनि-कल्पं-उपकल्पं अकल्पं इति भेदत्रयमिति भावः

432 [भस्मस्नानविधिः]

एष्वेकतममादाय पात्रेषु कलशादिषु ।
त्रिसन्ध्यमाचरेत् स्नानं यथासम्भवमेव वा ।।१९।।

433 [तत्प्रकारः]

स्नानकाले करौ पादौ प्रक्षाल्य विमलाम्भसा ।
वामहस्ततले भस्म क्षिप्त्वाऽऽच्छाद्यान्यपाणिना ।।२०।।

434

अष्टकृत्वोऽथ मूलेन[1] मौनी भस्माभिमन्त्र्य च ।
शिर ईशानमन्त्रेण पुरुषेण मुखं तथा ।।२१।।

435

हृत्प्रदेशमघोरेण[2] वामदेवेन गुह्यकम् ।
पादौ सद्येन सर्वाङ्गं प्रणवेनैव सेचयेत्[3] ।।।२२।।

---

अथ एवंविधभस्मना स्नानं कुर्यादित्याह—

कलशादिपात्रेषु भिन्नतया स्थापितेष्वेषु भस्मसु एकतमं भस्म आदाय त्रिकालमेककालं वा [4]स्नानं कुर्यादेवेत्यर्थः ।।१९।।

कथ कर्तव्यमित्यत्राह ।।२०।।

भस्मस्नानकाले स्वच्छोदकेन हस्तौ पादौ प्रक्षाल्य वामकरतले

---

1 अत्र 'दक्षिणोरौ प्रतिष्ठाप्य मौनी भस्माभिमन्त्रयेत्' इति शिवागमवाक्यं प्रमाणीकृतम् (क)

2 ''पुरुषेण मुखं तथा । हृत्प्रदेशमघोरेण'' इतिपादद्वयं नास्ति (घ.ङ)

3 ईशानमन्त्रः—ईशानः सर्वविद्यानामिति ।
पुरुषमन्त्रः—तत्पुरुषाय विद्महे इति ।
अघोरमन्त्रः—अघोरेभ्योऽथघोरेभ्यः इति ।
सद्योमन्त्रः—सद्योजातं प्रपद्यामि इति ।
प्रणवमन्त्रः=ओङ्काररूपः ।

4 यथासम्भवमित्यस्य एककालं वा इति व्याख्या ।

436 [जलस्नानादस्योत्कृष्टत्वम्]

भस्मना विहितं स्नानं इदमाग्नेय[1]मुत्तमम् ।
स्नानेषु वारुणाद्येषु मुख्यमेतन्मलापहम् ॥२३॥

437 [जलस्नानादस्य विशेषः]

[2]भस्मस्नानवतां पुंसां यथायोगं दिनेदिने ।
वारुणाद्यैरलं स्नानैः बाह्यदोषापहारिभिः ॥२४॥

---

भस्म संस्थाप्य दक्षिणपाणिना आच्छाद्य दक्षिणोरौ निवेश्य मौनी

"मौनी भस्माभिमन्त्रयेत् "

इति शिवागमवचनात् मौनीभूत्वा, मूलेन अष्टवारं अभिमन्त्र्य शिरोमुख-हृदयनाभिपादेषु प्रणतिपूर्वकैः ईशानादिमन्त्रैः अभ्युक्षयेत् प्रणवेन सर्वाङ्गं प्रोक्षयेदित्यर्थः ॥२२॥

अथेदं जलस्नानादुत्कृष्टमित्याह—

गङ्गोदकदिव्यवायव्यादिस्नानेषु भस्मना विहितं स्नानं इदम् आग्नेयम् उत्तमम् । अग्नेः सर्वभस्मकत्वेन एतदाग्नेयस्नानं सकलमलापहम् इति मुख्यमित्यर्थः ॥२३॥

ननु जलादिस्नानस्य सकलमलनिवर्तकत्वं नास्ति वा ? इत्यत्राह— यथायोगं शास्त्रोक्तप्रकारमनतिक्रम्य प्रतिदिनं भस्मस्नानवतां पुंसां

---

1 माग्नेय-(क)
2 भस्मस्नानमेव-भस्मोद्धूलनमेव आग्नेयस्नानमितिभावः ।

438 [भस्मस्नानस्य यत्यनुष्ठानसिद्धत्वम्]

आग्नेयं भस्मना स्नानं यतिभिस्तु विधीयते ।
आर्द्रस्नानात्परं[1] भस्म [2]आर्द्रे जन्तुवधो ध्रुवम् ॥२५॥

439 [जलस्नाने दोषविशेषप्रदर्शनम्]

आर्द्रं तु प्रकृतिं विन्द्यात् प्रकृतिं बन्धनं विदुः ।
प्रकृतेस्तु प्रहाणार्थं भस्मना स्नानमिष्यते ॥२६॥

---

बाह्याभ्यन्तरमलक्षयात् भस्मनः ज्ञानाङ्गत्वात्, बाह्यमलमात्रनिवर्तकैः जलादिस्नानैः अलम् किं प्रयोजनम्? इत्यर्थः ॥२४॥

अत एव यतिभिः जलस्नानात् आग्नेयमेव श्रेष्ठमिति भस्मस्नानमेव विधीयते इत्याह—

भस्मना स्नानम् आग्नेयं इति यतिभिः विधीयते । वह्नेः प्रकाशकत्वेन ज्ञानप्रदत्वात् भस्मस्नानं यतिभिः आर्द्रस्नानात् परं श्रेष्ठं, आर्द्रे जलस्नाने जन्तुवधः इति ध्रुवं निश्चयः, जलचरप्राणिवेदनया शैत्येन च प्राणिहिंसाकरमित्यर्थः । अत्र तादृशदोषाभावाच्च ॥२५॥

अथ जलस्य दोषान्तरमुद्भावयति—

आर्द्रं जलं प्रकृतिं गर्भवासप्रकृतिं विन्द्यात्, रक्तशुक्लयोः[3] जलमयत्वात् :

---

1 परं=श्रेष्ठम् ।
2 शीतजलस्नाने इत्यर्थः ।
3 स्त्रीपुरुषवीर्ययोः ।

440 [भस्मस्नानस्य देवगणसम्मतत्वम्]

ब्रह्माद्या विबुधाः सर्वे मुनयो नारदादयः ।
योगिनः सनकाद्याश्च बाणाद्या दानवा[1]अपि ॥२७॥

441

भस्मस्नानयुताः सर्वे शिवभक्तिपरायणाः ।
निर्मुक्तदोषकलिलाः[2] नित्यशुद्धा भवन्ति हि ॥२८॥

442 [भस्मोद्धूलनविधिः]

नमश्शिवायेति भस्म कृत्वा सप्ताभिमन्त्रितम् ।[3]
[4]उद्धूलयेत्तेन देहं त्रिपुण्ड्रं चापि धारयेत् ॥२९॥

---

'स वा एष पुरुषोऽन्नरसमयः"

इति श्रुतेः । प्रकृतिं बन्धनं भोज्य भोजनरूपेण पुरुषस्य पाशरूपं विदुः अभिज्ञाः जानन्ति ।

"पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ॥"

इति भगवदुक्तेः । पुरुषस्य प्रकृतिबद्धत्वात् प्रकृतेस्तु प्राणार्थं जलस्नानोत्थ-दोषनिवृत्त्यर्थं भस्मांना स्नानं इच्छाविषयीक्रियते इत्यर्थः ॥२६॥

अथेदं भस्मना स्नानं कैः अङ्गीकृतम् ? इत्यत्राह ॥२७॥

कलिलाः समूहाः इत्यर्थः । शिष्टं स्पष्टम् ॥२८॥

अथ भस्मोद्धूलनं त्रिपुण्ड्रधारणं च कर्तव्यमित्याह—

---

1 दानवाः असुराश्च ।

2 दोषनिचयाः (क)

3 सप्तजन्मकृतदोषनिवृत्त्यर्थं सप्तवाराभिमन्त्रणमिति भावः ।

4 भस्मनिमित्तधूळिमयानि कुर्यादिति भावः ।

443 [तत्र त्रिपुण्ड्रे वैशिष्ट्यम् ]

सर्वाङ्गोद्धूलनं चापि न समानं त्रिपुण्ड्रकैः ।
तस्मात् त्रिपुण्ड्रमेवैकं लिखेदुद्धूलनं विना ॥३०॥

[त्रिपुण्ड्रधारणे देशकालस्थाननिर्देशः]

त्रिपुण्ड्रं धारयेन्नित्य भस्मना सजलेन च[1]
स्थानेषु पञ्चदशसु शरीरे साधकोत्तमः ॥३१॥

445 [पञ्चदशस्थानविवरणम् ]

[2]उत्तमाङ्गे ललाटे च श्रवणद्वितये तथा ।
गले भुजद्वये चैव हृदि नाभौ च पृष्ठके ॥३२।

---

भस्म "नमश्शिवाय" इतिमन्त्रेण सप्ताभिमन्त्रितं सप्तजन्मकृतदोष-निवृत्त्यर्थं सप्तवारमभिमन्त्रितं कृत्वा तेन भस्मना देहम् उद्धूलयेत् । त्रिपुण्ड्रं चापि देहे रचयेत् इत्यर्थः ॥२९॥

अत्र उद्धूलनापेक्षया त्रिपुण्ड्रस्याधिक्यमाह—

स्पष्टम् ॥३०॥

अथ त्रिपुण्ड्रं कदा कथं कुत्र धारणीयम् ? इत्यत्राह—
स्पष्टम् ॥३१॥

तानि कानि ? इत्यत्राह ॥३२॥

---

1 सलिलेन च(ख)
2 उत्तमाङ्गे=शिरसि ।

446

बाहुयुग्मे ककुद्देशे[1] [2]मणिबन्धद्वये तथा।

त्रिपुण्ड्रं भस्मना धार्यं [3]मूलमन्त्रेण साधकैः ॥३३॥

447 [स्थानेषु त्रिपुण्ड्रधारणफलम्]

वामहस्ततले भस्म क्षिप्त्वाऽऽच्छाद्यान्यपाणिना ।

अग्निरित्यादिमन्त्रेण स्पृशन् वाराऽभिमन्त्र्य च ॥३४॥

448

त्रिपुण्ड्रमुक्तस्थानेषु दद्यात् सजलभस्मना ।

शिवं शिवङ्करं शान्तं स प्राप्नोति न संशयः ॥३५॥

---

त्रियायुष-त्रियम्बक-प्रणव-पञ्चाक्षरमन्त्रैः धारयेत् ।

" शिरोललाटकण्ठवक्षःस्कन्धस्थलेषु
त्रियायुषत्रियम्बकैः तिस्रो रेखाः
कुर्वीत । व्रतमेतत् शाम्भवम् ॥ "

इतिश्रुतेः ॥३३॥

अथ तदभिमन्त्रणप्रकारपूर्वकं समन्त्रकत्रिपुण्ड्रधारणस्य फलमाह—

" अग्निरिति भस्म, वायुरिति भस्म,
जलमिति भस्म, सर्वं ह वा इदं
भस्म मन एतानि चक्षूंषि भस्मानि "

---

1 ककुद्देशे=भुजमूलयुगले ।

2 करमूलभागे ।

3 ओङ्कारेण ।

449 [त्रिपुण्ड्ररचनाप्रकारः]

मध्याङ्गुलित्रयेणैव स्वदक्षिणकरस्य तु ।
षडङ्गुलायतं मानमपि वालिकमानकम्[1] ॥३६॥

450

नेत्रयुग्मप्रमाणेन फाले दद्यात् त्रिपुण्ड्रकम् ॥३७॥

451 [तत्रैव प्रकारान्तरम्]

मध्यमानामिकाङ्गुष्ठैः अनुलोमविलोमतः ।[2]
धारयेद्यः त्रिपुण्ड्राङ्कं स रुद्रो नात्र संशयः ॥३८॥

---

इति मन्त्रेण स्पृशन्, वारा-उदकेन सप्तवारं मूलेन अभिमन्त्रयेत् इत्यर्थः ॥३५॥

अथ त्रिपुण्ड्ररचनाप्रकारमाह—

स्पष्टम् ॥३६॥

अथ प्रकारान्तेण त्रिपुण्ड्रीकरणमाह—

मध्यमानामिकाभ्याम् अनुलोमतः प्रदक्षिणतः रेखाद्वयं, तन्मध्ये अंगुष्ठेन विलोमतः अप्रदक्षिणतः एकां रेखां रचयेत् । एवं धृतपुण्ड्रः रुद्रः इत्युक्तत्वात् पूर्वापेक्षया विशेषः इत्यर्थः ॥३८॥

---

1 बालिकमानकं—मुखं यत्प्रमाणं वर्तते तत्र सर्वत्रापीत्यर्थः ।
वालकमानकं-(क)

2 प्रदक्षिणं अप्रदक्षिणं चेत्यर्थः ।

452 [त्रिपुण्ड्रसल्लक्षणानि]

ऋजु श्वेतमनुव्याप्तं[1] स्निग्धं श्रोत्रप्रमाणकम् ।
एवं सल्लक्षणोपेतं त्रिपुण्ड्रं सर्वसिद्धिदम् ॥३९॥

453 [त्रिपुण्ड्रस्य महत्त्वम्]

प्रातःकाले च मध्याह्ने सायाह्ने च त्रिपुण्ड्रकम् ।
कचादि[2] भस्मना कुर्यात् स रुद्रो नात्र संशयः ॥४०॥

454

एवंविधं विभूत्या च कुरुते यस्त्रिपुण्ड्रकम् ।
स रौद्रधर्मसंयुक्तः त्रयीमय इति श्रुतिः ॥४१॥

---

अथ तल्लक्षणं कथयति—

ऋजु सरलं, श्वेतं शुभ्रं, अनुव्याप्तं अविच्छिन्नं, स्निग्धं सान्द्रं, श्रोत्रप्रमाणकं श्रवणपरिमितमित्यर्थः ॥३९॥

अथास्य त्रिपुण्ड्रस्य महत्त्वं सूत्रद्वयेन सूचयति—

यः विभूत्या भस्मना एवंविधंऋजुश्वेतादिसल्लक्षणोपेतं त्रिपुण्ड्रक कुरुते, सः रौद्रधर्मसंयुक्तः सन् रुद्रसम्बन्धी यो धर्मः शिवाचारः तेन संयुक्तःसन् त्रयीमयः वेदत्रयस्वरूपः इति श्रुतिः—

---

1 अनुव्याप्तं-परस्पररेखामिश्रणविहीनमिति व्याख्या (क)
2 कदाचित्–(घ) उत्तरत्र व्याख्याऽप्येवमेव ।

455 [तत्र देवगणसम्मतिः]

ब्रह्मा विष्णुश्च रुद्रश्च देवाः शक्रपुरोगमाः
त्रिपुण्ड्रं धारयन्त्येव भस्मना परिकल्पितम् ।।४२।।

456

वसिष्ठाद्या महाभागाः मुनयः श्रुतिकोविदा. ।
धारयन्ति सदाकालं त्रिपुण्ड्रं भस्मना कृतम् ।।४३।।

---

"य इदं त्रिपुण्ड्रं धरते स वेदत्रयधारी भवति, स सन्ततं त्रेताग्निर्भवति. सः पुष्करत्रयस्नातो भवति. यः त्रिपुण्ड्रधारी पुरुषः स रुद्रः, स परमेष्ठी, य इदं त्रिपुण्ड्रम् धृतवन्तं पुरुष पश्यति स सर्वपापेभ्यो विनिर्मुक्तो भवति, स सर्ववेदाध्ययनजन्मफलवान् भवति"

इति वृद्धजाबालादिबहुश्रुतिसिद्धोऽयमर्थः ।

तस्मात् प्रातरादिकालत्रये कदाचित् त्रिपुण्ड्रं यः कुर्यात् स रुद्रः शिव एव न संशयः इत्यर्थः ।।४१।।

अथ एतादृशं त्रिपुण्ड्रं कैः[1] धृतम् ? इत्यत्राह—

स्पष्टम् ।।४३।।

---

1 कैस्कैः (ख)

457 . [त्रिपुण्ड्रधारणे प्रमाणम्]

शैवागमेषु वेदेषु पुराणेष्वखिलेषु च ।
स्मृतीतिहासकल्पेषु विहितं भस्मपुण्ड्रकम् ।।

458

धारणीयं समस्तानां[1] शैवानां च विशेषतः ।।४४।।

459 [विभूतिधारणस्थलनिगमनम्]

नास्तिको भिन्नमर्यादः दुराचारपरायणः ।[2]
भस्मत्रिपुण्ड्रधारी चेत् मुच्यते सर्वकिल्बषैः ।।४५।

इति भस्मधारणस्थलम् ।।६।।

---

अथेदं कुत्र विहितम् ? इत्यत्राह—

कल्पेषु कल्पसूत्रेषु इत्यर्थः । शिष्टं स्पष्टम् ।।४४।।

अथ अनेन त्रिपुण्ड्रधारणेन सकलपापक्षयः इत्युक्त्वा भस्मधारणस्थलं समापयति—

वेदविरुद्धाचारनिष्ठः नास्तिकः— शरीरेन्द्रियबुद्धिव्यतिरेकेण कश्चिदात्मा नास्तीति वदन् चार्वाकादिः, अत एव दुराचारपरायणः, तादृशोऽपि भस्मत्रिपुण्ड्रधारी चेत् सर्वकिल्बिषैः समस्तपापैरपि मुच्यते इत्यर्थः ।।४५।।

---

1 समस्तानां–सर्वेषां मनुष्याणाम् ।
2 अपि इति शेषः ।

## (7) भक्तस्थले रुद्राक्षधारणस्थलम् (1-7)

—o—

460 [रुद्राक्षधारणस्थलनिरूपणम्]

भस्मना विहितस्नानः त्रिपुण्ड्राङ्कितमस्तकः ।
शिवार्चनपरो नित्यं रुद्राक्षमपि धारयेत् ॥१॥

461 [तद्धारणप्रयोजनम्]

रुद्राक्षधारणादेव मुच्यन्ते सर्वपातकैः ।
दुष्टचित्ताः दुराचाराः [1]दुष्प्राज्ञा अपि मानवाः ॥२॥

462 [रुद्राक्षोत्पत्तिकथाः]

पुरा त्रिपुरसंहारे त्रिनेत्रो जगतां पतिः ।
उदपश्यत् पुरान् योगं उन्मीलितविलोचनः ॥३॥

463

निपेतुस्तस्य नेत्रेभ्यः बहवो जलबिन्दवः ।
तेभ्यो जाता हि रुद्राक्षाः रुद्राक्षा इति कीर्तिताः ॥४॥

---

अथ रुद्राक्षधारणस्थलं निरूपयति—

मस्तकः ललाटः इत्यर्थः । शिष्टं स्पष्टम् ॥१॥

किमनेन प्रयोजनम् ? इत्यत्राह—रुद्रेति ।

स्पष्टम् ॥२॥

नन्वेते रुद्राक्षाः कथमुत्पन्नाः ? कुतः एतादृक् सामर्थ्यम् ? इत्यत्राह ॥३॥

---

1 दुष्प्रज्ञाः (क)

464

रुद्रनेत्रसमुत्पन्नाः रुद्राक्षाः लोकपावनाः ॥४॥

---

पूर्वं त्रिपुरसंहारप्रस्तावे जगतां पतिः विश्वपतिः त्रिनेत्रः सोमसूर्याग्निनयनः शिवः उन्मीलितविलोचनः संहारकाल एव ललाटनेत्रस्योन्मेषात् विकसितनेत्रत्रयः सन् पुरां त्रिपुराणां योगं सम्बन्धं उदपश्यत् ऊर्ध्वं दृष्टवान् , तस्य नेत्रेभ्यः बहवः जलबिन्दवः उदककणाः निपेतुः भूमौ पतिताः । तेभ्यो जलबिन्दुभ्यो रुद्राक्षाः जाताः । हि-यस्मात् कारणात् रुद्रनेत्रसमुत्पन्नाः तस्मात् कारणात् रुद्राक्षाः इति कीर्तिताः । तत एव लोकपावनाः इत्यर्थः ॥४॥

465 [तत्र श्रुतिप्रामाण्यम् ]

अत्र—

"पुरा त्रिपुरवधायोन्मीलिताक्षोऽहं तेभ्यः जलबिन्दवः भूमौ पतिताः,[1] ते रुद्राक्षाः जाताः सर्वानुग्रहार्थाय, तेषां नामोच्चारणेन [2]दशशतगोदानफलं भवति, दर्शनस्पर्शनाभ्यां द्विगुणं त्रिगुणं[3] फलं भवति, अत ऊर्ध्वं वक्तुं न शक्यम् ॥"

इति बृहज्जाबालादिश्रुतिः ॥

466 [तदुत्पत्तिप्रकारभेदाः]

एवं रुद्रनेत्रसमुत्पन्नत्वात् ते तत्कलाभेदेन अष्टत्रिंशत्प्रकारेण उत्पत्तिं भजन्ते इत्याह—

---

[1] पातिताः (ख)

[2] दशशतं-सहस्रम्

[3] द्विसहस्रगोदानफलं, त्रिसहस्रगोदानफलेचेत्यर्थः ।

13

अष्टत्रिंशत्प्रभेदेन भवन्त्युत्पत्तिभेदतः ॥५॥

467 [तदुत्पत्तिहेतुशिवनेत्रभेदः]

नेत्रात् सूर्यात्मनः शम्भोः कपिलाः द्वादशोदिताः ।
श्वेताः षोडश सञ्जाताः सोमरूपाद्विलोचनात् ॥६॥

468

कृष्णा दशविधा जाता वह्निरूपाद्विलोचनात् ।
एवमुत्पत्तिभेदेन रुद्राक्षाः बहुधा स्मृताः[1] ॥७॥

---

स्पष्टम् ॥५॥

अथ कस्मान्नेत्रात् कियन्तः उत्पन्नाः ? इत्यत्राह—

शिवस्य सूर्यात्मनो नेत्रात् कपिलाः कपिलवर्णाः द्वादश द्वादशभेदवन्तः रुद्राक्षाः उदिताः उत्पन्नाः इत्यर्थः । सूर्यनेत्रस्य तापिन्यादिद्वादशकलात्मकत्वात् ॥ सोमरूपाद्विलोचनात् चन्द्रनयनात् श्वेताः शुभ्रवर्णाः षोडश षोडशभेदवन्तः सञ्जाताः उत्पन्नाः । तन्नेत्रस्य अमृतादिषोडशकलात्मकत्वात् ॥ वह्निरूपाद्विलोचनात् वह्निनयनात् कृष्णाः कृष्णवर्णाः दशविधाः दशभेदवन्तः जाताः उत्पन्नाः । तन्नेत्रस्य धूम्रार्चिःप्रभृतिदशकलात्मकत्वात् । एवं उत्पत्तिभेदेन रुद्राक्षाः बहुविधाः स्मृताः इत्यर्थः ॥६॥

अथ धार्यरुद्राक्षलक्षणमाह—॥७॥

---

[1] द्वादश-षोडश-दशेति आहत्य अष्टत्रिंशदित्यर्थः । सोमसूर्याग्नयः तन्मूलभूताः इत्यर्थः ।

469 [धार्यरुद्राक्षलक्षणम्]

अच्छिद्रं कनकप्रख्यं [1]अनन्यधृतमुत्तमम् ।
रुद्राक्षं धारयेत् प्राज्ञः शिवपूजापरायणः ॥८॥

470 [धारणप्रकारादिनिर्देशः].

यथास्थानं यथावत्तु[2] यथायोगं यथाविधि ।
रुद्राक्षधारणं वक्ष्ये रुद्रसायुज्यसिद्धये ॥९॥

471 [धार्यस्थानं सङ्ख्या च]

शिखायामेकमेकास्यं रुद्राक्षं धारयेत्बुधः ।
द्वित्रिद्वादशवक्त्राणि शिरसि त्रीणि धारयेत् ॥१०॥

472

षट्त्रिंशद्धारयेन्मूर्ध्नि नित्यमेकादशाननान् ॥

---

अच्छिद्रं अकृमिचुम्बितमित्यर्थः । शिष्टं स्पष्टम् ॥८॥
अथ ते कुत्र कथं कति धारणीयाः ? इत्यत्राह—॥९॥

स्पष्टम् ।

प्रतिज्ञेयस्थानं संख्यां चाह—॥१०॥

---

[1] अन्यधृतं तु उच्छिष्टस्थानीयमितिभावः ।
[2] रुद्राक्षेष्वेव वक्त्रभेदो वर्तते इतिज्ञेयम् ।

दशसप्तपञ्चवक्त्रान् षट् षट् कर्णद्वये वहेत् ॥११॥

473

षडष्टवदनान् कण्ठे द्वात्रिंशद्धारयेत् सदा ।
पञ्चाशद्धारयेद्विद्वान् चतुर्वक्त्राणि वक्षसि ॥१२॥

474

त्रयोदशमुखान् बाह्वोः धरेत् षोडश षोडश ।
प्रत्येकं द्वादश वहेत् नवास्यान् मणिबन्धयोः ॥१३॥

475

चतुर्दशमुखं यज्ञसूत्रमष्टोत्तरं शतम् ।
धारयेत् सर्वकालं तु रुद्राक्षं शिवपूजकः ॥१४॥

---

अत्र—"दशसप्तपञ्चवक्त्रान् षट्षट् कर्णद्वये" इत्यत्र—दशमुखं द्वयम्, पञ्चमुखं द्वयम्, सप्तमुखं द्वयम्, एवं षट्षट् कर्णद्वये धारणीयम् इत्यर्थः ॥११॥

"समं स्यादश्रुतत्वात्"[1] ॥१२॥

इति न्यायात्—षट् षट्, ॥१३॥

"कर्णयोरेकमेकम्"

इति रुद्राक्षजाबालश्रुतेः एकमेकं वा कर्णद्वये धारयेत् । इति शिष्टं स्पष्टम् ॥१४॥

---

[1] अश्रुतत्वात्-विशेषबोधकश्रुत्यभावात् ।

एवं रुद्राक्षधारी यः सर्वकाले तु वर्तते ।
तस्य पापकथा[1] नास्ति मूढस्यापि न संशयः ॥१५॥

---

अयं भावः— शुद्धमिश्रसंकीर्णभुवनाधीशशिवाष्टविद्येश्वरशत-रुद्रसंख्यातयज्ञोपवीतधारणेन भुवनाध्वशुद्धिः, वर्णसंख्यातवक्षोमालया वर्णाध्वशुद्धिः, पदसंख्यातमणिबन्धबाहुकण्ठमालया पदाध्वशुद्धिः, षडङ्ग पञ्चब्रह्मप्रणवमन्त्रसंख्यातकर्णाभरणेन मन्त्राध्वशुद्धिः, शिवशक्त्यात्मक-कर्णाभरणेन वा, तत्त्वसङ्ख्यातमस्तकमालया तत्त्वाध्वशुद्धिः, अष्टत्रिंशत्कला-पूर्णसोमसूर्याग्निलक्षणशिरोरन्ध्रमालया कलाध्वशुद्धिः ॥

[2]एवंरूपषडध्वकारणीभूतपरशिवब्रह्ममयशिखागतैकरुद्राक्षधारणेन परशिवस्वरूप एव ॥

"यो रुद्राक्षं धत्ते स सत्यं
परमः शिवः, स सत्यं परमः
शिवः ॥"

इति श्रुतेः ॥१५॥

476 [रुद्राक्षधारणात् महापापक्षयरूपं फलम्]

अथैवं रुद्राक्षधारणात् सर्वपापक्षयः इत्याह—

एवं उक्तप्रकारेण एषु स्थानेषु सदारुद्राक्षधारिणः मूढस्यापि पापवार्ता नास्ति, कुतः पापसम्बन्धः ? इत्यर्थः ॥१५॥

---

[1] षडध्वानि-पूर्वोक्तानि-भुवनाध्व, वर्णाध्व, पदाध्व, मन्त्राध्व, तत्त्वाध्व, कलाध्वरूपेण षड्विधानीत्यर्थः ।

[2] पापकथा-पापसम्बन्धः ।

477

ब्रह्महा मद्यपायी च स्वर्णहृत् गुरुतल्पगः ।
मातृघ्ना पितृहा चैव भ्रूणहा कृतघातकः ।

478

रुद्राक्षधारणादेव मुच्यते सर्वपातकैः ॥१६॥

479

दर्शनात् स्पर्शनाच्चैव स्मरणादपि पूजनात् ।
रुद्राक्षधारणाल्लोके मुच्यन्ते पातकैर्विना[1] ॥१७॥

480

ब्राह्मणो वाऽन्त्यजो वाऽपि मूर्खो वा पण्डितोऽपि वा ।
रुद्राक्षधारणादेव मुच्यते सर्वपातकैः ॥१८॥

---

ननु क्षुद्रपापसम्बन्धः नास्तीत्युच्यते वा ? महापातकसम्बन्धः नास्तीत्युच्यते वा ? इत्यत्राह—॥१६॥

अत्र सर्वशब्देन अनुक्तपातकानि सङ्गृहीतानीति बोध्यम् ॥१७॥

अथ विशेषमाह—

स्पष्टम् ॥१७॥

अत्र जनशब्देन को वा विवक्षितः ? इत्यत्राह—॥

---

1 पातकैर्विना- सर्वविधपातकसम्बन्धशून्याः इत्यर्थः ।

गवां कोटिप्रदानस्य यत् फलं भुवि लभ्यते ।
तत्फलं लभते मर्त्यः नित्यं रुद्राक्षधारणात् ॥१९॥
[1]मृत्युकाले च रुद्राक्षं निष्पीड्य सह वारिणा ।
यः पिबेत् चिन्तयन् रुद्रं रुद्रलोकं स गच्छति[2]॥२०॥
भस्मोद्धूलित सर्वाङ्गाः धृतरुद्राक्षमालिकाः ।
ये भवन्ति महात्मानः ते रुद्राः नात्र संशयः ॥२१॥

---

अनेन रुद्राक्षधारणे सर्वेऽप्यधिकारिणः इत्युक्तं भवति ॥

481 [रुद्राक्षधारणात् पुण्योत्पत्तिः]

ननु—अनेन पापक्षयमात्रं वा? पुण्यमपि किञ्चिदस्ति वा? इत्यत्राह—

स्पष्टम् ॥१९॥

482 [अन्त्यकालिकफलविशेषः]

अथ अस्यैतावन्मात्रमेव न, क्रियाभेदेन अन्योऽपि चमत्कारोऽस्तीत्याह—मृत्युकाल इति ॥

स्पष्टम् ॥२०॥

483 [भस्मरुद्राक्षधारिणां वैभवम्]

एवं निश्चित्य ये भस्मरुद्राक्षधारिणः सन्ति, ते रुद्रा एवेत्याह—भस्मोद्धूलितेति ॥

स्पष्टम् ॥२१॥

---

[1] मृतिकाले च—(घ)
[2] चगच्छति (ङ)

484

नित्यानि काम्यानि निमित्तजानि कर्माणि सर्वाणि सदाऽपि कुर्वन् ।
[1]योऽभस्मरुद्राक्षधरो यदि स्यात् द्विजो न तस्यास्ति
फलोपपत्तिः ॥२२॥

485 [निगमनम्]

सर्वेषु वर्णाश्रमसङ्गतेषु नित्यं सदाचारपरायणेषु ।
श्रुतिस्मृतिभ्यामिह चोद्यमानः[2]विभूतिरुद्राक्षधरः[3]समानः[4] ॥२३॥

---

अथ भस्मरुद्राक्षधारणशून्येन द्विजेन विधीयमानं नित्यनैमित्तिकादिकं कर्मापि व्यर्थमित्याह—नित्यानि काम्यानीति ॥

उपपत्तिः प्राप्तिरित्यर्थः । शिष्टं स्पष्टम् ॥२२॥

तस्मात् वर्णाश्रमाचारनिष्ठेषु भस्मरुद्राक्षधरः एक एव गरीयान् इत्याह—

ब्राह्मणादिवर्णब्रह्मचर्याद्याश्रमसंयुतेषु सर्वेषु विषये इहलोके विभूतिरुद्राक्षधरः समानः भस्मरुद्राक्षधरः एक एव श्रुतिस्मृतिभ्यां चोद्यमानः श्लाघनीयः ॥२३॥[5]

---

1 न भस्म (घ)
2 चोद्यमानाः (घ)
3 रुद्राक्षधराः (घ)
4 समानाः (घ)
5 श्लाघनीयः इतिभावः । (ख)

इति श्री षट्स्थलब्रह्मिणा शिवयोगि
नाम्ना प्रणीते वीरशैवधर्मनिर्णये
सिद्धान्तशिखामणौ
भक्तस्थले विभूतिरुद्राक्षधारणप्रसङ्गो
नाम सप्तमः परिच्छेदः समाप्तः

— — —

---

इति श्रीमत्पदवाक्यप्रमाणपारावार
धुरीणश्री मरितोण्टदार्येण विरचितायां
तत्त्वप्रदीपिकाख्यायां सिद्धान्त
शिखामणिव्याख्यायां
विभूतिरुद्राक्षधारणप्रसङ्गो नाम
सप्तमः परिच्छेदः
समाप्तः ॥

— —

॥ श्री शिवाय नमः ॥

# अथ सिद्धान्तशिखामणिः

## अष्टमः परिच्छेदः

### पञ्चाक्षरीजपस्थलम्

## (8) भक्तस्थले पञ्चाक्षरीजपस्थलम् (1-8)

धृतश्रीभूतिरुद्राक्षः[1] प्रयतो लिङ्गधारकः ।
जपेत् पञ्चाक्षरीविद्यां शिवतत्त्वप्रबोधिनीम् ॥१॥

---

486 [पञ्चाक्षरीजपस्थलनिरूपणम् ]

अथैवं शिवलिङ्गरुद्राक्षधारणसम्पन्नः शिवतत्त्वप्रकाशार्थं पञ्चाक्षरीं जपेदिति पञ्चाक्षरीजपस्थलं अगस्त्याय निरूपयति श्रीरेणुकः—

धृतमाङ्गल्यभूतिरुद्राक्षपवित्रितः शिवलिङ्गधारकः शिवतत्त्वप्रबोधिनीं परशिवतत्त्वप्रकाशिनीं पञ्चाक्षरीविद्यां "नमश्शिवाय" इति श्रीरुद्रमन्त्रप्रसिद्धपञ्चाक्षरीमन्त्रं जपेत् मनसा उपांशु वाचिकस्वरूपेण उच्चरेत् ॥

[2]"जप अव्यक्तायां वाचि"

इति धातोः इत्यर्थः ॥

---

1 रुद्राक्षः (ख)

2 जप व्यक्तायां (क)

शिवतत्त्वात् परं नास्ति यथा तत्त्वान्तरं महत् ।
तथा पञ्चाक्षरीमन्त्रात् नास्ति मन्त्रान्तरं महत् ॥२॥

487 [मन्त्रेषु पञ्चाक्षर्या विशेषः]

ननु शिवतत्त्वप्रकाशकानां मन्त्राणां बाहुल्यात् किमित्येष पञ्चाक्षरमन्त्र एव जप्यः ? इत्यत्राह—

"शिव एको ध्येयः"

इत्यादिश्रुतेः शिवतत्त्वात् परं व्यतिरिक्तं महत् बृहत् तत्त्वान्तरं यथा नास्ति, तथा पञ्चाक्षरीमन्त्रात्—

"नमश्शिवाय"

इति पञ्चाक्षरीमन्त्रात् महत् मन्त्रान्तरं नास्तीत्यर्थः ॥

488

"विद्यासु श्रुतिरुत्कृष्टा रुद्रैकादशिनी श्रुतौ ।
तत्र पञ्चाक्षरी, तस्यां 'शिव' इत्यक्षरद्वयम् ॥"

इति पौराणिकोक्तेः "शिव" इत्यक्षरद्वयस्य वेदसारत्वात् । [1]तत्रत्याकारस्य ऋक्सामसङ्ग्रहरूपत्वात् तयोरकाराद्यत्वात्, [2]इकारस्य यजुस्सङ्ग्रहरूपत्वात् तस्य इकाराद्यत्वात्, [3]शकारस्य अथर्वसङ्ग्रहरूपत्वात् तस्य शकाराद्यत्वात्, [4]वकारस्य व्याकरणसङ्ग्रहरूपत्वात तस्य-वकाराद्यत्वात् ॥

---

1 वकारादुत्तरस्य अकारस्येत्यर्थः । अग्निमीळेपुरोहितं इति ऋगादिः । अग्नआयाहि वीतये इति सामादिः ।

2 शकारादुत्तरस्य इकारस्येत्यर्थः । इषेत्वोर्जेत्वा इति यजुरादिः ।

3 शिवशब्दाद्याक्षरस्येत्यर्थः । शंनोदेवीरभिष्टये इति अथर्ववेदादिः ।

4 शिवशब्दघटकवकारस्येत्यर्थः । वृद्धिरादैच् इति व्याकरणादिः ।

ज्ञाते पञ्चाक्षरीमन्त्रे किं वामन्त्रान्तरैः फलम् ? ।
ज्ञाते शिवे जगन्मूले किं फलं देवतान्तरैः ? ॥३॥

---

एवं वेदवेदाङ्गसाररूपत्वात् तादृक्शिवशब्दघटितत्वेनैव एष पञ्चाक्षरीमन्त्र एव सर्वमन्त्रोत्कृष्टः इत्यर्थः ॥२॥

489 [पञ्चाक्षरीज्ञानस्य सर्वमन्त्रज्ञानसमत्वम् ]

एवं पञ्चाक्षरीमन्त्रे शिवे च ज्ञाते सति, मन्त्रान्तरैः देवतान्तरैश्च किं प्रयोजनम् ? इत्याह—

"एको ह वै नारायण आसीत्"[1] इतिश्रुतेः विष्ण्वादिसकलविश्वमूलत्वेन परशिवे ज्ञाते सति, तदीयसृष्ट्यन्तर्गतत्वेन जननमरणपरिपीडितैः विष्ण्वादिदेवतान्तरैः किं फलम् ? न किञ्चित् फलमित्यर्थः ॥

"न हि भिक्षुको भिक्षुकान्तरं याचयति, सत्यन्यस्मिन् दातरि" इतिन्यायात् ॥३॥

ननु—

490 [शिवस्य जन्मादिसम्बन्धाभाववर्णनम् ]

"एको ह वै नारायण आसीत्"

इत्यत्र

[2]"सदेव सोम्येदमग्र आसीत्"

इत्यादि ब्रह्मप्रतिपादकवाक्यसाम्यश्रवणात्,
कथं उत्पत्तिपरत्वम् ? इति चेत् न ॥

---

1 शिवेन जगतः सृष्टिकाले इत्यर्थः । अन्यथा सर्वस्य जगतः विष्णुमूलत्वं स्यात् । उत्तरत्र'न ब्रह्मा' इत्यस्य विष्णुसृष्ट्यमन्तरमेव ब्रह्मसृष्टेः इत्यर्थः । नेशानः इत्यस्य तस्य सृष्टिकर्तृत्वेन, प्रकृते सृष्टिकर्मण एवाभिधानात् इत्यर्थः ।

2 अत्र सत्पदं शिवपरमेव । एवमेव ब्रह्मपदं च शिवपरमेव । यदेकं सूक्ष्मं सर्वकारणं मङ्गलमयं तदेव शिवपदवाच्यमित्यर्थः ।

"रोहितो लोहितादासीत्
शक्तेरासीत् पराशरः"

इतिवत् उत्पत्तिमत्तापरतोपपत्तेः ।[1] न च तद्वत् हेतुश्रवणाभावात् कथं उत्पत्तिपरत्वमिति वाच्यम् ।[2]

"ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते"

इति शिवोपनिषद्वचनात्, विष्णोरुत्पत्तेः श्रूयमाणत्वात् । न चात्र नारायणस्योत्पत्तिः न श्रूयते, किन्तु विष्णोरेव । तस्य च नारायणांशीभूतत्वात्—

'आदित्यानामहं विष्णुः"

इति गीतत्वात् अंशपरत्वमेवेति वाच्यम् । मुख्यब्रह्मरुद्रमध्यपठितविष्णुशब्दस्य अंशपरत्वासम्भवात् । [3]प्रायःपाठविरोधात् ।

"विष्णुरित्या परमविद्वन् जातो
बृहन्नभिपाति तृतीयम्"

इति श्रुतेः, महाविष्णोरेव उत्पत्तिश्रवणाच्च ।

"अजात इत्येव कश्चिद्भीरुः
प्रपद्यते रुद्र यत्ते दक्षिणं
मुखं तेन मां पाहि नित्यम्"

इति श्वेताश्वतरश्रुतेः, [4]कारणीभूतमहारुद्रस्य अजातत्वश्रवणाच्च इति दिक् ॥

---

[1] सकलक्रिया सामान्यधर्मो हि सत्तेतिभावः ।

[2] लोहितात् शक्तेः इतिवत् इतिभावः ।

[3] प्रायः पाठः=बहुतरस्थलेषु श्रुतः उत्पत्तिबोधकवाक्यपाठः ।

[4] तथाच जगन्मूलभूतः महारुद्र एव तत्रतत्र शिवशब्देनोच्यते इतिभावः ।

[1]सप्तकोटिषु मन्त्रेषु मन्त्रः पञ्चाक्षरो महान् ।
ब्रह्मविष्ण्वादिदेवेषु यथा शम्भुर्महत्तरः ॥ ४ ॥
अशेषजगतां हेतुः परमात्मा महेश्वरः ।
तस्य वाचकमन्त्रोऽयं[3] सर्वमन्त्रैककारणम् [4]॥५॥

---

491 [कस्मिन्नपि मन्त्रे पञ्चाक्षरीसाम्याभावः]

ननु सप्तकोटिमहामन्त्रेषु कोऽप्यस्य समानमन्त्रो नास्ति वा इत्यत्राह—

"सर्वमन्यत् परित्यज्य हेयान् विष्ण्वादिकान् सुरान् ।
शिव एव सदा ध्येयः सर्वसंसारनाशनः ॥"

इति पिप्पलादश्रुतेः ।

"अजात इत्येव"

इत्युदाहृतश्रुतेश्च[2] मुमुक्षुपास्यत्वात् अजातत्वेन ब्रह्मादिषु शिवः यथा महान्, तथा सप्तकोटिमहामन्त्रेषु वेदसारत्वात् पञ्चाक्षरमन्त्रो महान् इत्यर्थः ॥४॥

492 [पञ्चाक्षर्याः सर्वोत्तमत्वम् ]

ननु विष्ण्वादिसकलविश्वमूलत्वात् शिवः सर्वोत्तमो भवतु, पञ्चाक्षरीमन्त्रस्य कथं सर्वोत्तमत्वम् : इत्याशङ्क्याह—

शिवः यथा सकलजगत्कारणं तथा तद्वाचकमन्त्रोऽपि सकलमन्त्रकारणमित्यर्थः ॥५॥

---

1 'नराणां तारकाः प्रोक्ताः मन्त्रास्ते सप्तकोटयः' इति पारमेश्वरे ।
2 उदाहृता या पिप्पलादश्रुतिः तस्या एवेत्यर्थः ।
3 तस्य महेश्वरस्य वाचकः तस्य मन्त्र. इत्यर्थः ।
4 एक शब्दः मूलत्वं असाधारणत्वं च सूचयति।

तस्याभिधानमन्त्रोऽयं[1] अभिधेयश्च स स्मृतः ।
अभिधानाभिधेयत्वात् मन्त्रात् सिद्धः परश्शिवः ॥६॥

---

493 [तदुपपादनम्]

तत् कथमित्यत्राह—

अयं मन्त्रः तस्य शिवस्य अभिधानमन्त्रः नाम्नो मन्त्रः इत्यर्थः । सः शिवः अभिधेयश्च तन्मन्त्रेणाभिधातुं योग्यः इति स्मृतः । अभिधानाभिधेयत्वात् शिवाभिधानाभिधेयत्वात् मन्त्रात् अस्मान्मन्त्रात् परः शिवः सिद्धः प्रकाशितः[2] ॥६॥

494 [पञ्चाक्षर्याः शिवप्रकाशकत्ववर्णनम्]

मन्त्राणां यजनीयदेवताप्रकाशकत्वेन एतन्मन्त्राभावे शिवस्य स्फूर्तिरेव न स्यात् । किं तावतेति तु नाशङ्कनीयम् । शिवस्य सकलतत्त्वोपादानकारणत्वात् तद्वाचकपञ्चाशद्वर्णमयत्वं च युक्तमिति तस्य सकलमन्त्रमूलत्वात्, तत्प्रकाशकत्वेन सकलमन्त्रकारणत्वमिति ॥

495

तत् कथमिति चेत्- उच्यते—

"अथाद्यास्तिथयस्सर्वे स्वराः बिन्द्ववसानकाः ।
तदन्तः कालयोगेन सोमसूर्यौ प्रकीर्तितौ ॥"

---

[1] आख्याह्वे अभिधानं च नामधेयं च नाम च इत्यमरः ।
[2] राध साध संसिद्धौ इतिधातोः सिद्धशब्दः प्रकाशवाचीत्यर्थः ।

पृथिव्यादीनि तत्त्वानि पुरुषान्तानि पञ्चसु ।
क्रमात् कादिषु वर्गेषु मकारान्तेषु सुव्रते ! ॥[1]

वाटवग्निसलिलेन्द्राणां धारणानां चतुष्टयम् ।
तदूर्ध्वेशादिविख्यातं पुरस्तात् ब्रह्मपञ्चकम् ॥

आमूलात् तत्क्रमाद्‍ज्ञेया क्षान्ता सृष्टिरुदाहृता ।

सर्वेषां चैव मन्त्राणां विद्यानां च यशस्विनी ।
इयं योनिः समाख्याता सर्वतन्त्रेषु सर्वदा ॥

इति [2]श्रीपरात्रिंशतिकाशास्त्रस्थित्या, शिवः इत्यत्र शकारस्य ब्रह्मादि पञ्चब्रह्मवाचकत्वात्, वकारस्य मायातत्त्ववाचकत्वेन तत्कार्यरूपकलादि-क्षितिपर्यन्तत्रिंशत्तत्त्वात्, एवं शकारवकारयोः षट्त्रिंशत्तत्त्ववाचकत्वात्, अकारस्य शिवतत्त्वकलारूपषोडशस्वरमयत्वात्, इकारस्य इच्छाशक्ति-वाचकत्वात् । एवं शब्दार्थमयप्रपञ्चयोः अन्तर्भावात् सकलमन्त्रकारणत्वम् मातृकादेः सकलशब्दप्रपञ्चोपादानकारणत्वात् ॥

496

"पञ्चाशन्निजदेहजाक्षरभवैः नानाविधैः धातुभिः,
बह्वर्थैः पदवाक्यमानजनकैः अर्थाविनाभावितैः ।

साभिप्रायसदर्थकर्मफलदानन्दैरनन्तैरिदं
विश्वं व्याप्य चिदात्मनाऽहममित्युज्जृम्भसे मातृके ! ॥"

---

[1] सुव्रते ! इति शिवेन पार्वत्याः संबोधनम् ।
[2] परात्रिंशतिका नाम तन्त्रशास्त्रम् ।

497 [पञ्चाक्षराणां स्वरूपम्]

नमश्शब्दं वदेत् पूर्वं शिवायेति ततः परम् ।
मन्त्रः पञ्चाक्षरो ह्येषः सर्वश्रुतिशिरोगतः ।।७।।

498 [ब्रह्मणः शिवाभिधानकत्वोपपत्तिः]

आदितः परिशुद्धत्वात् मलत्रयवियोगतः ।
शिव इत्युच्यते शम्भुः चिदानन्दघनः प्रभुः ।।८।।

---

पञ्चाशद्वर्णमालाबहुविधनिनदोच्चारणातत्त्वजाल-
व्यक्तिव्यापारसत्तानिरिशगुरुमुखाम्नायविद्यास्वरूपा ।

धात्वाद्युत्पत्तिपूर्वं श्रुतिमुखविविधानेकसिद्धान्तविद्या-
नानाभाषाः क्रियाभिः प्रकटयति यतः सैव ते साङ्गवेदे ।।

इति दूर्वासभगवदुक्तेः इति ।

नन्वेवं चेत् [1]द्व्यक्षरत्वमेव युक्तम्. किमिति पञ्चाक्षररूपेण सर्वश्रुति शिरोगतः सन् मन्त्रोऽयं प्रतिभाति इत्यत्राह--।।७।।

शिवजीवैक्यप्रकाशनार्थं नमश्शब्दपूर्वकत्वेन चित्तत्वेन च पञ्चाक्षर-रूपेण सर्वश्रुतिशिरोगतःसन् मन्त्रोऽयं प्रतिभाति । अत्र नमस्कारेण जीवत्वम्, शिवशब्देन परब्रह्मत्वम्, आयेत्यैक्यम् ।

"अय गतौ"[2]

इति धातोरिति भावः ।।

ननु सच्चिद्घनस्य परब्रह्मणः शिव इत्यभिधानं कथम् ? इत्यत्राह—।।८।।

---

1 शिव इतीति शेषः ।

2 धातुपाठे गतिपदस्य क्रियासामान्यार्थे प्रयोगादितिभावः ।

499 [ब्रह्मणःशिवशब्दवाच्यत्वम्]

आस्पदत्वादशेषाणां मङ्गलानां विशेषतः ।
शिवशब्दाभिधेयो हि देवदेवः त्रियम्बकः ॥९॥

---

चिदानन्दघनः सच्चिदानन्दस्वरूपः प्रभुः सुखप्रदः परब्रह्म आदितः कदापि मलत्रयवियोगतः [1]आणवादिमलत्रयसम्बन्धाभावेन परिशुद्धत्वात् निर्मलत्वात् शिव इत्युच्यते ।

"वश कान्तौ"

इतिधातोः स्वच्छप्रकाशरूपत्वादिति भावः ॥

अथ सकलमङ्गलावासभूमित्वाच्च शिवशब्दाभिधेयं ब्रह्मेत्याह—॥८॥

अत्र [2]त्रियम्बकशब्देन सृष्टिस्थित्यादिकारणं परब्रह्मोच्यते । सूर्यादीनां सृष्ट्यादिकारणत्वात् —

"ऋतं सत्यं परंब्रह्म पुरुषं कृष्णपिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षम् "

इतिश्रुतेः त्रियम्बकः, देवदेवः ब्रह्मादीनामपि देवः परमेश्वरः अशेषाणां समस्तानां मङ्गलानां विशेषतः विष्णवादिभ्योऽधिकतः आस्पदत्वात् आश्रयत्वात् । शिवशब्दाभिधेयो हि–

"कल्याणं मङ्गलं शिवम्"

इति प्रसिद्धत्वात् ॥९॥

---

1 आणव-माया-कार्म्यरूपं मलत्रयम् ।

2 क्वचित् त्रियम्बकपदेन त्रिलोचन इत्यस्यर्थः वर्ण्यते । ईक्षणं नयनं चक्षुः अक्षिलोचनमम्बकं इति वैजयन्ती ।

500 [शिवशब्दगतो विशेषः]

शिव इत्यक्षरद्वन्द्वं परब्रह्मप्रकाशकम् ।
मुख्यवृत्त्या तदन्येषां शब्दानां गुणवृत्तयः[1] ॥१०॥

501 [शिवशब्दस्य ब्रह्ममुख्यनामत्वम्]

तस्मान्मुख्यतरं नाम शिव इत्यक्षरद्वयम् ।
सच्चिदानन्दरूपस्य शम्भोरमिततेजसः ॥११॥
एतन्नामावलम्बेन मन्त्रः पञ्चाक्षरः स्मृतः ॥

---

ननु अनेकनाम्नां विद्यमानत्वात् शिवशब्देनैव किमिति परब्रह्म अभिधीयते ? इत्यत्राह—

शिव इत्यक्षरद्वयं मुख्यवृत्त्या परब्रह्मप्रकाशकम्, तदन्येषां शब्दानां शिवशब्दातिरिक्तभवादिशब्दानां गुणवृत्त्या—

"सिंहो माणवकः"

इत्यादिवत् गुणयोगेन परब्रह्मप्रकाशकारकत्वमित्यर्थः ॥१०॥

अथ उक्तार्थमुपसंहरति—

महान् इति शेषः । शिव इति अक्षरद्वयपरिमितप्रकाशरूपस्य सच्चिदानन्दघनस्य शम्भोः परब्रह्मणः मुख्यतरं अत्यन्तमुख्यं नाम । एतन्नामावलम्बेन एतन्नामघटितत्वेन पञ्चाक्षरो मन्त्रः महानिति स्मृतः ॥११॥

---

1 गौणवृत्तयः (घ.ङ.)

502 [पञ्चाक्षरोपयोगवर्णनम्]

यस्मादतः सदाजप्यः मोक्षकांक्षिभिरादरात् ॥१२॥

यथाऽनादिर्महादेवः सिद्धः संसारमोचकः ।[1]

503

तथा पञ्चाक्षरो मन्त्रः संसारक्षयकारकः ॥१३॥

---

अथ किमनेन कर्तव्यम् ? किं फलम् ? इत्यत्र दृष्टान्तपूर्वकमाह—

यस्मात् शिवनामघटितत्वेन पञ्चाक्षरमन्त्रो महान्, अतः तस्मात् कारणात् मोक्षकांक्षिभिः पुरुषैः आदरात् सदा जप्यः । अत्र दृष्टान्तः—

''सर्वमन्यत् परित्यज्य हेयान् विष्णवादिकान् सुरान् ।
शिव एव सदा ध्येयः सर्वसंसारनाशनः ॥

इति पिप्पलादश्रुतेः अनादिभूतः परशिवः यथा संसारपाशविमोचकः इति प्रसिद्धः, तथा पञ्चाक्षरमन्त्रः संसारपाशक्षयकारकः इति प्रसिद्धः ।

''अशेषपाशविच्छित्त्यै शिव इत्यक्षरद्वयम् ।
अलं नमस्क्रियायुक्तः मुक्तये कल्पितो मनुः ॥[2]

इति ब्रह्मोत्तरखण्डवचनात्- इति ॥१३॥

---

1 तथैव श्रुत्यागमादिषु प्रसिद्धत्वादिति भावः ।

2 मनुः=मन्त्रः कल्पितः=समर्थ इति प्रतिपादितः इत्यर्थः ।

504 [मन्त्रस्यापि विश्वकारणत्वोपपत्तिः]

पञ्चभूतानि सर्वाणि पञ्चतन्मात्रकानि च ।
ज्ञानेन्द्रियाणि पञ्चापि पञ्चकर्मेन्द्रियाणि च ॥१४॥

505

पञ्चब्रह्माणि पञ्चापि कृत्यानि सहकारणैः ।
बोध्यानि पञ्चभिर्वर्णैः पञ्चाक्षरमहामनोः ॥१५॥

506

पञ्चधा पञ्चधा यानि प्रसिद्धानि विशेषतः ।
तानि सर्वाणि वस्तूनि पञ्चाक्षरमयानि हि ॥१६॥

---

नन्वयं मन्त्रः शिववत् संसारक्षयकारकश्चेत्, विश्वकारणत्वं च तद्वदस्तिकिम् ? इत्यत्राह—

पृथिव्यादिपञ्चभूतानि, गन्धादिपञ्चतन्मात्राः[1] ज्ञानशक्तिरूप घ्राणादिपञ्चज्ञानेन्द्रियाणि, क्रियाशक्तिरूपोपस्थादिपञ्चकर्मेन्द्रियाणि, पञ्चसादाख्यपञ्चब्रह्मपर्यायाचारादिपञ्चलिङ्गानि, भवमृडहरादिकरणेशैः सह सृष्ट्यादिपञ्चकृत्यानि पञ्चविधानि सर्वाण्यपि पञ्चाक्षरमहामहामन्त्रस्य पञ्चभिर्वर्णैः बोध्यानि प्रकाश्यानीत्यर्थः ॥१५॥

ननु आलोकेन घटादिवत् प्रकाश्यानि वा ? [3]स्वर्णकुण्डलादिवत् प्रकाश्यानि वा ? इत्यत्राह—

---

1 जगतियद्यत् पञ्चसंख्याकंसङ्करूपं विद्यते तत्सर्वं एतन्मूलमेवेत्याह–

2 तन्मात्राः=भूतशक्तयः । गुणाः इति केचित् । भूतसूक्ष्मरूपाः इतिकेचित् ।

3 स्वर्णात् कुण्डलादिवत् विकार्याणि वा इत्यर्थः ।

507 [पञ्चाक्षर्याः मोक्षप्रदत्वम्]

ओंकारपूर्वो मन्त्रोऽयं पञ्चाक्षरमयः परः ।
शैवागमेषु वेदेषु षडक्षर इति स्मृतः[1] ॥१७॥

---

पञ्चशक्ति–पञ्चाङ्गुलिवचनादानादि पञ्चकर्मेन्द्रियार्थाः मनोबुद्ध्यहङ्कारप्रकृतिपुरुषादीनि पञ्च पञ्च प्रकारेण यानि विशेषतः प्रसिद्धानि तानि सर्वाणि स्वर्णकुण्डलन्यायेन पञ्चाक्षरमयानि[3] पञ्चाक्षरकार्याणि तत्प्रकाश्यानि चेत्यर्थः । वर्णानां शक्तिरूपत्वात् इति ।।१६।।

ननु मोक्षकारणं प्रणवः, पञ्चाक्षर्यां तदभावात् कथं मोक्षप्रदत्वम् इत्यत्राह—

परः उक्तप्रकारेण सर्वोत्कृष्टः, पञ्चाक्षरमयोऽयं मन्त्रः "ॐकारपूर्वः षडक्षरः" इति शिवागमेषु वेदेषु[3] स्मृतः । श्रीरुद्रे—

"नमस्ताराय नमश्शम्भवे च"

इति, ईशानमन्त्रान्ते—

"मे अस्तु सदाशिवोम्"

इति च श्रूयमाणत्वात् ।

"ॐकारात्मतया भाति
शान्त्यतीतः परःशिवः"

इत्यागमोक्तेः ।

---

1 ओंकाररूपेण प्रणवेन साकंचेत् समन्त्रः षडक्षर एव भवतीति भावः
2 अत्र मयट् विकारार्थे इति भावः ।
3 वेदेष्वपि इत्यर्थः । स च वेदभागः श्रीरुद्र–नमकचमकशब्देन प्रसिद्ध' तैत्तिरीययजुस्संहितायां चतुर्थेकाण्डे प्रसिद्ध; !

509

मन्त्रस्यास्यादिभूतेन प्रणवेन महामनोः ।[1]
प्रबोध्यते महादेवः केवलः चित्सुखात्मकः ॥१८॥

---

शिवो वा प्रणवः प्रोक्तः प्रणवो वा शिवः स्मृतः ।
वाच्यवाचकयोर्भेदः नात्यन्तं विद्यते क्वचित् ।।[3]

इति पौराणिकोक्तेश्च शिवप्रणवयोरभेदात् ओङ्कारपूर्वत्वेन षडक्षर इत्यर्थः ॥१७॥

508 [मन्त्रबीजरूपप्रणवमहिमा]

अथ—

'प्रथमं तारकारूपं द्वितीयं दण्ड उच्यते ।
तृतीयं कुण्डलाकारं चतुर्थं चार्धचन्द्रकम् ॥
पञ्चमं दर्पणाकारं षष्ठं ज्योतिःस्वरूपकम् ।।
नकारस्तारकारूपं मकारो दण्डउच्यते ।
शिकारः कुण्डलाकारः [3]विकारश्चार्धचन्द्रकः ।।
यकारो दर्पणाकारः ॐकारः पञ्चवर्णराट् ॥"

इति शिवागमवचनात् पञ्चाक्षरकल्पतरोः बीजभूतस्य ॐकारस्य माहात्म्यं सूत्रत्रयेण निरूपयति—

महामन्त्ररूपस्यास्य पञ्चाक्षरमन्त्रस्य आदिभूतेन प्रणवेन सच्चिदा-

---

1 पञ्चाक्षरीमन्त्रस्येत्यर्थः ।

2 मनुशब्दः मन्त्रवाची । मननार्थप्राधान्यात् ।

3 वाच्यवाचकयोरभेदमतानुसारेणैवमुक्तम् ।

4. वाकारः (क)

510 [शिवस्य प्रणवमात्रप्रकाश्यत्वम्]

प्रणवेनैकवर्णेन[1] परब्रह्म प्रकाश्यते ।
अद्वितीयं परानन्दं शिवाख्यं निष्प्रपञ्चकम् ॥१९॥

---

नन्दात्मकः परशिवः प्रकाश्यते इत्यर्थः !

"[2]वै यो रुद्रः स भगवान्"

इत्युपक्रम्य—

"य ॐकारः सप्रणवः, यः प्रणवः स सर्वव्यापी, यः सर्वव्यापी सः अनन्तः, यः अनन्तः तत् तारम्, यत् तारं तत् सूक्ष्मम्, यत् सूक्ष्मं तत् शुक्लम्, यत् शुक्लं तत वैद्युतम्, यत् वैद्युत तत् परंब्रह्म, स एकः स एको रुद्रः, सईशानः, स भगवान्, स महेश्वरः स महादेवः"

इति अथर्वशिराश्रुत्या प्रणवः एव सच्चिदानन्दात्मकं परब्रह्मेति श्रूयमाणत्वादिति ॥१८॥

ननु शिवः प्रणवेन विना न केनापि प्रकाश्यते वा ? इत्यत्राह—

"शिवं परात्परं सूक्ष्मं नित्यं सर्वगमव्ययम्"

इति शिवागमोक्तेः शिवाख्यं परानन्दं सच्चिदानन्दलक्षणं अद्वितीयम्"

"एकमेवाद्वितीयम्"

---

1 अकारोकारमकारात्मकस्वरत्रयसंवलितेन ओंकाररूपेण एकाक्षरेणेत्यर्थः ।
2 'वै' इति नास्ति (क)

511 [प्रणवप्रकाशक्रमः]

परमात्ममनुर्ज्ञेयः सोऽहंरूपः सनातनः ।
जायते सहयोर्लोपात्[4] ॐमित्येकाक्षरो मनुः ॥२०॥

---

इतिश्रुतेः द्वितीयशून्यम्,

"नेह नानाऽस्ति किञ्चन"

इति श्रुतेः निष्प्रपञ्चकम्, अत एव प्रापञ्चिकभेदशून्यम्[2] परंब्रह्म प्रणवेनैक-वर्णेन प्रणवेनैवेत्यर्थः । प्रकाश्यते प्रबोध्यते, प्रणवांशीभूताकारोकारमकाराणां, सच्चिदानन्दवाचकत्वात् इति ।

एवं च "नमश्शिवाय" इति पञ्चाक्षराणि[3]आचार-गुरु-शिव-प्रसाद-लिङ्गबीजाक्षराणि, ॐकारो महालिङ्गबीजम् इति, [4]बीजवृक्षरूपप्रणव पञ्चाचाक्षर एव षट्स्थलबीजमिति तात्पर्यम् ॥१९॥

ननु अस्य लिङ्गाङ्गषट्स्थलयोगकारणस्य प्रणवस्य सच्चिदानन्दलक्षण ब्रह्मप्रकाशकत्वमस्तु, निष्प्रपञ्चब्रह्मप्रतिपादकत्वं कथम् ? इत्यत्र, अजप गायत्रीमन्त्रयोगपूर्वकं तत्स्वरूपं[5]निरूपयाति—

परमात्ममनुः परमात्ममन्त्रः सोऽहंरूपः प्रत्यभिज्ञानरूपः इति ज्ञेयः ।

---

1 हंसयोर्लोपात् (क)
2 भेदप्रकाशशून्यम् ।
3 द्वन्द्वान्ते श्रूयमाणस्य लिङ्गपदस्य प्रत्येकमन्वयात् आचारलिङ्गेत्यादिः अर्थः ।
4 इति = इत्येवंरूपेण भात्वेन ।
5 ओंकारोत्पत्तिक्रममित्यर्थः ।

512 [प्रणवसहितपञ्चाक्षरीज्ञानफलम्]

प्रणवेनैव मन्त्रेण बोध्यते निष्कलः शिवः ।[1]
पञ्चाक्षरेण मन्त्रेण [2]पञ्चब्रह्म मनुस्तथा ॥२१॥

---

"योऽसौ पुरुषः सोऽहम्"

इति श्रुतिगुरूपदेशस्वानुभवैः विज्ञातुं योग्यः । एवं प्रतिदिनं षट्शताधिकमेकविंशतिसहस्रसङ्ख्यातं जापित्वा; अथास्य भेदघटितत्वात् केवलकुम्भकेन सकारहकारयोस्त्यगात् सनातनः नित्यः ओमित्येकाक्षरमनुः जायते[3] । ततः किम्? इतिचेत्—उच्यते । सकारस्य चन्द्रबीजत्वेन वेद्यरूपत्वात्, हकारस्य अर्कबीजत्वेन वेदनरूपत्वात् । एवंरूपसकारहकारयोस्त्यागात् वृत्तिशून्यवेदकमात्रप्रकाशकरूपः ॐकारएव अवशिष्यते इति, निष्प्रपञ्चब्रह्मप्रतिपादकः प्रणवः इत्युक्तं भवति । तेन शिवजीवैक्यलक्षण लिङ्गाङ्गसामरस्यरूपश्रुत्यागमप्रसिद्धपरममुक्तिरिति[4] बोध्यम् ॥२०॥

एवं स्थिते प्रणवेन निष्कलज्ञानं, पञ्चाक्षर्याः सकलज्ञानं, प्रणवसहितपञ्चाक्षर्या सकलनिष्कलम् इति सूत्रद्वयेन प्रतिपादयति—

---

1 अष्टात्रिंशत्कलातीतः परशिवः ।
2 अष्टत्रिंशत्कलापूर्णः सकलः मन्त्ररूपः शिवः ।
पञ्चब्रह्मतनुः (घ) (ङ)
3 सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु वचनेषु च सर्वेषु यन्नव्येति तदव्ययम् इत्युक्तप्रकारेणेत्यर्थः ।
4 परमुक्तिरिति (ख)

513

निष्कलः संविदाकारः[1] सकलो विश्वमूर्तितः[2] ।
उभयात्मा शिवो मन्त्रे षडक्षरमये स्थितः ॥२२॥

---

अत्र निष्कलशब्देन शुद्धचिद्रूपत्वमुच्यते । सकलशब्देन प्रपञ्चविशिष्टत्वमुच्यते । एवं च प्रणवमन्त्रेणैव निष्कलः शिवः सच्चिदानन्दात्मकः परशिवः बोध्यते प्रकाश्यते । पञ्चाक्षरेण मन्त्रेण पञ्चब्रह्मतनुः पञ्चब्रह्ममयः शिवः तथा बोध्यते—

"सर्वं खल्विदं ब्रह्म"

इतिश्रुतेः प्रकाश्यते इत्यर्थः ॥ उभयात्मा शिवः सकलनिष्कलरूपः परमात्मा षडक्षरमये[3] मन्त्रे प्रणवयुक्तपञ्चाक्षर्यां स्थितः प्रकाशते इत्यर्थः ।

अत्र यद्यपि—

"अकारं ब्रह्माणं नाभौ,
उकारं विष्णुं हृदये,
मकारं रुद्रं भ्रूमध्ये
ओंकारं सर्वेश्वरं द्वादशान्ते"

इति तापनीयश्रुतेः, प्रणवस्यापि सप्रपञ्चब्रह्ममयत्वमेव । तथापि—वेद्यसंस्कारात्मकबिन्दुघटितत्वेन सूक्ष्मप्रपञ्चमयत्वात् निष्कलत्वव्यपदेशः । स्थूलप्रपञ्चमयस्य पञ्चाक्षरमन्त्रद्रुमस्य पणवः बीजम्, तस्य अकरोकारबिन्दुनादलक्षण

---

1 सत्यं ज्ञानमनन्तं ब्रह्मेत्युक्तः ।
2 मूर्तिकः (घ) (ङ)
3 ओङ्कारसहिते ।

514 [पञ्चाक्षरपर्यायनामानि]

मूलं विद्या शिवः शैवं सूत्रं पञ्चाक्षरस्तथा ।
एतानि नामधेयानि कीर्तितानि महामनोः ॥२३॥

515 [षडक्षरीजपविधिः]

पञ्चाक्षरीमिमां विद्यां प्रणवेन षडक्षरीम् ।[1]
जपेत् समाहितो भूत्वा शिवपूजापरायणः ॥२४॥

516 [जपप्रकारविवरणम्]

प्राणायामत्रयं कृत्वा प्राङ्मुखोदङ्मुखोऽपि वा ।
चिन्तयेत् हृदयाम्भोजे देवदेवं त्रियम्बकम्[2] ॥२५॥

---

पञ्चावयवसम्पन्नत्वात् इति संक्षेपः[3] ।

अथास्य पञ्चाक्षरमन्त्रस्य पर्यायनामानि कथयति—

महामनोः पञ्चाक्षरमहामन्त्रस्य मूलं, विद्या, शिवः[4] शैवसूत्रम्, तथा पञ्चाक्षरः इत्येतानि नामधेयानि वर्णसङ्ख्यया[5] कीर्तितानि इत्यर्थः ॥२३॥

अथ—एतादृशीं पञ्चाक्षरीं प्रणवेन सह षडक्षरीं विद्यां जपेदित्याह[6]—

समाहितः एकाग्रचित्तः सन् इत्यर्थः । शिष्टं स्पष्टम् ॥२४॥

कथं जपेत् ? इत्यत्राह—

---

1 षडक्षरम्-(क) प्रणवेनयुक्ताचेदित्यर्थः ।
2 त्रिलोचनम्
3 उक्तानां तत्तद्रूपस्वोपपादनं तु मूलग्रन्थेषु प्रकाशितमिति भावः ।
4 विद्या इतिनास्ति (ख)
5 वर्णसंख्यादिना इत्यर्थः ।
6 सूत्रत्रयेणेतिशेषः ।

517

सर्वालङ्कारसंयुक्तं साम्बं चन्द्रार्धशेखरम् ।
जपेदेतां महाविद्यां शिवरूपामनन्यधीः ॥२६॥

---

शुद्धे स्थले मृगाजिनचित्रकम्बलाद्यास्तरणे सिद्धपद्माद्यासने प्राङ्मुखः उदङ्मुखो वा उपविश्य भस्मरुद्राक्षालङ्कृतःसन् शिवलिङ्गपूजको भूत्वा—

''असम्पूज्य शिवं स्तोत्रजपात् फलमुदीरितम् ।
सम्पूज्य च शिवं पश्चात्फलं वक्तुं न शक्यते ॥

सहस्रं वा तदर्धं वा तदर्धं वा शताष्टकम् ।
अष्टोत्तरसहस्रं वा जपं कुर्यादतन्द्रधीः ॥

पूजाकोटिसमं स्तोत्रं स्तोत्रकोटिसमो जपः ।
जपकोटिसमं ध्यानं ध्यानकोटिसमो लयः ॥[1]'',

इति शिवागमवचनात्, शिवपूजानन्तरं पुनः प्राणायामं कृत्वा करषडङ्गं विन्यस्य, हृदयकमले त्रियम्बकं मण्डलत्रयगुणत्रयदेवत्रयादित्रिविधवस्तु-कारणीभूतं देवदेवं भवानीपतिम् सर्वालङ्कारसंयुक्तं चन्द्रार्धशेखरं शिवम् अनन्यधीः परिचिन्तयन्, एतां महाविद्याम्,[2] उक्तविधेष्वेकप्रकारेण गुरूपदिष्टमार्गेण सगर्भजपं कुर्यात् इत्यर्थः ॥२६॥

---

1 ध्यानकोटिर्मनोलय (क)

2 महामन्त्रमिति यावत् ।

518 [जपे वैविध्यम्]

जपस्तु त्रिविधः प्रोक्तः वाचिकोपांशु मानसः ।
श्रूयते यस्तु पार्श्वस्थैः यथा वर्णसमन्वयः[1] ॥२७॥

519

वाचिकः स तु विज्ञेयः सर्वपापप्रभञ्जनः ।
ईषत् स्पष्ट्वाऽधरपुटं यो मन्दमभिधीयते[2] ॥२८॥

520

पार्श्वस्थैरश्रुतस्सोऽयं उपांशुः परीकीर्तितः ।
अस्पृष्ट्वाऽधरमस्पन्दि जिह्वाग्रं योऽन्तरात्मना[3] ॥२९॥

521

भाव्यते वर्णरूपेण स मानस इति स्मृतः ॥३०॥

---

अत्र मन्त्रोच्चारस्तु—वाचिकः इति, उपांशुरिति, मानस इति च त्रिविधः । तत्र—यस्तु मन्त्रोच्चारः यथावर्णसमन्वयं वर्णसन्तानमनतिक्रम्य पार्श्वस्थैः श्रूयते सः मन्त्रोच्चारः मनोवचनकायजन्य सर्वपापनिवारकः वाचिकजपः इति विज्ञातुं योग्यमित्यर्थः ।

यः योमन्त्रोच्चारः किञ्चिदधरपुटं स्पृष्ट्वा पार्श्वस्थैः अश्रुतः सन् मन्दमभिधीयते सोऽयं उपांशुजपः इति परिकीर्तितः ।

---

1 अत्र अन्वयशब्दःसन्तानपरः ।
2 अभीधीयते=उच्चार्यते ।
3 अन्तरात्मना=मनसा ।

522 [जपमहिमा]

यावन्तः कर्मयज्ञाद्याः व्रतदानतपांसि च
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥३१॥

523 [जपभेदेन फलभेदवर्णनम्]

माहात्म्यं वाचिकस्यैतत् जपयज्ञस्य कीर्तितम् ।
तस्मात् शतगुणोपांशुः[1] सहस्रो[2] मानसः स्मृतः ॥३२॥

---

यः यो मन्त्रोच्चारः अधरमस्पृष्ट्वा अस्पन्दिजिह्वाग्रं यथा भवति तथा वर्णरूपेण अन्तरात्मना मन्त्राक्षरस्वरूपवता चित्तेन विभाव्यते सः स मन्त्रोच्चारः मानसः इति मानसजपः इति स्मृतः इत्यर्थः ॥३०॥

अथास्य जपयज्ञस्य माहात्म्यमुद्भावयति—

यावन्तः कर्मयज्ञाद्याः ज्योतिष्टोमादयः सन्ति, व्रतदानतपांसि यावन्ति सन्ति, ते सर्वे जपयज्ञस्य षोडशीं कलां प्रतिषोडशभागस्यैकभागं च प्रति नर्हन्ति न समाना भवन्तीत्यर्थः—

अथ उक्तत्रिविधजपानां माहात्म्यं एकप्रकारं किम् ? इत्यत्राह—

वाचिकजपस्य यद्येतन्माहत्म्यं कीर्तितम्, तस्मात् उपांशः मानसः सहस्रः सहस्रगुणः इति स्मृत इत्यर्थः ॥३२॥

---

1 शत गुणः उपांशुरित्यर्थः ।
2 सहस्रः=सहस्रगुणः ।

524 [मुमुक्षुकर्तव्यजपविधिः]

वाचिकात् तदुपांशोश्च जपादस्य महामनोः ।
[1]मानसो हि जपः श्रेष्ठः घोरसंसारनाशकः[2] ॥३३॥

525

एतस्त्वेतेन[3] विधिना यथाभागं[4] यथाक्रमम् ।
जपेत् पञ्चाक्षरीमेतां विद्यां पाशविमुक्तये ॥३४।

526 [शिवलिङ्गार्चनविधिः]

अनेन मूलमन्त्रेण शिवलिङ्गं प्रपूजयेत् ।
नित्यं नियमसंपन्नः प्रयतात्मा शिवात्मकः ॥३५॥

---

तर्हि एतेषु को वा जपः कर्तव्यः ? इत्यत्र[6] मोक्षार्थिभिः मानस एव जपः [7]कर्तव्य इत्यत्राह—

अस्य महामनोः वाचिकात् जपात् उपांशोश्च जपात् मानसो जपः क्रूरसंसारनाशकः तत् श्रेष्ठः इयर्थः ॥३३॥

तर्हि तयोः का गतिः ? इत्यत्राह—

एतेषु विषयेषु वाचिकादिजपविषयेषु एतेन विधिना एतदुक्तप्रकारेण यथाक्रमं क्रममनतिक्रम्य यथाभावं[8] एतां पञ्चाक्षरी विद्यां पाशविमुक्तये मलमायादि पञ्चपाशविमुक्त्यर्थं जपेत् उच्चरेत् इत्यर्थः ।

अथ अनेनैव मन्त्रेण शिवलिङ्गार्चनं च कर्तव्यमित्याह—

---

1 वाचकात् (ग)
2 मानसा (ङ)
3 तारकः (ख)
4 त्वेकेन (ग)
5 यथाभावं (घ)
6 इति जिज्ञासायामित्यर्थः ।
7 संसारमोचकः इतिशेषः ।
8 यथामतीति यावत् ।

भक्त्या पञ्चाक्षरेणैव यः शिवं सकृदर्चयेत् ।
सोऽपि गच्छेत् शिवस्थानं मन्त्रस्यास्यैव [1]गौरवात् ॥३६॥
अब्भक्षा वायुभक्षाश्च ये चान्ये व्रतकर्शिताः ।
तेषामेतैर्व्रतैर्नास्ति शिवलोकसमागमः ॥३७॥

---

नियमसम्पन्नः यमनियमादिसम्पन्नः सन्, प्रयतात्मा शुद्धान्तःकरणवान् सन्, शिवात्मकः इति श्रुतेः शिवभावसम्पन्नः, अनेन मूलमन्त्रेण

"नारुद्रो रुद्रमर्चयेत्"

इति श्रुतेः शिवभावसम्पन्नः अनेनमूलमन्त्रेण एतत्प्रणवपञ्चाक्षरमन्त्रेण शिवलिङ्गं नित्यं सदा पूजयेत् [2]विभवेन पूजयेदित्यर्थः ॥३६॥

[527 समन्त्रकशिवपूजाफलम् ]

ननु अस्य समन्त्रकशिवपूजनस्य किं फलम् ? इत्यत्राह—

स्पष्टम् ॥३६॥

[528 पूजायाः आवश्यकता]

ननु व्रतनियमादिना[3] सद्गतिसम्भवात् पूजा किमर्थं विधेया ? इत्यत्राह —

अब्भक्षाः जलाहारिणः, वायुभक्षाश्च वायुपर्णाहारिणः,[4] ये चान्ये व्रतकर्शिताः कृच्छ्रचान्द्रायणादिव्रतकृशाः ये सन्ति,[5] तेषां एतैर्व्रतैः शिवलोकप्राप्तिः नास्तीत्यर्थः ॥३८॥

---

[1] गौरवात्=माहात्म्यादिति यावत् ।
[2] विभवेन-अत्यन्तभक्त्या इति यावत् ।
[3] नियमादिनैवेत्यर्थः ।
[4] वायुपदं वाय्वादिपरमिति भावः ।
[5] भक्तिविहीना इति शेषः ।

[1]तस्मात् तपांसि यज्ञाश्च व्रतानि नियमास्तथा ।
पञ्चाक्षरार्चनस्यैते कोट्यंशेनापि नो समाः ॥३८॥
अशुद्धो वा विशुद्धो वा सकृत् पञ्चाक्षरेण यः ।
[2]पूजयेत् पतितो वाऽपि मुच्यते नात्र संशयः ॥३९॥
सकृदुच्चारमात्रेण पञ्चाक्षरमहामनोः[3] ।
सर्वेषामपि जन्तूनां सर्वपापक्षयो भवेत् ॥४०॥

---

529 [लिङ्गार्चनप्राशस्त्यम्]

तस्मात् जपयज्ञादयः सर्वे लिङ्गार्चनस्य कोट्यंशेनाऽपि नो समाः इत्याह—

स्पष्टम् ॥३८॥

530 [लिङ्गार्चने अनधिकारिणां गतिः]

ननु शिवार्चने निर्मलज्ञानादिसम्पन्नः अधिकारी इत्युक्तत्वात् अशुद्धबुद्धीनां का गतिः ? इत्यत्राह—

पतितः व्रतभ्रष्टः इत्यर्थः । मुच्यते सर्वपापैः प्रमुच्यते इत्यर्थः ॥३९॥

531 [पञ्चाक्षर्याः उच्चारणफलम्]

अथ पञ्चाक्षरमन्त्रस्य सकृदुच्चारणादेव सर्वेषामपि सर्वपापक्षयः स्यादित्याह—

स्पष्टम् ॥४०॥

---

[1] एतच्छ्लोकानन्तरं 'अब्भक्षः' इत्यादि पूर्वः श्लोकः दृश्यते—क
[2] शिवलिङ्गमिति शेषः ।
[3] मनुशब्दः मन्त्रवाची ।

[1]अन्येऽपि बहवो मन्त्राः विद्यन्ते सकलागमे ।
भूयोभूयस्समभ्यासात् पुरुषार्थप्रदायिनः ॥४१॥
एष मन्त्रो महाशक्तिः ईश्वरप्रतिपादकः ।
सकृदुच्चारणादेव सर्वसिद्धिप्रदायकः ॥४२॥

---

532 [आगमप्रसिद्धमन्त्रेषु पञ्चाक्षर्यां वैशिष्ट्यम् ]

ननु शिवागमप्रसिद्धाः [1]मन्त्राः बहवः सन्ति, तेभ्यः कस्मादस्य वैशिष्ट्यम् ? इत्यत्राह —

सकलागमे[2] समस्तशिवागमे एतत्पञ्चाक्षरीव्यतिरिक्तमन्त्राः बहवः सन्ति । ते पुरश्चरणबाहुल्यात् पुरुषार्थप्रदायिनः । एषः पञ्चाक्षरमन्त्रः महाशक्तिः महासामर्थ्यवान् । ईश्वरस्य विश्वमयविश्वोत्तीर्णसामरस्य लक्षणमाहात्म्यप्रतिपादकः । तस्मात्—

"सकृदुच्चारणादेव सर्वसिद्धिप्रदायकः"

इति अस्य वैशिष्ट्यमित्यर्थः ॥४१॥

533 [समन्त्रकपूजायाः फलम् ]

अथ समन्त्रकपूजाफलं प्रकाशयति—॥४२॥

---

1 सप्तकोटिमहामन्त्राः इतिखलु प्रसिद्धं इति भावः ।
2 पुनः पुनः बहुवारमितियावत् ।
3 सकलागमः इत्यपि कश्चन आगमः इति आगमज्ञाः केचित् ।

पञ्चाक्षरीं समुच्चार्य पुष्पं लिङ्गे[1] विनिक्षिपेत् ।
यस्तस्य वाजपेयानां[2] सहस्रफलमिष्यते ॥४३॥
अग्निहोत्रं त्रयो वेदाः यज्ञाश्च बहुदक्षिणाः ।
पञ्चाक्षरजपस्यैते कोट्यंशेनापि नो समाः ॥४४॥
पुरा सानन्दयोगीन्द्रः शिवज्ञानपरायणः ।
पञ्चाक्षरं समुच्चार्य नारकानुदतारयत् ॥४५॥

---

534 [पञ्चाक्षरीजपफलविशेषः]

विनिक्षिपेत् समर्पयेदित्यर्थः । शिष्टं स्पष्टम् अथ पञ्चाक्षरीजपफलं प्रकाशयति—॥४३॥

अग्निहोत्रं सायम्प्रातर्विधीयमानाग्निहोत्रम्, त्रयो वेदाः ऋग्यजुस्सामाध्ययनम्, यज्ञाः ज्योतिष्टोमाद्याः, बहुदक्षिणाः षोडशमहादानरूपाः । एते पञ्चाक्षरजपस्य कोट्यंशेनापि समानाः न भवन्तीत्यर्थः ॥४४॥

535 [पञ्चाक्षरीमन्त्रसिद्धानां इतिहासाः]

अथैतन्मन्त्रसिद्धिमतां महापुरुषाणां माहात्म्यप्रतिपादनद्वारा तस्य आधिक्यं वर्णयति—

पुरा शिवज्ञानयोगनिष्ठः सानन्दगणेशः पञ्चाक्षरमन्त्रं वाचकरूपेण उच्चार्य, नारकान् अष्टाविंशतिकोटिनायकनरकस्थितान् पापिनः उदतारयत् उद्धृतवानित्यर्थः ॥४५॥

---

[1] शिवलिङ्गोपरि ।
[2] वाजपेयनामानः यागविशेषाः ।

536

सिद्ध्या पञ्चाक्षरस्यास्य शतानन्दः पुरा मुनिः ।
नरकं स्वर्गमकरोत् सङ्गिरस्यापि[1]पापिनः ॥४६॥

537

उपमन्युः पुरा योगी मन्त्रेणानेन सिद्धिमान् ।[2]
लब्धवान् परमेशानात् शैवशास्त्रप्रवक्तृताम् ॥४७॥

538

वसिष्ठवामदेवाद्याः मुनयो मुक्तकिल्बिषाः ।
मन्त्रेणानेन संसिद्धाः महातेजस्विनोऽभवन् ॥४८॥

---

पुरा शतानन्दः पञ्चाक्षरीजपस्य सिद्ध्या पापिनः सङ्गिरस्य नरकमपि स्वर्गमकरोत्[3] इत्यर्थः ॥४६॥

शिवशास्त्राचार्यतां लब्धवान् इत्यर्थः ॥४७॥

मुक्तकिल्बिषाः विमुक्तपापकर्माणः वसिष्ठवामदेवाद्याः ऋषयः, अनेन पञ्चाक्षरमन्त्रेण सिद्धिमन्तः सन्तः, महातेजस्विनः शापानुग्रहसमर्थाः अभवन् इत्यर्थः ॥४८॥

---

[1] संनिरस्यापि (क)
संनिरः इति कश्चनमहापापकारी इति ॥
[2] अकरोत्—प्रापयामास ।
अत्र मुनिः—सानन्दगणेश्वरः इति व्याख्या ।
[3] सिद्धिमान्—नारायणस्यापि गुरुः भूत्वा इति व्याख्या ॥

539

ब्रह्मादीनां च देवानां जगत्सृष्ट्यादिकर्मणि ।
मन्त्रस्यास्यैव महात्म्यात् सामर्थ्यमुपजायते[1] ॥४९॥

किमिह बहुभिरुक्तैः मन्त्रमेनं[2] महात्मा
प्रणवसहितमादौ यस्तु पञ्चाक्षराख्यम् ।[3]
जपति परमभक्त्या पूजयन् देवदेवम् ।
स गतदुरितबन्धः मोक्षलक्ष्मीं[4] प्रयाति ॥५०॥

इति श्री षट्स्थलब्रह्मिणा शिवयोगिनाम्ना माहेश्वरेण विरचिते सिद्धान्तशिखामणौ भक्तस्थले पञ्चाक्षरीजपप्रसङ्गो नाम अष्टमः परिच्छेदः समाप्तः

---

अथ ब्रह्मादयोऽपि एतन्मन्त्रसामर्थ्यादेव सृष्ट्यादिकृत्याधिकारिणो जाताः इत्याह—

ब्रह्मविष्णुरुद्रादिदेवानां विश्वसृष्टिस्थितिसंहारादिकर्मणि सामर्थ्यं अस्य मन्त्रस्य प्रभावादेव इत्यर्थः ॥४९॥

540 [निगमनम्]

किं बहुना ? अस्य प्रणवसहितषडक्षरमन्त्रस्य जपेन, तत्कृतशिवलिङ्गपूजनेन च मोक्षमवाप्नोतीत्युक्त्वा पञ्चाक्षरीजपस्थलं समापयति—

---

1 उपजातं पूर्वमिति भावः ।
2 मन्त्रमेवं (क)
3 नमश्शिवायेति मन्त्रम् ।
4 कैलासप्राप्तिरूपं ऐश्वर्यमित्यर्थः ।

स्पष्टम् , अत्र [1]यादिसृष्टिषडक्षर्या शरीरन्यासं, [2]नादिप्रणवान्त-संहारपञ्चाक्षर्या अङ्गन्यासं, 'शिवाय नमः ओम्' इति स्थितिपञ्चाक्षर्या करन्यासं च कृत्वा, गुरुपदिष्टमार्गेण प्रणवपञ्चाक्षरीं जपेत् । स्त्रीशूद्रादि-जातीनां "शिवाय नमः" इति जपविधिः ॥

इति भक्तस्थले पञ्चाक्षरीजपस्थलम् ॥

इति श्रीमत्पदवाक्यप्रमाण
पारावारधुरीण श्रीमरितोण्टदार्येण
विरचितायाम् तत्त्वप्रदीपिकाख्यायाम्
सिद्धान्तशिखामणिव्याख्यायाम्
भक्तस्थले पञ्चाक्षरीजपप्रसङ्गे
नाम अष्टमःपरिच्छेदः
समाप्तः ॥

---

[1] 'यवाशिमः न ओं' इति यादिषडक्षरी ।
[2] 'नमः शिवाय ओं' इति नादिपञ्चाक्षरी ।

॥ श्री शिवाय नमः ॥

# अथ सिद्धान्तशिखामणौ

## नवमः परिच्छेदः

## नवविधस्थलप्रसङ्गः

## (9) भक्तस्थले भक्तमार्गक्रियास्थलम् (1-9)

542 [शिवभक्तलक्षणम्]

भूतिरुद्राक्षसंयुक्तः लिङ्गधारी सदाशिवः ।[1]
पञ्चाक्षरजपोद्योगी[2] शिवभक्त इति स्मृतिः ॥१॥

श्रवणं कीर्तनं शम्भोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यं आत्मनिवेदनम् ॥२॥

544

एवं नवविधा भक्तिः प्रोक्ता देवेन
शम्भुना । दुर्लभा पापिनां
लोके सुलभा पुण्यकर्मणाम् ॥३॥

---

541 [भक्तमार्गक्रियास्थलनिरूपणम्]

अथ भक्तमार्गक्रियास्थलं निरूपयितुं, पूर्वं उक्तमपि भक्तस्थलं विशेषतः स्मारयति श्रीरेणुकः—

543 [भक्तिभेदाः]

स्पष्टम् ॥१॥

अथ भक्तिभेदं निरुपयति—

---

[1] सदाशुचिः ...(क)

[2] जपाद्योगी (क) (ग)

545 [भक्तस्वरूपम्]

अधमे चोत्तमे वाऽपि यत्र कुत्रचिदूर्जिता ।
वर्तते शाङ्करी भक्तिः स भक्त इति गीयते ॥४॥

546 [भक्तस्यैव शिवप्रियत्वम्]

भक्तिः स्थिरीकृता यस्मिन् म्लेच्छे[1] वा द्विजसत्तमे ।
शम्भोः प्रियः स विप्रश्च न प्रियो भक्तिवर्जितः ॥५॥

547 भक्तिद्वैविध्यम्]

सा भक्तिः द्विविधा ज्ञेया बाह्याभ्यन्तरभेदतः ।
बाह्या स्थूलाऽऽन्तरा सूक्ष्मा वीरमाहेश्वरादृता ॥६॥

---

शम्भोः श्रवणं शिवकथाश्रवणम्, कीर्तनं स्तोत्रम्, स्मरणं ध्यानम्, पादसेवनं पादमर्दनम्, अर्चनं पूजनम्, वन्दनं नतिः, दास्यं भृत्यत्वम्, सख्यं मित्रत्वम्, आत्मनिवेदनं स्वात्मसमर्पणम्; एवं भक्तिः नवविधा— इति क्रीडाशीलेन देवेन प्रोक्ता, लोके पापिनां दुर्लभा; पुण्यकर्मणां धर्मशालिनां सुलभा इत्यर्थः ।

अथ एवंविधभक्तिमानेव भक्तः इत्याह—

स्पष्टम् ॥४॥

अथ भक्तिमानेव शिवप्रियः इत्याह—

स्पष्टम् ॥ अनेन पूर्वोक्तोत्तमाधमावपि स्फुटीकृतौ ॥५॥

अथ सा भक्तिः द्विविधेत्याह—

---

1 म्लेच्छे—श्वपचे इतिव्याख्या

548 [बाह्यभक्तिः]

सिंहासने शुद्धदेशे सुरम्ये रत्नचित्रिते ।
शिवलिङ्गस्य पूजा या सा बाह्या भक्तिरुच्यते ॥७॥

लिङ्गे प्राणं समाधाय प्राणे लिङ्गं तु शाम्भवम् ।
स्वस्थं मनस्तथा कृत्वा न किञ्चिच्चिन्तयेद्यदि ॥८॥

550

साऽभ्यन्तरा[1] भक्तिरिति प्रोच्यते शिवयोगिभिः ।
सा यस्मिन् वर्तते तस्य जीवनं भ्रष्टबीजवत् ॥९॥

---

वीरमाहेश्वरप्रीतिविषयिणी भक्तिः बाह्याभ्यन्तरलक्षणस्थूलसूक्ष्मभेदेन द्विविधा इत्यर्थः ॥६॥

अथ का नाम बाह्या ? इत्यत्राह—

सुरम्ये अत्यन्तमनोहरे, शुद्धदेशे षट्संमार्जनपरिशुद्धस्थाने, रत्नचित्रिते नवरत्नैः विचित्रीकृते, सिंहासने सिंहविष्टरे शिवलिङ्गस्य या पूजा सा बाह्या भक्तिः इत्युच्यते इत्यर्थः ॥७॥

549 [आन्तरभक्तिः]

एवं शिवभक्तविधीयमानां बाह्यां भक्तिं उक्त्वा, अथ शिवयोगिविधीयमानां आन्तरांभक्तिं उपपादयति—

शिवलिङ्गं प्राणे समाधाय, संस्थाप्य, प्राणेजीवकलारूपे प्राणे

---

1 आभ्यन्तरेत्यपि व्याख्या ।

बहुनाऽत्र किमुक्तेन गुह्यतरा[1] परा ।
शिवभक्तिर्न सन्देहः तया[2] युक्तो विमुच्यते ॥१०॥
प्रसादादेव सा भक्तिः प्रसादो भक्तिसम्भवः ।
यथैवाङ्कुरतो बीजं बीजतो वा यथाऽङ्कुरः[3] ॥११॥

---

शाम्भवं लिङ्गं तु शिवकलारूपं लिङ्गं समाधाय संस्थाप्य, स्वस्थं मनः कृत्वा, यदि न किञ्चित् चिन्तयेत्, सा लिङ्गप्राणसमरसरूपा चिन्ता आभ्यन्तरा भक्तिरिति शिवयोगिभिः प्रोच्यते, सा आभ्यन्तरा भक्तिः यस्मिन् वर्तते, तस्य जीवनं भ्रष्टबीजवत् भर्जितबीजवत्, पुनः न जननकारणमित्यर्थः ॥९॥

551 [आन्तरभक्तेरेव प्राधान्यम्]

एवं निर्बीजदीक्षाप्रसिद्धाभ्यन्तरभक्तिमानेव मुक्तः इत्याह—

552 [एतादृशभक्त्युदये हेतुः]

स्पष्टम् ॥

ननु एतादृशी भक्तिः, कस्मात् भवति? इत्यत्राह—॥१०॥

स्पष्टम् ॥

---

1 गोप्यावस्थाया अपि अत्यन्तगोप्या इति व्याख्या ।
2 तया=शिवभक्त्या ।
3 बीजवृक्षन्यायेनेतिव्याख्या ।

553 [शुद्धभक्तेः बहुजन्मसाध्यत्वम्]

प्रसादपूर्विका येयं भक्तिर्मुक्तिविधायिनी ।
नैव सा शक्यते प्राप्तुं नरैरेकेन जन्मना ॥१२॥
अनेकजन्मशुद्धानां श्रौतस्मार्तानुवर्तिताम् ।
विरक्तानां प्रबुद्धानां प्रसीदति महेश्वरः ॥१३॥

---

अथ एवरूपा भक्तिः एकेनैव जन्मना दुर्लभेत्याह—

स्पष्टम् ॥१२॥

तर्हि कतिजन्मभिः लभ्येतेत्यत्राह—

554

अनेकजन्मकृतशिवध्यानपूजादिपरिशुद्धचित्तानां श्रुतिस्मृत्युक्तनित्यनैमित्तिककर्मानुष्ठानानां काम्यकर्मनिःस्पृहाणां सुज्ञानिनां शिवः प्रसन्नो भवति, तत्प्रसादात् तादृशी भक्तिः लभ्यते इत्यर्थः ।

म्लेच्छादीनां श्रौतस्मार्तकर्मनिष्ठत्वाभावेऽपि[1] पूर्वजन्मनि शिवभक्तेभ्यः कृतोपकारवशात् शिवभक्तिः आविर्भवेत् इति भावः ॥१३॥

555 [भक्त्या मुक्तिलाभकालः]

ननु अनेकजन्मलभ्यशिवभक्त्या कति जन्मभिः मुक्तिः ? सा च कीदृशी स्यात् ? इत्यत्राह—

---

[1] अधिकाराभावादिति भावः ।

प्रसन्ने सति मुक्तोऽभूत् मुक्तः शिवसमो भवेत् ।
अल्पभक्त्याऽपि यो मर्त्यः तस्य जन्मत्रयात् परम् ॥१४॥

---

शिवे प्रसन्ने सति मुक्तो भवेत् । मुक्तः शिवसमो भवेत् । यो मर्त्यः तस्य अल्पभक्त्या जन्मत्रयात् परं मुक्तिः । पूर्णभक्तिमतः एकेनैव जन्मना मुक्तिरिति भावः ।

अत्र शिवसमानत्वं शिवाभेद एव ।

"न तत्समश्चाभ्यधिकश्च दृश्यते"

इति श्रुतेः, शिवसमानत्वाभावात् , शिवाभिकृष्टस्य तत्समत्वासम्भवात्—

"गगनं गगनाकारम्"

इत्याद्यन्योन्योपमैव अभेदः इति भावः ।

"शिवस्वरूपो भवति शिवस्वरूपो भवति"

इति वृद्धजाबालश्रुतेश्च:

"एकेन जन्मना मुक्तिः वीराणां तु महेश्वरि !
इतरेषां तु शैवानां मुक्तिः जन्मत्रयात्परम् ॥"

---

[1] अत्र—

"भ्रमद्भ्रमरचिन्तायां कीटोऽपि भ्रमरायते ।
ममचिन्तासमाक्रान्तः ममरूपी भवेत् ध्रुवम् ॥
इति वीरागमवचनं च व्याख्यायां उदाहृतम् ।

न योनियन्त्रपीडा वै भवेत् नैवात्र संशयः ।
साङ्गन न्यूना या सेवा सा भक्तिरिति कथ्यते ॥१५॥
सा पुनः भिद्यते त्रेधा मनोवाक्काय साधनैः ।
शिवरूपादिचिन्ता या सा सेवा मानसी स्मृता ॥१६॥

---

इति वीरागमवचनात्, वीरशैवानां एकेनैव जन्मना मुक्तिः, इतरेषां शैवानां तु जन्मत्रयात्परं मुक्तिरिति भावः ॥

556 [भक्तस्य पुनर्जन्याभावः]

ननु का नाम अल्पमुक्तिः? मुक्तस्य मुक्तस्य पुनरुत्पत्तिः अस्ति वा? नवा? इत्यत्राह—

"न स पुनरावर्थते न स पुनरावर्तते"

इति श्रुतेः योनियन्त्रपीडा पुनरुत्पत्ति नास्ति । तत्र—उक्तनवविधाङ्गयुक्ता सेवा पूर्णभक्तिः, किञ्चिन्न्यूना अल्पभक्तिः इत्यर्थः ।

557 [भक्तेः पुनस्त्रैविध्यम्]

अथ—

"यद्धि मनसा[1]ध्यायाति तद्वाचा वदति,
तत्कर्मणा करोति"

इति श्रुतेः, सा भक्तिः त्रिविधेत्याह—

---

1 'यन्मनसा' इति—(ख)

558

जपादि वाचिकी सेवा
कर्मपूजा तु कायिकी ॥ १७॥

बाह्यमाभ्यन्तरं चैव बाह्याभ्यन्तरमेव वा ।
मनो वाक्कायभेदैश्च त्रिधा तद्भजनं [1]विदुः ॥१८॥

मनो महेशध्यानाढ्यं नान्यध्यानरतं मनः ।
शिवनामरता वाणी वाङ्मता चैव नेतरा ॥१९॥

---

सा साङ्गा भक्तिः मनोवचनकायलक्षणकरणैः त्रिधा भिन्ना भवति । तत्र शिवलिङ्गादिस्वरूपचिन्ता मानसी । शिवमन्त्रजपस्तुतिरूपा वाचिकी । कायेन विधीयमाना शिवलिङ्गार्चा कायिकी सेवा इत्यर्थः ॥१७॥

559 कायिकसेवायाः त्रैविध्यम् ]

अथैवं विधरूपा सेवा बाह्यादिभेदेन त्रिविधा इत्याह—

दीक्षात्रययुक्तमनोवाक्कायभेदवत्पूर्वोक्त भजनं बाह्यमिति आभ्यन्तरमिति च त्रिधा विदुः अभिज्ञाः जानन्तीत्यर्थः ॥१८॥

560 [शुद्धमनोवाक्कायलक्षणम् ]

अथ किमेषां स्वरूपम् ? इत्यत्र मानसादिस्वरूपकथनपूर्वकमाह—

---

[1] तद्भजनं- शिवसेवारूपां भक्तिम् इतिव्याख्या ।

561

लिङ्गैश्शिवस्य चोद्दिष्टैः त्रिपुण्ड्रादिभिरङ्कितः ।
शिवोपचारनिरतः कायः कायो न चेतरः ॥२०॥

अन्यात्मविदितं बाह्यं शम्भोरभ्यर्चनादिकम् ।[2]
तदेव तु स्वसंवेद्यं आभ्यन्तरमुदाहृतम् ॥

563

मनो महेशप्रवणं बाह्याभ्यन्तरमुच्यते ॥२१॥

---

उद्दिष्टैः शास्त्रोक्तैः त्रिपुण्ड्रादिभिः भस्मत्रिपुण्ड्ररुद्राक्षाभरणरूपैः शिवस्य लिङ्गैः चिह्नैः अङ्कितः मुद्रितः सन् शिवोपचारनिरतः शिवलिङ्ग-पूजातत्परः एव कायः, अन्यो न कायः,[1] इत्यर्थः ॥ शिष्टं स्पष्टम् ॥२०॥

562 [तत्र बाह्यादिसेवात्रयलक्षणम् ]

अथ बाह्यादिकं लक्षयति—

शम्भोः अभ्यर्चनादिकं-शिवपूजादिकर्म, अन्यात्मविदितं परदृष्टि-गोचरीभूतम् बाह्यमं, तदेव तु तदर्चनादिकं, स्वसंवेद्यं परदृष्टिश्रुत्यगोचरत्वेन स्वमात्रगोचरं आभ्यन्तरं मनः महेशप्रवणं शिवलिङ्गासक्तं मनः बाह्याभ्यन्तरं काकाक्षिन्यायेन उभयत्र व्याप्तम् इति शास्त्रज्ञैः उच्यते इत्यर्थः ॥२१॥

---

[1] उत्तमः सार्थकः देहः इति भावः ।
[2] अभ्यर्चना-अभितः अर्चना ॥

564 [त्रिविधभजनस्यैव पञ्चविधत्वम्]

[1]पञ्चधा कथ्यते सद्भिः तदेव भजनं पुनः ।
तपः कर्म जपो ध्यानं ज्ञानं चेत्यनुपूर्वकम् ॥२२॥

565

शिवार्थे देहसंशोषः तपः कृच्छ्रादि नो मतम् ।
शिवार्चा कर्म विज्ञेयं बाह्यं यागादि नोच्यते ॥२३॥

566

जपः पञ्चाक्षराभ्यासः प्रणवाभ्यास एव वा ।
रुद्राध्यायादिकाभ्यासः न वेदाध्ययनादिकम् ॥२४॥

567

ध्यानं शिवस्य रूपादिचिन्ता नात्मादिचिन्तनम् ।
शिवागमार्थविज्ञानं ज्ञानं नान्यार्थवेदनम् ॥२५॥

568 [एषां पञ्चानामपि शिवयज्ञरूपत्वम्]

इति पञ्चप्रकारोऽयं शिवयज्ञः प्रकीर्तितः ॥२६॥

---

अथैवंरूपमानसादिबाह्यादित्रिविधभजनमेव पञ्चधा भवतीत्याह—

स्पष्टम् ॥

अथ किमेषां स्वरूपम् ? इत्यत्राह—

---

[1] इदं उत्तरार्धम् (क)

शिवपूजार्थं सामग्रीसम्पादने शरीरसंशोषः एव तपः, कृच्छ्चान्द्रायणादिना देहशोषः न तपः, इति सम्मतम् । शिवार्चा शिवलिङ्गपूजैव कर्मेति विज्ञेयम् । तत्फलस्य शाश्वतत्वात् । बाह्यं यागादि तद्भिन्नबहुवित्तव्ययायाससाध्यज्योतिष्टोमयागादि कर्मेति नोच्यते, तत्फलस्य नश्वरत्वम् । वेदाध्ययनादिकं न जपः ।

" त्रैगुण्यविषया वेदाः निस्त्रैगुण्यो भवार्जुन !"

इति भगवतैव नियमितत्वात् इति । किन्तु पञ्चाक्षराभ्यासः, प्रणवाभ्यास एव वा, रुद्राध्यायादिकाभ्यासः, आदिशब्देन अथर्वशिरश्शिखादि, एतेषां आवृत्तिलक्षणोऽभ्यासः जपः इत्यर्थः । नात्मादिचिन्तनं ध्यानम् . परिमितशरीरेन्द्रियाद्युपाधिसंवलिताहमात्मचिन्तनं न ध्यानमित्यर्थः । किन्तु शिवस्य रूपादिचिन्ता शिवलिङ्गचिन्ता चन्द्रशेखरत्वादिविशिष्टमूर्तिचिन्ता च ध्यानमित्यर्थः । नान्यार्थवेदनं ज्ञानम् । साङ्ख्याद्यन्यशास्त्रार्थज्ञानं न ज्ञानम् । किन्तु शिवागमार्थविज्ञानं ज्ञानमित्यर्थः ।[1]

एवंविधकायवाङ्मानसलक्षणः पूजातपोजपध्यानज्ञानरूपपञ्चप्रकारोऽयं शिवयज्ञः इति प्रकीर्तितः ॥

---

[1] अत्र व्याख्याने—

"सर्ववेदेषु यत् दृष्टं तत्सर्वं तु शिवागमे ।
त्रिपदार्थं चतुष्पादं महातंत्रं जगत्पतिः ॥"
इति शिवागमवाक्यं प्रमाणीकृतम् ॥

569 [एवंविधपञ्चयज्ञाराधकस्यैवभक्तत्वम् ]

अनेन पञ्चयज्ञेन यः पूजयति शङ्करम् ।
भक्त्या परमया युक्तः स वै भक्त इतीरितः ॥२७॥
पूजनात् शिवभावस्य पुण्या गतिरवाप्यते ।
अवमानान्महाघोरः नरको नात्र संशयः ॥२८॥
शिवभक्तो महातेजाः शिवभक्तिपराङ्मुखान् ।
न स्पृशेत् नैव वीक्षेत न तैः सहवसेत् क्वचित् ॥२९॥

---

अथानेन पञ्चयज्ञेन परया भक्त्या यः शङ्करं पूजयति स भक्तः[1] इत्याह—

स्पष्टम् ॥२७॥

[570 शिवभक्तपूजावश्यकता]

अथैवंविधशिवभक्तपूजने सद्गतिः, [2]अवमाने घोरनरकः इत्याह—

स्पष्टम् ॥२८॥

571 [शिवभक्तेर्वर्तनक्रमः]

अथ शिवभक्तस्य [3]विधेयाविधेयमाह—

शिवभक्तः महातेजस्वी भवति । तस्मात् अशिवभक्तानां दर्शन-स्पर्शनसहवासं सकृदपि न कुर्यात् । यदि कुर्यात् तेजोमान्द्यं भवेत् इति भावः ॥२९॥

---

1 उत्तमो भक्त इत्यर्थः ।
2 शिवभक्तानां विषये इतिशेषः ।
3 कर्तव्याकर्तव्यनिर्णयमिति भावः ।

572

यदा दीक्षाप्रवेशः [1]स्यात् लिङ्गधारणपूर्वकः ।
तदाप्रभृति भक्तोऽसौ पूजयेत् स्वागमस्थितान्[2] ॥३०॥

573

स्वमार्गाचारनिरताः [3]स्वजातीया द्विजास्तु ये ।
तेषां गृहेषु भुञ्जीत नेतरेषां कदाचन ॥३१॥

574 [तद्भिन्नेषु वर्तनक्रमः]

स्वमार्गाचारविमुखैः भविभिः [4]प्राकृतात्मभिः ।
प्रेषितं सकलं द्रव्यं आत्मलीनमपि त्यजेत् ॥३२॥

---

अथ विधेयमाह —

लिङ्गादीक्षानन्तरं भक्तः स्वागमस्थितान् वीरशैवागमस्थितान् प्रतिदिनं पूजयेत् इत्यर्थः ॥३०॥

"शिवोक्तां जातिमर्यादां
योऽतीत्य भुवि वर्तते ।
स चण्डाल इति ज्ञेयः"

इत्यादिवचनप्रामाण्यात् शिवदीक्षाग्निदग्धमलत्रयत्वपूर्वकं प्राप्तमन्त्रपिण्डत्वात् द्विजन्मनां वीरशैवमतोचिताचारनिष्ठानां स्वजातिसम्भवानां भक्तमाहेश्वराणां आलयेषु तेषां पङ्क्तौ च भुञ्जीयात्; नान्यत्र इति तात्पर्यम् ॥३१॥

आत्मलीनमपि स्वाधीनमपि त्यजेत् इत्यर्थः ॥३२॥

---

[1] दीक्षाप्रवेशः=गुरुसंनिधौ शिवदीक्षाङ्गीकारः ।
[2] स्थितान्=निष्ठान् ॥
[3] वीरशैवजातीयाः ॥
[4] कैवलसांसारिकैः ॥

575

नार्चयेदन्यदेवांस्तु न स्मरेन्न च कीर्तयेत् ।
न तन्निवेद्यमश्नीयात् शिवभक्तो दृढव्रतः ॥३३॥

576

यद्गृहेष्वन्यदेवोऽस्ति तद्गृहाणि परित्यजेत्
नान्यदेवार्चकान् मर्त्यान् पूजाकाले निरीक्षयेत्[1] ॥३४॥

577 [स्थावरलिङ्गनिर्माल्याद्युपयोगः]

सदा शिवैकनिष्ठानां वीरशैवाध्ववर्तिनाम् ।
न हि स्थावरलिङ्गानां निर्माल्याद्युपयुज्यते ॥३५॥

---

दृढव्रतः दृढतरशिवव्रती शिवभक्तः अन्यदेवान् विष्णवाद्यन्यदेवान् नार्चयेत् हस्ताभ्यां न पूजयेत्, न च कीर्तयेत् न स्तुतिं कुर्यात्, न स्मरेत् मनसाऽपि न ध्यायेत्, तदर्पितान्नादि द्रव्यं नाश्नीयात् न भुञ्जीयात् इत्यर्थः ॥३३॥

पूजाकाले शिवलिङ्गपूजाकाले इत्यर्थः । शिष्टं स्पष्टम् ॥३४॥

सदा निरन्तरं शिवलिङ्गैकनिष्ठानां वीरशैवमार्गवर्तनवतां देवर्षिमानवप्रतिष्ठितादिस्थावरलिङ्गनिर्माल्यप्रसादादिद्रव्यं अयोग्यं हि प्रसिद्धम् ॥३५॥

---

[1] न निरीक्षयेत्—न पश्येत् ।

यत्र स्थावरलिङ्गानां अपायः परिवर्तते[1] ।
अथवा शिवभक्तानां शिवलाञ्छनधारिणाम्[2] ॥३६॥

579

तत्र प्राणान् विहायापि परिहारं [3]समाचरेत् ।
शिवार्थं मुक्तजीवश्चेत् शिवसायुज्यमाप्नुयात् ॥३७॥

---

578 [स्थावरलिङ्गापाये कर्तव्यम् ]

ननु वीरशैवानां स्थावरलिङ्गप्रसाद अयोग्य श्चेत्, तल्लिङ्गस्यापाये प्राप्ते सति, औदासीन्यं कर्तव्यं किम् ? इत्यत्राह—

यत्र स्थाने स्थावरलिङ्गानां प्रत्यूहः वर्तते, अथवा —गजाजिन गङ्गाकपालकङ्कालदग्धकामकालपुरभस्मकन्थाकमण्डलुभिक्षापात्रदण्डभस्मघुटिकारूपशिवलाञ्छनधारिणां जङ्गमदेवानां उक्तनवविधभक्तिमतां शिवभक्तानां अपायो वा यत्र प्रवर्तते तत्र पार्वत्याचारेण प्राणान् विहायापि निवारणं कुर्यात् ॥३७॥

ननु प्राणत्यागे दुर्मरणं किं न स्यात् ? इत्यत्राह ....

"शिवार्थं मुक्तजीवश्चेत् शिवसायुज्यमाप्नुयात् ॥इति॥

---

1 आकस्मिकः नाशः सम्भवेत् इत्यर्थः ।
2 अपायः परिवर्तते इत्यन्वयः ।
3 यथा अपायः न प्राप्नोति तथा कुर्यात् इति । अथवा प्रायश्चित्तमिति वा अर्थः ।

580 [भक्ताचारभेदाः]

शिवनिन्दाकरं दृष्ट्वा[1] घातयेदथवा शपेत् ।
स्थानं वा तत् परित्यज्य गच्छेद्यद्यक्षमो भवेत् ॥३८॥

581 [शिवाचारनिन्दायां कर्तव्यम् ]

यत्र चाचारनिन्दाऽस्ति कदाचित्तत्र न व्रजेत्[2] ।
यद्गृहे शिवनिन्दाऽस्ति तद्गृहाणि परित्यजेत् ॥३९॥

582 [शिवनिन्दाकरस्य पापबाहुल्यम् ]

यः सर्वभूताधिपतिं विश्वेशानं विनिन्दति ।
न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ॥४०॥

---

अथ वीरभद्राचार-बसवेश्वराचारं सूचयन् भक्ताचारभेदं प्रतिपादयति—

हन्तुं शप्तुं वा यद्यसमर्थः, कर्णौ पिधाय तत् स्थानं परित्यज्य गच्छेत् इत्यर्थः ॥३८॥

आचारनिन्दा शिवाचारनिन्दा । शिष्टं स्पष्टम् ॥३९॥

ननु शिवनिन्दाकरस्य प्रायश्चित्तं अस्ति वा? न वा? इत्यत्राह—

"ईश्वरः सर्वभूतानाम्"

इति श्रुतेः, सकलप्राण्यधिपतिं सर्वेश्वरं यः निन्दति, तस्य वर्षशतैरपि निष्कृतिः कर्तुं शक्या न भवतीत्यर्थः ॥४०॥

---

1 तस्य हननं यथा भवेत् तथा कुर्यात् इत्यर्थः । इदं शिवभक्त्याधिक्येन विहितं प्रायश्चित्तम् ।

2 तत्परिसरे न गच्छेदित्यर्थः ।

583 [शिवभक्तस्य तद्विरुद्धकर्मत्यागविधिः]

शिवपूजापरो भूत्वा सर्वकर्म विसर्जयेत्[1] ।
अथवा सर्वकर्म स्यात् सा पूजा निष्फला भवेत् ॥४१॥

584

उत्तमां गतिमाश्रित्य नीचां वृत्तिं समाश्रितः[2] ।
[3]आरूढपतितो ज्ञेयः सर्वकर्मबहिष्कृतः ॥४२॥

585 [शिवभक्तस्य नरस्तुतिनिषेध ]

पञ्चाक्षरोपदेशी च नरस्तुतिकरो यदि ।
सोऽलिङ्गी स दुराचारी कुकविः स तु विश्रुतः ॥४३॥

---

नन्वेवं शिवभक्तस्य अन्यदेवतास्मरणं च अयोग्यं चेत्, सन्ध्यावन्दनादिसर्वकर्मणः का गतिः ? तस्य सूर्याद्युपासनारूपत्वात् इत्यत्राह—

शिवपूजापरः शिवलिङ्गदीक्षायुक्तः सन् शिवपूजापरः इत्यर्थः । शिष्टं स्पष्टम् ॥४१॥

अथ नैतावन्मात्रम्, पातित्यं च स्यात् इत्याह —

स्पष्टम् ॥४२॥

अथ तस्य प्रणवपञ्चाक्षरीजपशीलत्वात् नरस्तुतिश्च गर्हितेत्याह—

---

1 विसर्जयेत्=त्यजेत् । न कुर्यादित्यर्थः ।

2 गतिः=दीक्षा । वृत्तिः=व्यवहारः ।

3 यथावा दुरारोहं गिरिशिखरमारुह्य तस्मात् पतितः तथा । सकलजीवनसाधनहीनो भवतीत्यर्थः ।

[586 तस्य चर्मपात्रपरिग्रहनिषेधः]

चर्मपात्रे जलं तैलं न ग्राह्यं भक्तितत्परैः ।
गृह्यते यदि भक्तेन रौरवं नरकं व्रजेत् ॥४४॥

587 [तस्य आशौचाभावः]

न तस्य सूतकं किञ्चित् प्राणलिङ्गाङ्गसङ्गिनः ।
जन्मनोत्थं मृतोत्थं च विद्यते परमार्थतः ॥४५॥

---

पञ्चाक्षरोपदेशी प्रणवपञ्चाक्षरोपदेशी [1]शिवभक्तः यदि नरस्तुतिकरः स्यात्; सः अलिङ्गी शिवलिङ्गरहितः[2] दुराचारी कुकविः कुत्सितकवि विश्रुतः विगतशास्त्रः इत्यर्थः ॥४३॥

भक्तितत्परैः शिवभक्तितत्परैः[3] इत्यर्थः । शिष्टम् स्पष्टम् ॥४४॥

ननु लिङ्गिभिः पूर्वकर्म[4] त्यजनीयमित्युक्तत्वात्, तस्य जाताशौचादि कर्म आचरणीयं वा ? न वा ? इत्यत्राह—

प्राणलिङ्गाङ्गसङ्गिनः शिवभक्तस्य जन्मनोत्थं मरणोत्थं किञ्चिदपि कुलोच्छिष्टसूतकं च परमार्थतो न विद्यते इत्यर्थः ॥४५॥

तर्हि स्त्रीणां रजस्सूतकमस्ति किम् ? इत्यत्राह—

---

1 प्राप्तसप्रणवपञ्चाक्षरोपदेशः इत्यर्थः ।
2 शिवलिङ्गधार्यपि तेन प्राप्यसद्धर्मफलरहितः इत्यर्थः ।
3 तत्परशब्दः आसक्तपरः ।
4 लिङ्गधारणदीक्षाग्रहणात् पूर्वं यो यः आचारः गृहीतः तत्सर्वमित्यर्थः ।

588

लिङ्गार्चनरतायाश्च ऋतौ नार्याः न सूतकम्[1] ।
तथा प्रसूतिकायाश्च सूतकं नैव विद्यते ॥४६॥

589

गृहे यस्मिन् प्रसूता स्त्री सूतकं मात्र[2] विद्यते ।
शिवपादाम्बुसंस्पर्शात् [3]सर्वपापं प्रणश्यति ॥४७॥

590 [तस्य शिवक्षेत्रतीर्थयात्राविधिः]

शिवस्थानानि तीर्थानि विशिष्टानि शिवार्चकः ।
शिवयात्रोत्सवं नित्यं सेवेत परया मुदा ॥४८॥

---

शिवलिङ्गपूजानिष्ठायाः स्त्रियः ऋतौ सूतकं मासिकरजोदर्शनकृतसूतकम् । तथा प्रसूतिकायाः शिशुप्रसूतिप्रयुक्तायाश्च सूतकं च न विद्यते इत्यर्थः ॥४६॥

तर्हि गृहसूतकस्य का गतिः ? इत्यत्राह—

तद्गृहे तया शिवपूजाकरणसमये शिवपादाम्बुपतनात् सर्वपापं सकलसूतकोत्थपापं नश्यतीति गृहसूतकं च नास्तीत्यर्थः[4] ॥४७॥

"लिङ्गार्चनरता नारी सूतकी तु रजस्वला ।

---

1 सूतकं=अशुचिभावः ।
2 अत्र=तस्मिन् गृहे ।
3 तत्तीर्थसेवनात् इति यावत् ।
4 सम्भावितं पापं=शुचित्वविरोधि न प्राप्नोतीत्यर्थः ।

591

शिवक्षेत्रोत्सवमहायात्रादर्शनकाङ्क्षिणाम् ।
मार्गेऽन्नपानदानं च कुर्यान्माहेश्वरो जनः ॥४९॥

592 [तत्र अन्नदानादिविधिः]

नान्नतोयसमं[1] दानं न चाहिंसापरं तपः ।
तस्मान्माहेश्वरो नित्यं अन्नतोयप्रदो भवेत् ॥५०॥

---

रविरग्निर्यथा वायुः तद्वत कोटिशुचिर्भवेत् ॥

इति शिवागमवचनात् शिवभक्तानां न किमपि सूतकमस्तीति भावः ॥

ननु पुराणविधीयमानशिवक्षेत्रतीर्थयात्रादिकं च परित्यजनीयं किम् ? इत्यत्राह—॥४८॥

शिवार्चकः इष्टलिङ्गपूजकः शिवभक्तः विशिष्टानि श्रेष्ठानि शिवस्थानानि श्रीपर्वतादिस्थानानि तीर्थानि, त्रिमकुटादितीर्थानि शिवयात्रोत्सवं च नित्यं सेवेत इत्यर्थः ॥४९॥

शिवक्षेत्रोत्सवोद्भूतयात्रादर्शनकाङ्क्षिणां सर्वेषां च । माहेश्वरो जनः शिवभक्तजनः । मार्गे अन्नोदकदानं च कर्तव्यमित्यर्थः ॥५०॥

ननु वस्त्रादिदानं विहाय अन्नतोयदानमेव किमित्यत्राह—

---

1 तोयं=पिपासादिनिवारकं तीर्थम् ।

593 [कन्यादानविधिः]

स्वमार्गाचारवर्तिभ्यः स्वजातिभ्यः सदा व्रती ।
दद्यात् तेभ्यः समादद्यात् कन्यां कुलसमुद्भवाम् ॥५१॥

594 [निगमनम्]

एवमाचारसंयुक्तः वीरशैवो महाव्रती ।
पूजयेत् परया भक्त्या गुरुं लिङ्गं च सन्ततम् ॥५२॥

---

स्पष्टम् ॥५०॥

ननु तर्हि कन्यादानं च कस्मायापि कर्तुं योग्यं किम् ? इत्यत्राह—

सदाव्रती नित्यशिवाचारव्रती शिवभक्तःस्वमार्गाचारवर्तिभ्यः वीरशैवाचारमार्गवर्तिभ्यः स्वजातीयशिवभक्तेभ्यः कुलसमुद्भवां स्वकीय कुलसमुत्पन्नां कन्यां दद्यात् । तेभ्यः समादद्यात् आनयेत् इत्यर्थः ॥५१॥

एवं बहुविधशिवाचारसम्पन्नः वीरव्रती शिवभक्तः श्रीगुरुं लिङ्गं च पूजयेदित्युभयस्थलं सूचयन् भक्तस्थलं समापयति—

स्पष्टम् ॥५२॥

॥ इति भक्तमार्गक्रियास्थलम् ॥९॥

## (१०) भक्तस्थले गुरुलिङ्गार्चनरूपोभयस्थलम् ॥ [१-१०]

—o—

596 [गुरोः शिवसाम्यम्]

गुरोरभ्यर्चनेनापि साक्षादभ्यर्चितः शिवः ।
तयोर्नास्ति भिदा किञ्चित् एकत्वात् तत्त्वरूपतः ॥१॥

597

यथा देवे जगन्नाथे सर्वानुग्रहकारके ।
तथा गुरुवरे कुर्यात् उपचारान् दिनेदिने ॥२॥

---

595 [गुरुलिङ्गार्चनरूपोभयस्थलनिरूपणम्]

अथ

"यस्य देवे परा भक्तिः
यथा देवे तथा गुरौ ॥"

इति श्वेताश्वतरश्रुत्यनुसारेण शिवगुर्वोरभेदं सूत्रद्वयेन कथयति—

गुरोः पूजनेन शिवः साक्षात् प्रत्यक्षेण पूजितः, तयोः शिवगुर्वोः तत्त्वरूपतः परमार्थतः एकरूपत्वात् किञ्चिदपि भिदा भेदः नास्तीत्यर्थः ॥१॥

तस्मात्—

उपचारान् भक्त्याद्युपचारान् इत्यर्थः[1] ॥ शिष्टं स्पष्टम् ॥२॥

---

1 अतिशयितप्रीतिपूर्वकाणि सेवाकार्याणि इत्यर्थः ।

598

अप्रत्यक्षो महादेवः सर्वेषां आत्ममायया ।
प्रत्यक्षो गुरुरूपेण वर्तते भक्तिसिद्धये[1] ॥३॥

शिवज्ञानं महाघोरसंसारार्णवतारकम् ।
[2]ध्रियते येन स गुरुः कस्य वन्द्यो न जायते ॥४॥

---

ननु शिवगुर्वोरभेदे शिववत् गुरुरपि अप्रत्यक्षः स्यात् इत्यत्राह—

महादेवः परमेश्वरः सर्वेषां आत्ममायया शक्त्या अप्रत्यक्षः अपि, भक्तिसिद्धये ललाटनेत्रचन्द्रकलाभुजद्वयतिरोधानं कृत्वा गुरुरूपेण प्रत्यक्षः सन् वर्तते इत्यर्थः ॥३॥

599 [गुरूपूजावश्यकता]

ननु शिववत् गुरोः इष्टार्थप्रदत्वादर्शनात् किमर्थं भजनीयः ? इत्यत्राह—

येन गुरुणा महाभयङ्करसंसारसमुद्रतारकं शिवज्ञानं दीयते उपदिश्यते: सः गुरुः कस्य केन वन्द्यो न भवति ? जननमरणपीडितैस्सर्वैरपि वन्द्यः इत्यर्थः ॥४॥

600 [गुरुमहिमा]

ननु तादृशशिवज्ञानं कीदृशम् ? इत्यत्र, तत् तन्माहात्म्यपूर्वकं प्रकाशयति—

---

1 स्वीयभगवद्भक्त्या स्वस्मिन् दैवानुग्रहसिद्धये इत्यर्थः
2 उपदिश्यते इति यावत् ।

यत्कटाक्षकलामात्रात् परमानन्दलक्षणम् ।
लीयते शिवरूपत्वं स गुरुः केन नार्चितः ॥५ ।

हितमेवाचरेन्नित्यं शरीरेण धनेन च ।
आचार्यस्योपशान्तस्य शिवज्ञानमहानिधेः ॥६॥

---

यत्कटाक्षकलामात्रात् इति । अयं भावः—अत्र बन्धमोक्षदशयोरपि अहमिति धर्मिणः प्रसिद्धत्वेन, अन्धजात्यन्धबधिरमूकादेरपि स्वात्मनि संशयविपर्ययाभावात्—

"सर्वं ज्ञानं धर्मिण्यभ्रान्तम्
प्रकारे तु विपर्ययः"[1]

इति सर्वसम्मतत्वेन, अण्डरसन्यायेन स्वात्मतादात्म्यापन्नस्य पुरुषस्य विभागपरामर्शमहिम्ना वह्नेः विस्फुलिङ्ग इव विच्छिन्नत्वात्, अत एव स्वातन्त्र्यापरपर्यायमायाशक्तिपरिकल्पितव्यामोहवशात् अविज्ञातपरमानन्द-लक्षणस्वात्मशिवत्वं दशमदृष्टान्तेन लीयते प्रकाशयते, सः गुरुः केन नार्च्यते ? सर्वेणा मुमुक्षुणापि अर्चनीय एवेत्यर्थः ॥५॥

601

एवंरूपश्रीगुरोः हितमेवाचरणीयम्, तदाज्ञोल्लङ्घनं न कर्तव्यम्, इत्युक्त्वा उभयस्थलं समापयति—

---

[1] पदार्थदर्शनानुपदमेव 'इदं' इतिज्ञानेऽध्यासाभावात् किंधर्मविशिष्ट-मित्यत्रैव ज्ञानभेदसंभवादितिभावः ।

हितमेवाचरेन्नित्यं शरीरेण धनेन च ।
आचार्यस्योपशान्तस्य शिवज्ञानमहानिधेः ॥६॥

602 [निगमनम्]

गुरोराज्ञां न लङ्घेत सिद्धिकामी महामतिः ।
तदाज्ञालङ्घनेनापि शिवाज्ञाच्छेदको भवेत् ॥७॥

—o—

उपशान्तस्य—रागद्वेषरहितस्येत्यर्थः ॥ शिष्टं स्पष्टम् ॥ ॥६॥

महामतिः विवेकी सन् सिद्धिकामीमोक्षार्थी[1] गुरोराज्ञां न लङ्घेत। तदा शिवज्ञाभङ्गकृत् भवेत् इत्यर्थः ॥७॥

इति गुरुलिङ्गार्चनरूपोभयस्थलं समाप्तम् ॥ (१०)

—o—

1 प्रायशः आत्मलाभस्य मुक्तिलाभस्यवा पर्यायेण अध्यात्मशास्त्रे सिद्धि-शब्दप्रयोगादितिभावः ।

## (११) अथ भक्तस्थले जङ्गमार्चनलक्षणत्रिविधसम्पत्तिस्थलम् ॥ (१-११)

—o—

603 [जङ्गमार्चनलक्षणत्रिविधसम्पत्तिस्थलनिरूपणम् ]

यथा गुरौ यथा लिङ्गे भक्तिमान् परिवर्तते ।
जङ्गमे च तथा नित्यं भक्तिं कुर्यात् विचक्षणः ॥१॥

604 [शिवस्यैव गुरुलिङ्गजङ्गमरूपत्वम् ]

एक एव शिवः साक्षात् सर्वानुग्रहकारकः ।
[1]गुरुजङ्गमलिङ्गात्मा वर्तते [2]भुक्तिमुक्तिदः ॥२॥

---

विचक्षणः प्रवीणः शिवभक्तः इत्यर्थः । शिष्टं स्पष्टम् ॥१॥

ननु भक्तिसिद्ध्यर्थं — शिव एव गुरुरूपेणावतीर्णः — इत्युक्तत्वात्, शिववत् गुरौ भक्तिः कर्तुमुचिता । जङ्गमे च तथा भक्तिः किमर्थं विधेया ? इत्यत्राह —

"अतोऽस्मि लोके वेदे च
प्रथितः पुरुषोत्तमः"

इति भगवदुक्तेः, लोकवेदप्रसिद्धः सन्, सकलभक्तानुग्रहकरः प्रभुः

---

[1] गुर्वादिस्वरूपधारी सन् इत्यर्थः ।
[2] भुक्तिः = ऐहिकसुखसम्पदनुभवः ।

लिङ्गं च द्विविधं प्रोक्तं जङ्गमाजङ्गमात्मना ।
अजङ्गमे यथा भक्तिः जङ्गमे च तथा स्मृता ॥३॥
अजङ्गमं तु यल्लिङ्गं मृच्छिलादिविनिर्मितम् ।
[1]तद्वरं जङ्गमं लिङ्गं शिवयोगीति विश्रुतम् ॥४॥

---

स्वतन्त्रः परमेश्वरः एक एव, गुरुजङ्गमलिङ्गात्मा गुरुलिङ्गजङ्गमात्मकः भुक्ति-मुक्तिदः भोगमोक्षप्रदः सन् वर्तते इति, शिववत् जङ्गमेऽपि भक्तिः कर्तव्या इति भावः ॥२॥

605 [लिङ्गद्वैविध्यम्]

अथ लिङ्गापेक्षया जङ्गमस्याधिक्यं वक्तुं लिङ्गस्वरूपं प्रथमं उपपादयति--

जङ्गमाजङ्गमात्मना चरस्थिरभेदेन लिङ्गं शिवलिङ्गं द्विविधमिति प्रोक्तम् । अजङ्गमे स्थिरलिङ्गे यथा भक्तिः विधीयते, तथा जङ्गमेऽपि चरलिङ्गेऽपि भक्तिः कर्तव्या इत्यर्थः—

606 [तयोः जङ्गमाजङ्गमलिङ्गयोर्भेदः]

ननु किमनयोः स्वरूपम्? इत्यत्राह—

मृच्छिलादिविनिर्मितं यत् लिङ्गमस्ति, तत् अजङ्गमं स्थिरलिङ्गमित्यर्थः ॥४॥

607 [तद्विवरणम्]

तत् कथम्? इत्यत्राह--

---

1 तद्वरं = तस्मादपि श्रेष्ठमित्यर्थः ।

अचरे[1] मन्त्रसंस्कारात् लिङ्गे वसति शङ्करः ।
सदाकालं वसत्येव चरलिङ्गे महेश्वरः ॥५॥
शिवयोगिनि यद्दत्तं तदक्षयफलं भवेत् ।
तस्मात् सर्वप्रयत्नेन तस्मै देयं महात्मने ॥६॥

609

यत्फलं लभते जन्तुः पूजया शिवयोगिनः ।
तदक्षयमिति प्रोक्तं सकलागमपारगैः ॥७॥

---

स्पष्टम् ॥५॥

608 [शिवयोगिजङ्गमपूजाफलम् ]

तस्मात् शिवयोगिनं प्रति कृतं दानपूजाफलं सूत्रद्वयेन विशेषयति--

अस्मिन्नर्थे आगमः प्रमाणमिति सूचितम् ।

अत्र--

"दर्शनादर्चनात्तस्य त्रिस्सप्तकुलसंयुताः[2] ।
जनाः मुक्तिपदं यान्ति किं पुनः तत्परायणाः ॥"

इति योगजागमवचनं अनुसन्धेयम् ॥

610 [तदपचारफलम् ]

एवं तत्पूजाफलं उक्त्वा, तदवमानफलं प्रकाशयति[3]--

---

[1] अचरे=स्थावरे लिङ्गे इत्यन्वयः ।
[2] एकविंशतिकुलपर्यन्तं तत्कुलसंभवाः इत्यर्थः ।
[3] दुष्फलमिति यावत् ।

नावमन्येत कुत्रापि शिवयोगिनमागतम् ।
[1]अवमानाद्भवेत्तस्य दुर्गतिश्च न संशयः ॥८॥

शिवयोगी शिवः साक्षात् इति कैङ्कर्यभक्तितः ।[2]
पूजयेदादरेणैव यथा लिङ्गं यथा गुरुः ॥९॥

इति जङ्गमार्चनलक्षण-त्रिविधसम्पत्तिस्थलं समाप्तम् ॥ (11)

---

कुत्रापि अन्तर्बहिः क्वापि समागतमित्यर्थः ॥

611 [निगमनम् ]

तस्मात् शिवयोगी पूजनीयः, इति वदन् त्रिविधसम्पत्तिस्थलं समापयति—

कैङ्कर्यभक्तिः भृत्याचाररूपा भक्तिरित्यर्थः ॥ शिष्टं स्पष्टम् ॥९॥

---

1 तस्य शिवयोगिनः अवमानकरणादित्यर्थः ।

2 तस्मिन् किङ्करभावस्वीकारेणेति यावत् ।

## (12) अथ भक्तस्थले एतत्त्रयप्रसादस्वीकारलक्षण-चतुर्विधसारायस्थलम् (1-12)

---

612 [चतुर्विधसारायस्थलनिरूपणम्—तत्र पादोदकस्वीकारविधिः]

पादोदकं यथा भक्त्या स्वीकरोति महेशितुः ।
तथा शिवात्मनोर्नित्यं गुरुजङ्गमयोरपि ॥१॥[1]
सर्वमङ्गलमाङ्गल्यं सर्वपावनपावनम् ।
सर्वसिद्धिकरं पुंसां शम्भोः पादाम्बुधारणम्[2] ॥२॥

---

अथ चतुर्विधसारायस्थलं निरूपयति—
अत्र-महेशितुः शिवलिङ्गस्येत्यर्थः । शिष्टं स्पष्टम् ।

613

अथ पादोदकधारणस्वरूपकथनपूर्वकं तत्फलमाह—

शिवलिङ्गचरणतीर्थधारणम् समस्तमङ्गलानां मङ्गलं सत्, सकल-पावनानां पावनं सत् पुरुषाणां सर्वसिद्धिकरं भवति इत्यर्थः ॥२॥

---

[1] दीक्षाप्रदाता गुरुरिति, स्वयं योगीश्वरः सम्पन्नः जङ्गमः इति च व्याख्या । शिवात्मनोः—शिवस्वरूपयोरित्यर्थः ।

[2] पादोदकस्य प्रोक्षणम् इत्यर्थः ।
केचित् पादोदकं पावनमिति पिबन्ति च ।

शिरसा धारयेद्यस्तु पत्रं पुष्पं शिवार्पितम् ।
प्रतिक्षणं भवेत्तस्य पौण्डरीकक्रियाफलम्[1] ॥३॥

भुञ्जीयात् रुद्रभुक्तान्नं रुद्रपीतं जलं पिबेत् ।
रुद्राघ्रातं सदा जिघ्रेत् इति जाबालिकी श्रुतिः । ४॥[3]

---

6.4 [निर्माल्यस्वीकारविधिः]

अथ निर्माल्यपत्रपुष्पधारणं निरूपयति—

स्पष्टम् ॥३॥

6.5 [तत्र श्रुतिप्रामाण्यम् ]

ननु—

"शिवनिर्माल्यमग्राह्यम्"[2]

इति पुराणादौ श्रूयते । तत् कथं ग्राह्यम् ? इत्यत्राह—

रुद्रभुक्तान्नं रुद्रसमर्पितप्रसादान्नं भुञ्जीयात् भक्षयेत् । रुद्रपीतं रुद्रप्रसादोदकं पिबेत्, रुद्राघ्रातं रुद्रसमर्पितकुसुमं जिघ्रेत्, इति जाबालिकी श्रुतिराह इत्यर्थः ॥४॥

---

[1] पौण्डरीको नाम यागविशेषः वेदविहितः ।

[2] निर्माल्यं— विग्रहोपरि पूर्वं धृतं, ततः
तस्मात् गृहीतम् पुष्पादिकम्

[3] पीतं भुक्तं इत्यादयः शब्दाः तत्तद्भावेन भगवते अर्पिताः इत्यर्थकाः ।

616

अर्पयित्वा निजे लिङ्गे पत्रं पुष्पं फलं जलम् ।
अन्नाद्यं सर्वभोज्यं च स्वीकुर्यात् भक्तिमान् नरः ॥५॥

617 [गुरुप्रसादस्य अवश्यग्राह्यता]

गुरुत्वात् सर्वभूतानां शम्भोरमिततेजसः ।
तस्मै निवेदितं सर्वं स्वीकार्यं तत्परायणैः ॥६॥

---

"रुद्रेणात्तमश्नन्ति, रुद्रेण पीतं
पिबन्ति, रुद्रेणाघ्रातं जिघ्रन्ति ।"

इति जाबालश्रुतिः ।

तस्मात्-पुराणादिषु श्रूयमाणतन्निषेधस्तु चण्डाधिकारविशिष्ट-स्थावरलिङ्गपरः, न तु बाणादिलिङ्गपरः ।

"बाणलिङ्गे स्वयंभूते चन्द्रकान्ते हृदि स्थिते ।
शालग्रामशिलोद्भूते शम्भोर्नैवेद्यभक्षणम् ॥"

इति वचनात् । अन्यथा श्रुतिविरुद्धपुराणवचनं अप्रमाणमेव भवेत्, इति न सार्वत्रिकः इति सङ्क्षेपः ॥ एवं श्रुतिसिद्धत्वात् ॥४॥

स्पष्टम् ॥५॥

[1]अत्र गुरुप्रसादविमुखानां मुक्तिर्नास्तीति सर्वसम्मतत्वेन, अपरिमित-

---

[1] ईश्वरप्रसादे वैमुख्याभावेऽपि गुरौ मानवभावेन क्वचित् अवज्ञा संभवे-दिति तत्परिहारायाह—

618 [शिवलिङ्गप्रसादाधिकारिणः]

ये लिङ्गधारिणो लोके ये शिवैकपरायणाः ।[1]
तेषां तु शिवनिर्माल्यं उचितं नान्यजन्तुषु ॥७॥

619 [प्रसादस्वीकारफलम्]

अन्नजाते तु भक्तेन भुज्यमाने शिवार्पिते ।
सिक्थे सिक्थेऽश्वमेधस्य[2] यत् फलं तदवाप्यते ॥८॥

---

'तेजसः शिवस्य' इति श्रुतेः, सकलविद्याधीश्वरत्वात् तत्रैव —

"मे अस्तु सदाशिवोम्"

इति तारकब्रह्मरूपप्रणवाभेदेन श्रूयमाणत्वाच्च सकललोकगुरुत्वात् तत्प्रसादः अवश्यं ग्राह्यः इत्याह—

स्पष्टम् ॥६॥

तर्हि अस्य शिवलिङ्गप्रसादस्य कः अधिकारी ? इत्यत्राह—
स्पष्टम् ॥७॥

तर्हि शिवप्रसादान्नभोजनस्य किं फलम् ? इत्यत्राह —

परिपक्वतण्डुलव्यक्तिः सिक्थशब्देनोच्यते । शिष्टं स्पष्टम् ॥८॥

---

1 शिवमात्रे भगवद्भावनया ध्याननिष्ठाः इत्यर्थः ।
2 अश्वमेधस्य-तन्नामकयागविशेषस्य । 'योऽश्वमेधेन यजते' इत्यादिना वेदे तन्महिमा विशदीकृतः ।

620 [प्रसादानधिकारिणां निर्देशः]

निर्माल्यं निर्मलं शुद्धं शिवेन स्वीकृतं यतः ।
निर्मलैस्तत्परैर्धार्यं नान्यैः प्राकृतजन्तुभिः ॥९॥

621

शिवभक्तिविहीनानां जन्तूनां पापकर्मणाम् ।
विशुद्धे शिवनिर्माल्ये नाधिकारोऽस्ति कुत्रचित् ॥१०॥

---

अथ अस्य अनधिकारिणः सूचयति—

शिवलिङ्गदीक्षारहिताः प्राकृताः, ते अनधिकारिणः । तैः न धार्यमित्यर्थः । शिवदीक्षया निर्मलैः तत्परैः शिवलिङ्गनिष्ठैः धार्यमित्यर्थः ॥९॥

तदेव स्फुटयति—

अयं भावः — व्यापकीभूतशिवस्य[1] अष्टतनुपरिकल्पितत्वेन साधारणीभूतदेवतान्तरपूजायां शिवसम्बन्धिपुष्पोदकीभूतचन्द्रगङ्गाभ्यां परिपुष्टस्य धान्यस्य अग्निरूपजिह्वया परिपच्यमानत्वात्, एतदुभयत्र सर्वप्राणिनामप्यधिकारोऽस्ति । तथापि असाधारणशिवलिङ्गपूजायां शिवलिङ्गप्रसादस्वीकारे च शिवदीक्षासम्पन्न एव अधिकारी इति सर्वशास्त्रप्रसिद्धम् ॥१०॥[2]

---

1 आकाशवत् सर्वव्यापकस्य विभोरिति यावत् ।

2 अन्येषां च शिवदीक्षाधिकारसम्पादकं स्यादिति तान्त्रिकाः ।

622 [निगमनम्]

शिवलिङ्गप्रसादस्य स्वीकारात् यत् फलं भवेत् ।
तथा प्रसादस्वीकारात् गुरुजङ्गमयोरपि ॥११॥

623

तस्मात् गुरुं महादेवं शिवयोगिनमेव च ।
पूजयेत् तत्प्रसादान्नं भुञ्जीयात्[1] प्रतिवासरम् ॥१२॥

---

अथ प्रसादमहत्त्वं संसूच्य एतत् स्थलं समापयति—सूत्रद्वयेन—

पूजयेत् तनुमनोधनैः पूजयेदित्यर्थः । तत्प्रसादान्नमेव प्रतिवासरं भुञ्जीयात् इति भावः ॥१२॥

— —

इति एतत्त्रयप्रसादस्वीकारलक्षणचतुर्विधसारायस्थलम् ॥ (12)

— —

1 प्रतिवासरं=प्रतिदिनमित्यर्थः ।

## (13) भक्तस्थले–दानत्रये–उपाधिमाटस्थलम् (1-13)

624 [उपाधिमाटस्थलनिरूपणम्-तत्र दानप्राशस्त्यम्]

शिवलिङ्गे शिवाचार्ये[3] शिवयोगिनि भक्तिमान् ।
दानं कुर्यात् यथाशक्ति तत्प्रसादयुतः सदा ॥१॥

625 [दानस्वरूपत्रैविध्यम्]

दानं च त्रिविधं प्रोक्तं सोपाधि निरुपाधिकम् ।
सहजं चेति सर्वेषां सर्वतन्त्रविशारदैः ॥२॥

---

अथ—

"देहदानात्[1] सत्यसिद्धिः अर्थदानाच्च निर्वृतिः ।
प्राणदानात्[2] ज्ञानसिद्धिः एवं सर्वं स्थिरं भवेत् ॥"

इति योगजागमवचनानुसारेण गुरुलिङ्गजङ्गमोद्देशेन यथाशक्ति दानं कुर्यात् इत्याह—

तद्विषये इति शेषः ॥ शिष्टं स्पष्टम् ॥

अथ तद्दानस्वरूपं विशदयति—

---

1 दैहिकश्रमेण तदुपचारात् तत्सेवनादित्यर्थः ।

2 प्राणदानं नाम–योगमार्गानुसारेण प्राणायामरहस्यज्ञानेन प्राणक्रियाया ईश्वरधर्मप्राप्त्यनुकूलक्रियाश्रयत्वकरणम् ।

3 गुरौ इत्यर्थः ।

626 [तत्र सोपाधिदानस्वरूपम्]

फलाभिसन्धिसंयुक्तं[2] दानं यद्विहितं भवेत् ।
तत्सोपाधिकमाख्यातं मुमुक्षुभिरनादृतम् ॥३॥

इति सोपाधिकमाटस्थलम् (13)

---

दानं च प्राणदेहार्थरूपदानत्रयं च सोपाधिकं, निरुपाधिकं सहजं चेति त्रिरूपवत् इति समस्तागमप्रवीणैः[1] सर्वेषां शिवभक्तान प्रोक्तमित्यर्थः ॥२॥

तत्र सोपाधिदानरूपोपाधिमाटस्थलं निरूपयति—

तुच्छफलाभिलाषसंयुक्तम्, अत एव मुमुक्षुभिः उपेक्षितं यत् दानम् विहितं स्यात्, तत् सोपाधिकमित्युक्तमित्यर्थः ॥३॥

---

1 आगमाः=शैवागमाः ।
2 अभिसन्धिः=अपेक्षा ।

(14) दानत्रये भक्तस्थले निरुपाधिकमाटस्थलम् (1-14)

627 [निरुपाधिमाटस्थलनिरूपणम्, तत्र निरुपाधिदानस्वरूपम्]

फलाभिसन्धिनिर्मुक्तं ईश्वरार्पितकाङ्क्षितम् ।[1]
निरुपाधिकमाख्यातं दानं दानविशारदैः ॥१॥[2]

इति निरुपाधिमाटस्थलम् (14)

---

अथ निरुपाधिमाटस्थलं निरूपयति—

तुच्छफलेच्छारहितं ईश्वरार्पणाभिवाञ्छया विहितं यत् दानम्, तत् दानं तत्त्वस्वरूपज्ञैः निरुपाधिकदानमिति आख्यातमित्यर्थः ॥१॥

1 'इदं मया कृतं दानं ईश्वरप्रीतये स्यात्' इति आशंसनया कृतम् ।
2 दानकर्मरहस्यज्ञैः इत्यर्थः ।

॥ श्री शिवाय नमः ॥

## (15) भक्तस्थले दानत्रये सहजमाटस्थलम् (1–15)

628 [सहजमाटस्थलनिरूपणम्][1]

[1]आदातृदातृदेयानां शिवभावं विचिन्तयन् ।
आत्मनोऽकर्तृभावं च[2] यद्दत्तं सहजं भवेत् ॥१॥

629 [उक्तदानत्रये सहजस्यैव श्रेष्ठत्वम्]

सहज़ं दानमुत्कृष्टं सर्वदानोत्तमोत्तमम् ।
शिवज्ञानप्रदं पुंसां जन्मरोगनिवर्तकम् ॥२॥[3]

---

अथ सहजमाटस्थलं निरूपयति—

परिगृहीतृप्रदातृदेयानां शिवत्वं चिन्तयन्, आत्मनः स्वस्य अकर्तृत्वं भावयन्, यत् दानं दत्तम् तत् सहजदानं स्यात् इत्यर्थः ॥१॥

"भोक्ता भोज्यं प्रेरितारं च मत्वा
सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्"

इति श्वेताश्वतरश्रुत्युपक्रमगतं पिण्डस्थलरहस्यमन्त्रोपसंहाररूपसहजदानस्थलेऽपि बोध्यम् ॥

एषु किं श्रेष्ठम्? इत्यत्राह—

सहजं दानं सर्वदानोत्तमानामुत्तमम् इति । उत्कृष्टं श्रेष्ठमित्यर्थः ।

---

1 आदाता—कृतदानप्रतिग्रहीता ।
2 देवः मद्द्वारा स्वस्मै स्वप्रीतये स्वयमेव कारयतीति भावेनेत्यर्थः ।
3 जन्मरोगः—संसाररूपः कश्चन रोगविशेषः ।

630 [सहजदानविशेषलक्षणम्]

शिवाय शिवभक्ताय दीयते यदि किञ्चन ।
भक्त्या तदपि विख्यातं[1] सहजं दानमुत्तमम् ॥३॥

631 [सहजदानफलम्]

दानात् स्वर्णसहस्रस्य सत्पात्रे यत् फलं भवेत् ।
एकपुष्पप्रदानेन शिवे[2] तत्फलमिष्यते ॥४॥

---

कथम्? इत्यत्र, पुंसां जननमरणलक्षणमहारोगनिवारकीभूतशिवतादात्म्य-ज्ञानप्रदमिति उत्तरम् ॥३॥

ननु गुरुलिङ्गजङ्गमोद्देशेन एवं भावनया दत्तमेव सहजं वा इत्यत्राह–

शिवाय इष्टलिङ्गातिरिक्तस्थावरलिङ्गरूपिणे शिवाय दत्तं क्षेत्रादिदानम् विरक्तिमूर्तिव्यतिरिक्तशिवभक्तेभ्यश्च दत्तमपि सहजं दानमित्यर्थः ॥

अथ तद्दानफलमाह—

स्पष्टम् ॥

632

तत् कथम्? इत्यत्र—

"ईशानः सर्वविद्यानाम्"

इति श्रुतेः, शिवस्य सकलविद्यानिधित्वात् जगद्गुरुत्वेन सत्पात्रतमत्वात् इत्यभिप्रायेणाह—

---

1 उत्तममित्यर्थः ।
2 शिवलिङ्गे ।

शिव एव परं पात्रं सर्वविद्यानिधिर्गुरुः ।
तस्मै दत्तं तु यत्किञ्चित् तदनन्तफलं भवेत् ॥५॥

633

शिवयोगी शिवः साक्षात् शिवज्ञानमहोदधिः ।
यत् किञ्चिद्दीयते तस्मै तद्दानं पारमार्थिकम् ॥६॥

634 [शिवयोगिन एव दानसत्पात्रत्वम् ]

शिवयोगी महत्पात्रं सर्वेषां दानकर्मणि ।
तस्मान्नास्ति परं किञ्चित् पात्रं शास्त्रविचारतः ॥७॥

---

अयमप्येकोऽर्थः, शिव एव परं पात्रम् तथा सर्वविद्यानिधिर्गुरुश्च परं पात्रम् , तस्मै शिवाय गुरवे च दत्तं अनन्तफलदम् इति ॥५॥

एवं शिवयोगिनोऽपि दत्तमपीत्याह—

पारमार्थिकम् अपरिमितफलदं सहजदानमित्यर्थः ॥६॥

अथ शिवयोगीश्वरमहत्त्वमेव विशेषयति—

दानकर्मणि दानकर्मविषये सर्वेषां सत्पात्राणां शिवयोगी महापात्रम्। तस्मात् परं श्रेष्ठं पात्त्रं शास्त्रविचारतः किञ्चिदपि नास्तीत्यर्थः ॥

---

1 पात्रं—दानसत्पात्रम्—दानार्हमिति यावत् ।

2 समस्तशास्त्रग्रन्थानां सम्यक् परिशीलनेऽपि इत्यर्थः ।

635 [दानमहिमा]

भिक्षामात्रप्रदानेन शान्ताय[1] शिवयोगिने ।
यत् फलं लभ्यते नैतत् यज्ञकोटिशतैरपि ॥८॥

636

शिवयोगिनि संतृप्ते तृप्तो भवति शङ्करः ।
तत्तृप्त्या तन्मयं विश्वं[2] तृप्तिमेति चराचरम् ॥९॥

637 [शिवयोगितृप्तेरेव दानोद्देशता]

तस्मात् सर्वप्रयत्नेन येनकेनापि कर्मणा ।
तृप्तिं कुर्यात्[3] सदाकालं अन्नाद्यैः शिवयोगिनः ॥१०॥

---

अथ तद्दानफलमाह—

भिक्षामात्रं कवलमात्रमित्यर्थः । शिष्टं स्पष्टम् ॥

तत् कथम् ? इत्यत्राह—

"ब्रह्मवित् ब्रह्मैव भवति"

इति श्रुतेः. शिवयोगिनः साक्षात् शिवरूपत्वात्, तत्तृप्त्या शिवः तृप्तो भवति। तत्तृप्त्या "सर्वो वै रुद्रः" इति श्रुतेः तन्मयं विश्वं तृप्तिमेति इत्यर्थः ॥९॥

तस्मात् सर्वप्रयत्नेन शिवयोगिनमेव तृप्तिं कुर्यात् इत्याह—

---

1 शान्ताय=रागद्वेषरहिताय ।
2 "अयमात्मा ब्रह्म" 'सर्वं खल्विदं ब्रह्म" इत्यादिवचनप्रामाण्यादित्यर्थः ।
3 कुर्यात्=उत्पादयेत् इत्यर्थः ।

638 [एवं दातुः शिवस्वरूपता]

निरुपाधिकचिद्रूपपरानन्दात्मवस्तुनि ।
समाप्तं सकलं यस्य स दानी शङ्करः स्वयम्[1] ।।११।।

639 [निगमनम्]

उक्ताखिलाचारपरायणोऽसौ सदा[2] ऽवितन्वन्[3] सहजं तु दानम् ।
ब्रह्मादिसम्पत्सु विरक्तचित्तः भक्तो हि माहेश्वरतामुपैति ।।१२।।

---

सर्वप्रयत्नेन ययाकयाचित् क्रियया, सदाकालं अन्नपानादिना शिवयोगिनः तृप्तिं कुर्यात् इत्यर्थः ।।१०।।

अथैवंरूपसत्पात्रेषु सहजदानसम्पन्न एव साक्षात् शिव एवेत्याह—

सम्पूर्णसच्चिदानन्दलक्षणगुरुलिङ्गजङ्गमात्मनि परमशिवे यस्य शिवभक्तस्य शरीरार्थप्राणरूपं सकलं वस्तु समाप्तं भवेत्, सः सहजदानी, स्वयमेव शिवः इत्यर्थः ।।११।।

अथैवं उक्ताखिलाचारसम्पन्नः सहजदानी शिवभक्त एव माहेश्वरतां उपैति इति वृत्तेनाह—

---

[1] शिवतादात्म्यं प्राप्नोतीत्यर्थः ।

[2] परायणः=तत्परः ।

[3] विस्तारेण प्रतिपादयन् ।

इति श्रीमत् षट्स्थलब्रह्मिणा शिवयोगिनाम्ना रेणुकाचार्येण विरचिते सिद्धान्तशिखामणौ माहेश्वरस्य नवविधस्थलप्रसङ्गो नाम नवमः परिच्छेदः समाप्तः

इति सहजमाटस्थलम् (1-15)

इति प्रथमं भक्तस्थलम्

अक्षरार्थस्य स्पष्टत्वात् भावार्थो लिख्यते । देहद्रव्यक्षेत्राणि गुरुलिङ्गजङ्गमेषु समर्प्य–श्रीगुरुकरकमले समुत्पात्य,[1] जङ्गमदेवतीर्थ-प्रसादेनैव शरीरं धृत्वा, महालिङ्गैक्यापेक्षी शिवभक्तः माहेश्वरीयसदाचारवान् सन् माहेश्वरः इति प्रसिद्धो भवेत् इति ।। इति दानत्रयस्थलम् ।।

इति श्रीमत्पदवाक्यप्रमाणपारावार
धुरीणश्रीमरितोण्टदार्येण विरचितायाम्
तत्त्वप्रदीपिकाख्यायाम् सिद्धान्त
शिखामणिव्याख्यायाम्
नवविधस्थलप्रसङ्गो नाम नवमः
परिच्छेदः समाप्तः

[1] समुत्पत्य (क. ख)

॥ श्री शिवाय नमः ॥

# अथ द्वितीयं माहेश्वरस्थलम्

## दशमः परिच्छेदः

### नवविधस्थलप्रसङ्गः

640 [माहेश्वरस्थलनिरूपणम्]

भक्तस्थलं समाख्यातं भवता गणनायक ।
केन वा धर्मभेदेन[1] भक्तो माहेश्वरो भवेत् ॥१॥

641 [भक्तस्य माहेश्वरत्वसिद्धिः]

केवले सहजे दाने निष्णातः शिवतत्परः ।
ब्रह्मादिस्थानविमुखः भक्तः माहेश्वरः स्मृतः ॥२॥

642

भक्तेर्यदा समुत्कर्षः भवेत् वैराग्यगौरवात् ।[2]
तदा माहेश्वरः प्रोक्तः भक्तः स्थिरविवेकवान् ॥३॥

---

अथ भक्तस्थलनिरूपणानन्तरं अगस्त्यः श्रीरेणुकं पृच्छति—

अगस्त्य उवाच—

भक्तः शिवभक्तः केन धर्मभेदेन आचारभेदेनेत्यर्थः । महेश्वरः स्यात्? इति प्रश्नार्थः ॥१॥

रेणुक उवाच—

केवले सहजे दाने निष्णातः कुशलः सन् ब्रह्मादिपदनिःस्पृहः शिवभक्तः शिवतत्परः शिवैकनिष्ठः सन् माहेश्वरः स्मृतः ॥२॥

---

[1] धर्मभेदेन—आचरणभेदेन

[2] वैराग्यगौरवात्—वैराग्यभावे वर्तमान-निरतिशयसुखसम्पदाकर्षणात् इत्यर्थः ।

643 [एतदवान्तरभेदरूपनवस्थलप्रपञ्चः]

माहेश्वरस्थलं वक्ष्ये यथोक्तं शम्भुना पुरा ।
[2]माहेश्वरप्रशंसाऽऽदौ लिङ्गनिष्ठा ततः परम् ॥४॥

644

पूर्वाश्रयनिरासश्च तथाऽद्वैतनिराकृतिः
आह्वानवर्जनं पश्चात् अष्टमूर्तिनिराकृतिः ॥५॥

645

सर्वगत्वनिरासश्च शिवत्वं विश्वभक्तयोः ॥[3]
एवं नवविधं प्रोक्तं माहेश्वरमहास्थलम् ॥६॥

---

भक्तेः शिवभक्तेः समुचितोत्कर्षः वैराग्यगौरवात् वैराग्य-महत्त्वात् यदा काले भवेत् तदा तस्मिन् काले स्थिरविवेकवान् स्थिरीभूतः नित्यानित्यवस्तुविवेकवान् शिवभक्त माहेश्वरः इति प्रोक्तः इत्यर्थः ॥३॥

ननु अस्यापि स्थलभेदाः सन्ति किम् ? इत्यत्र[1]—तद्भेदमुपदिशति

पुरा पूर्वकाले शिवेन यथोक्तं तथा माहेश्वरस्थलभेदं वक्ष्ये। शृणु इति शेषः ॥६॥

१. आदौ, माहेश्वरप्रशंसास्थलम्
२. ततः परं तदनन्तरं, लिङ्गनिष्ठास्थलम्

---

[1] इत्याशङ्कां परिहर्तुमित्यर्थः ।
[2] एतदादीनि स्थलानां नामानि ।
[3] शिवभक्तयोः (क)

646

आदितः क्रमशो वक्ष्ये स्थलभेदस्य लक्षणम् ।
समाहितेन मनसा श्रूयतां भवता मुने । ॥७॥

---

३. तदनन्तरं, पूर्वाश्रयनिरसनस्थलम्
४. तथा तदनन्तरं, अद्वैतनिरसनस्थलम्
५. पश्चात्, आह्वाननिरसनस्थलम्
६. अनन्तरं, अष्टमूर्तिनिरसनस्थलम्
७. अनन्तरं, सर्वगत्वनिरासस्थलम्
८. अनतरं शिवजगन्मयस्थलम्
९. अथ, भक्तदेहिकलिङ्गस्थलम्

एवं माहेश्वरमहास्थलं नवविधं नवप्रकारवत् इति प्रोक्तं कथितमित्यर्थः ॥

अत्र पुरा शम्भुना प्रोक्तं यथा तथा वक्ष्ये इति । अनेन उक्तं वक्ष्यमाणं च सर्वं न स्वकपोलकल्पितमिति सूचितम् ॥

अत्र—अष्टमूर्तित्वनिरसनानन्तरं आह्वाननिरसनं वक्तुमुचितमिति केषांचिदाशयः परास्तः । [1]शिवोक्तक्रमविरोधात् इति, तथापि—शिवस्य व्यापकत्वात् आह्वानं न सम्भवतीति नोक्तम्, किन्तु—स्वेष्टलिङ्गे प्रतिपत्ति विरोधात्[2] पुनराह्वानं न सम्भवतीति कथितत्वात् न शङ्कावकाशः ॥

अथ उद्देशक्रमेण तदवान्तरस्थलानां लक्षणं वक्ष्ये—श्रूयतामित्याह-स्पष्टम् ॥७॥

---

[1] शैवागमोक्तक्रमविरोधात् इत्यर्थः ।
[2] तद्रूपताप्रतिपत्तिविरोधादितियावत् ।

माहेश्वरस्थले-

## (16) माहेश्वरप्रशंसास्थलम् (2-1)

——०— —

647 [तत्र माहेश्वरप्रशंसास्थलनिरूपणम्]

विश्वस्मादधिको रुद्रः विश्वानुग्रहकारकः ।
इति यस्य स्थिरा बुद्धिः स वै माहेश्वरः स्मृतः ॥८॥

---

अत्र-

"विश्वाधिको रुद्रो महर्षिः हिरण्यगर्भं जनयामास पूर्वम् ।[1]
स नो बुद्ध्या शुभया संयुनक्ति ॥"[2]

इति श्वेताश्वतरादिश्रुत्यनुसारेण सप्तभिः सूत्रैः महेश्वरप्रशंसापूर्वकं माहेश्वर-स्वरूपं प्रपञ्चेन प्रकाशयति —

समस्तदेवादिविश्वानुग्राहकः रुद्रः—

"एक एव रुद्रो न द्वितीयाय तस्थे"

इति श्रुतिप्रसिद्धः रुद्रः, विश्वस्मात् "

"विश्वं नारायणं हरिम्"

इति श्रुतिप्रसिद्धविश्वरूपनारायणात् अधिकः इति यस्य बुद्धिः दृढा, स वै माहेश्वरः इति स्मृतः इत्यर्थः ॥८॥

— ——

[1] हिरण्यगर्भं पश्यत जायमानं इति–तै. उ. पाठः ।
[2] संयुनक्तु (ख)

648 [माहेश्वरस्वरूपम् ]

[1]ब्रह्माद्यैर्मलिनप्रायैः निर्मले परमेश्वरे ।
साम्योक्ति यो न सहते स वै माहेश्वराभिधः ॥९॥

---

अथ—"न तत्समश्चाभ्यधिकश्च दृश्यते"
इति श्रुत्यर्थमनुसरन् माहेश्वरस्वरूपमाह—

"ब्रह्मविष्णुरुद्रेन्द्रास्ते[2] सम्प्रसूयन्ते"

इति श्रुतेः ब्रह्मादीनां जननमरणपरिपीडितत्वेन समलत्वात्—

"न कारणम्"

इति श्रुतेः, एतत्कारणीभूतशिवस्य अजातत्वेन निर्मलत्वात्,

"कारणं तु ध्येयः"

"सर्वेश्वरश्च शम्भुः आकाशमध्ये"

इति अग्रे[3] श्रूयमाणत्वात्, तैः सह साम्योक्तिं यो न सहते सः माहेश्वराख्यः इत्यर्थः ॥९॥

649

अथ

"ईशानः सर्वविद्यानां ईश्वरः सर्वभूतानां ब्रह्माधिपतिः
ब्रह्मणोऽधिपतिः ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥"[4]

---

[1] अयं श्लोकः 'मात्वारुद्र' इति ऋगर्थं, 'खद्योतो यदि चण्डभानुसदृशः' इति ब्रह्मगीतार्थं, 'यदास्यापानयोः' इति सूतगीतार्थं च प्रकाशयति इति (क)

[2] अत्रत्यं रुद्रपदं न त्रिमूर्त्युत्तीर्णशिवप्रतिपादकमिति भावः ।

[3] तस्मिन्नेव प्रमाणग्रन्थे इति शेषः ।

[4] इयं च नारायणोपनिषदेव ।

650 [माहेश्वरविशेषलक्षणम् ]

ईश्वरः सर्वभूतानां ब्रह्मादीनां महानिति ।
बुद्धियोगात् तदासक्तः भक्तो माहेश्वरः स्मृतः ॥१०॥

651

ब्रह्मादिदेवताजालं मोहितं मायया सदा ।
अशक्तं मुक्तिदाने तु क्षयातिशयसंयुतम् ॥११॥
अनादिमुक्तो भगवान् एक एव महेश्वरः ।
मुक्तिदश्चेति यो वेद स वै माहेश्वरः स्मृतः ॥१२॥

---

इति ईशानमन्त्रार्थं,

"ईश्वरः सर्वभूतानां[1] हृद्देशेऽर्जुन ! तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥
तमेव शरणं गच्छ सर्वभावेन भारत !"

इति भगवद्गीतार्थं च अनुस्मरन् माहेश्वरस्वरूपं प्रकाशयति—

[2]ब्रह्मादीनां चतुर्मुखप्रभृतीनां सर्वभूताना समस्तपशुप्राणिनां ईश्वरः प्रेरकीभूतपरमेश्वरः एक एव महान् श्रेष्ठः इति बुद्धियोगात्, तदासक्तः महेश्वरासक्तः भक्तः शिवभक्तः माहेश्वरः इति स्मृतः इत्यर्थः ॥१०॥

अथ शिव एव मुक्तिदः[3] इति यो विजानाति सः माहेश्वरः इति सूत्रद्वयेन कथयति—

---

1 पशुस्थानीयानां भूतानां इति व्याख्या ।

2 श्रेष्ठ्यनिर्णयापेक्षया मुक्तिप्रदानार्हताया एव अतिमुख्यत्वमभिप्रेत्याह—ब्रह्मादीति इति भावः ।

3 नाशोन्मुखत्वमेव शिवेतरेषु मुख्या न्यूनतेति भावः ।

652 [वीरमाहेश्वरस्वरूपम्]

क्षयातिशयसंयुक्ताः ब्रह्मविष्ण्वादिसम्पदः ।
तृणवन्मन्यते युक्त्या वीरमाहेश्वरः स्मृतः ॥१३॥

653

शब्दस्पर्शादिसम्पन्ने सुखलेशे तु निःस्पृहः ।
शिवानन्दे समुत्कण्ठः वीरमाहेश्वरः स्मृतः ॥१४॥

---

क्षयातिशयसंयुक्तं जननमरणातिशयेन संयुक्तं ब्रह्मविष्ण्वादिदेवतानीकं निरन्तं मायया परमेश्वरस्वातन्त्र्यापरपर्यायमायाशक्त्या मोहितं अन्धीकृतं सत्, मुक्तिदाने तु परापरमुक्तिप्रदाने तु अशक्तं असमर्थम् ।

अनादिमुक्तः नित्यमुक्तः भगवान् षड्गुणैश्वर्यसम्पन्नः महेश्वरः—"तत् परं ब्रह्म, स एकः, स एको रुद्रः, स ईशानः स भगवान् स महेश्वरः स महादेव."

इति अथर्वशिरःप्रसिद्धः परमेश्वरः एक एव मुक्तिदश्चेति परापरमुक्तिप्रदः इति यो वेद जानाति स वै माहेश्वरः स्मृतः इत्यर्थः ॥१३॥

अथ ब्रह्मादिमहैश्वर्यं तृणवत् ज्ञात्वा शिवानन्दतत्परः वीरमाहेश्वरः इत्याह[1]—सूत्रद्वयेन—

विनाशातिशयेन संयुक्ताः ब्रह्मविष्ण्वादिसम्पदः, वीरमाहेश्वरः शिवभक्तः युक्त्या अनित्यमिति बुद्ध्या[2] तृणवत् सदा मनुते जानाति ।

---

[1] केवलमाहेश्वरवीरमाहेश्वरयोः भेदमाहेत्यर्थः ।

[2] केवलं न प्रमाणशास्त्रबलेन, किन्तु अनुभवसिद्धदृष्टान्तेन, नित्यसंबद्धहेतुबलेन चेत्यर्थः ।

654 [वीरमाहेश्वराचारभेदाः]

परस्त्रीसङ्गनिर्मुक्तः परद्रव्यपराङ्मुखः ।
शिवार्थकार्यसम्पन्नः शिवागमपरायणः ॥१५॥

655

शिवस्तुतिरसास्वादमोदमानमनाः शुचिः ।
शिवोत्कर्षप्रमाणानां सम्पादनसमुद्यतः ॥१६॥

656

निर्ममो निरहङ्कारः निरस्तक्लेशपञ्जरः ।
अस्पृष्टमदसम्बन्धः मात्सर्यावेशवर्जितः ॥१७॥

657

निरस्तमदनोन्मेषः निर्धूतक्रोधविप्लवः ।
सदा सन्तुष्टहृदयः सर्वप्राणिहिते रतः ॥१८॥

---

तस्मात् शब्दस्पर्शादिसम्पन्ने सोपाधिके सुखलेशे तुच्छसुखे निस्पृहः सन् शिवानन्दे नित्यसुखे समुत्कण्ठः[1] प्रीतिमान् वीरमाहेश्वरः भवेत् स्यात् इत्यर्थः ॥१४॥

अथ तदाचारभेदस्थितिं च षड्भिः सूत्रैः प्रतिपादयति—

---

1 समुत्कण्ठाः—तत्संबन्धं विना जीवितुमपि अशक्यः ।

658

निवारणसमुद्योगी शिवकार्यविरोधिनाम् ।
सहचारी सदाकालं शिवोत्कर्षाभिधायिभिः ॥१९॥

659

शिवापकर्ष[1] सम्प्राप्तौ प्राणत्यागेऽप्यशङ्कितः ।
शिवैकनिष्ठः सर्वात्मा वीरमाहेश्वरो भवेत् ॥२०॥

(16) इति माहेश्वरप्रशंसास्थलम् (2-1)

निरस्तक्लेशपञ्जरः निवारिताविद्यादिक्लेशसमूहवान् निर्धूतक्रोधविप्लवः निवारितक्रोधबाधवान् शिवैकनिष्ठः शिवलिङ्गैकनिष्ठः सर्वात्मा पूर्णाहम्भाववान् निरहङ्कारः परिच्छिन्नशरीराद्यहम्भावशून्यः ॥ शिष्टं स्पष्टम् ॥१९॥

एवमादिविशेषणविशिष्टः श्रीवीरशैवः माहेश्वरः स्यात् इत्यर्थः ॥२०॥

अत्र— "निरस्तक्लेशपञ्चकः" इति पाठान्तरम् ॥[2]

[1] अपकर्ष.=निन्दा, सम्प्राप्तिः=श्रवणादिः ।
[2] इदं वाक्यं 'घ' पुस्तके नास्ति ।

## (17) माहेश्वरस्थले लिङ्गनिष्ठास्थलम् (2-2)

---

660 [लिङ्गनिष्ठास्थलनिरूपणम्]

अस्य माहेश्वरस्योक्तं लिङ्गनिष्ठामहास्थलम् ।
प्राणात्ययेऽपि सम्पन्ने यदत्याज्यं विधीयते ॥२१॥

661 [लिङ्गपूजायाः अत्याज्यता]

[1]अपगच्छतु सर्वस्वं शिरश्छेदनमस्तु वा ।
माहेश्वरो न मुञ्चेत लिङ्गपूजामहाव्रतम् ॥२२॥

---

अथ अनेन माहेश्वरेण विधीयमानां लिङ्गनिष्ठां नवभिः सूत्रैः प्रतिपादयति—

यत् यल्लिङ्गनिष्ठास्थलं प्राणात्यये सम्पन्नेऽपि प्राणसङ्कटे प्राप्ते सत्यपि अत्याज्यं त्यक्तुमयोग्यं विधीयते, तत् लिङ्गनिष्ठामहास्थलं अस्य माहेश्वरस्य शिवलिङ्गैकतत्परस्य माहेश्वरस्य उक्तं कथितमित्यर्थः ॥२१॥

कीदृशोऽयं प्राणसङ्कट इत्यत्र—

"भवेत् प्राणपरित्यागः छेदनं शिरसोऽपि वा ।
न त्वनभ्यर्च्य भुञ्जीयात् भगवन्तं त्रियम्बकम् ॥

इति शिवधर्मवचनानुसारेण कथयति—

स्पष्टम् ॥२२॥

---

1 शिवाधिक्यासहिष्णुभिः कृतस्य नाशादेः विषयो भवतु इत्यर्थः ।

662

लिङ्गपूजामकृत्वा तु ये न भुञ्जन्ति मानवाः ।
तेषां महात्मनां हस्ते मोक्षलक्ष्मीरुपस्थिता ॥२३॥

663

किमन्यैः धर्मकलिलैः कीकषार्थप्रदायिभिः ।
साक्षान्मोक्षप्रदश्शम्भोः धर्मो लिङ्गार्चनात्मकः ॥२४॥

664

अर्पितेनान्नपानेन लिङ्गे नियमपूजिते ।
ये देहवृत्तिं कुर्वन्ति महामाहेश्वरा हि ते ॥२५॥

---

अथ ये शिवपूजाव्यतिरेकेण[1] न भुञ्जन्ति, तेषां हस्ते करतलामलकवत् मोक्षलक्ष्मीः उल्लसतीत्याह —

मोक्षलक्ष्मीः[2] उपस्थिता वर्तते इत्यर्थः । इदं लिङ्गनिष्ठायाः फलमित्युक्तं भवति ॥२३॥

अथ इममर्थमेव सूत्रद्वयेन विशेषयति —

शम्भोः शिवस्य लिङ्गार्चनात्मको धर्मः साक्षात् मोक्षप्रदः । तस्मात् अन्यैः शिवलिङ्गपूजातिरिक्तैः [3]कीकषार्थप्रदायिभिः कुत्सितार्थदायिभिः धर्मकलिलैः क्षुद्रधर्मैः किम्-किं प्रयोजनमित्यर्थः ॥२४॥

अथ लिङ्गार्पितान्नपानप्राशनमहत्त्वमाह —

हि प्रसिद्धम् । शिष्टं स्पष्टम् ॥२५॥

---

[1] शिवपूजां अकृत्वेत्यर्थः ।

[2] नियतं बन्धविमोचनमित्यर्थः ।

[3] कीकषा = केवलैहिकसुखसन्तोषप्रदत्वेन परमार्थविघातकाः इत्यर्थः ।

665 [शिवलिङ्गनिष्ठानां शिवरूपत्वम् ]

चिन्मये शङ्करे लिङ्गे स्थिरं येषां मनस्सदा ।
विमुक्तेतरसर्वार्थं ते शिवाः नात्र संशयः ॥२६॥

666

लिङ्गे यस्य मनो लीनं लिङ्गस्तुतिपरा च वाक् ।
लिङ्गार्चनपरौ हस्तौ स रुद्रो नात्र संशयः ॥२७॥

---

अथ —

"यद्धि मनसा ध्यायति, तद्वाचा वदति, तत्कर्मणा करोति"[1]

इति श्रुत्यनुसारेण त्रिकरणपूर्वकं शिवलिङ्गनिष्ठाः शिवाः एवेत्याह—

येषां मनः विमुक्तेतरसर्वार्थं त्यक्तस्वर्गादितुच्छफलाभिलाषं सत् , चिद्रूपे शिवलिङ्गे सदा स्थितम् , ते शिवाः भूरुद्राः । अत्र अस्मिन् विषये न संशयः इत्यर्थः ॥२६॥

नन्विदं चिद्रूपलिङ्गे मनोमात्रविश्रान्तिरुक्ता ? इत्याशङ्क्य[2] सूत्रान्तरेण करणत्रयविश्रान्तिं दर्शयति—॥२७॥

667 [लिङ्गनिष्ठानां कर्माचरणावश्यकत्वाभावः]

स्पष्टम् ॥

एवं लिङ्गनिष्ठस्य अग्निहोत्रादिकर्मणा प्रयोजनं नास्तीत्याह—

---

1 इदमेव करणत्रयसारूप्यं प्रामाणिकलक्षणमित्यर्थः ।

2 मनस इव जीवने वाक्काययोरपि विश्रान्तेः = श्रमपरिहारस्यावश्यकत्वात् ।

लिङ्गनिष्ठस्य किं तस्य कर्मणा स्वर्गहेतुना ।
नित्यानन्दशिवप्राप्तिः यस्य शास्त्रेषु निश्चिता ॥२८॥

668 [लिङ्गनिष्ठमहिमा]

लिङ्गनिष्ठापरं शान्तं[2] भूतिरुद्राक्षसंयुतम् ।[3]
प्रशंसन्ति सदाकालं ब्रह्माद्या देवता मुदा ॥२९॥

---

(17) इति लिङ्गनिष्ठास्थलम् (2-2)

---

यस्य लिङ्गनिष्ठस्य नित्यानन्दशिवपदप्राप्तिः शास्त्रेषु वेदागमपुराणेषु निश्चितेति, तस्य स्वर्गहेतुना[1] अग्निहोत्रादिकर्मणा किम् किं प्रयोजनम्? न किञ्चित् प्रयोजनमित्यर्थः ॥२८॥

अथ अस्य महत्त्वं प्रतिपादयति—

स्पष्टम् ॥२९॥

---

[1] स्वर्गपदेन मुक्त्यतिरिक्तानि सर्वाण्यपि ऐहिकफलानि संगृहीतानि ।

[2] इदं अन्तर्लक्षणम् ।

[3] इदं बहिर्लक्षणम् ।

## (18) माहेश्वरस्थले पूर्वाश्रयनिरसनस्थलम् (2-3)

670 [स्वाचारविरोधिसर्वधर्मत्यागविधिः]

लिङ्गैकनिष्ठहृदयः सदा माहेश्वरो जनः ।
पूर्वाश्रयगतान्[3] धर्मान् त्यजेत् स्वाचाररोधकान् ॥१॥

671 [तादृशयोगिस्वरूपम् ]

स्वजातिकुलजान्[4] धर्मान् लिङ्गनिष्ठाविरोधिनः ।
त्यजन् माहेश्वरो ज्ञेयः पूर्वाश्रयनिरासकः ॥२॥

---

669 [पूर्वाश्रयनिरसनस्थलनिरूपणम् ]

अथ—

"गुरुसंस्कृतभावः[1] सन् गुरुनिर्मितदेहवान् ।[2]
विस्मृत्य पूर्वदुर्भावं तदधीनः समाचरेत् ॥"

इति योगजागमवचनानुसारेण तस्य लिङ्गनिष्ठस्य प्रातिकूल्येन प्राप्तपूर्वाश्रय-निरसनस्थलं सप्तभिः सूत्रैः प्रतिपादयति—

निरन्तरं शिवलिङ्गैकनिष्ठचित्तः वीरमाहेश्वरः स्वाचाररोधकान् स्वसमयाचार विरोधिनः पूर्वाश्रयनिष्ठान् धर्मान् प्राकृताचारान् त्यजेत् इत्यर्थः ॥१॥

तर्हि अयं कीदृशः ? इत्यत्राह—

लिङ्गनिष्ठाविरोधिनः लिङ्गनिष्ठाप्रतिकूलान् स्वजातिकुलजान्

---

1 गुरुणा सम्यक् परिष्कृतपरिशुद्धमनोधर्मवानित्यर्थः ।
2 शिष्यस्य गुरुणा द्वितीयं ज्ञानजन्मेति शास्त्रम् ।
3 लिङ्गग्रहणात् पूर्वं स्थितान् प्राकृतान् धर्मानित्यर्थः ।
4 सर्वजातीयानामपि लिङ्गस्वीकाराधिकारसत्त्वादेवमुक्तम् ।

672 [विरुद्धधर्मत्यागप्रयोजनम्]

शिवसंस्कारयोगेन विशुद्धानां महात्मनाम् ।
किं पूर्वकाङ्क्षिकैर्धर्मैः [1]प्राकृतानां हि ते मताः ॥३॥

---

ब्राह्मणत्वादिजाति-कुलालादिकुलप्राप्तान् धर्मान् जातप्रेताशौचादीन् त्यजन् वीरमाहेश्वरः पूर्वाश्रयनिरासकः इति ज्ञातुं योग्यः इत्यर्थः ॥२॥

673

ननु पूर्वाश्रयप्राप्तनित्यनैमित्तिककर्मपरित्यागे प्रत्यवायश्रवणात् कथं तद्धर्माः त्यजनीयाः ? इत्यत्राह—

पूर्वोक्तदानक्षपणलक्षणदीक्षारूपशिवसंस्कारसम्बन्धेन लिङ्गनिष्ठया च विधूतवृत्तवर्तिष्यमाणसकलकल्मषत्वेन निर्मलानां शिवशरणानां पूर्वाश्रयप्राप्तनित्यनैमित्तिकादिकर्मभिः किं किं प्रयोजनम् ? न किञ्चित् प्रयोजनमित्यर्थः ।

ननु प्रत्यवायनिवृत्तिरेव प्रयोजनम् इति चेत् — न ।

"नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥

इति भगवतैव भाषितत्वात् ॥

अस्यायमर्थः —

"अत्याश्रमिभ्यः परमं पवित्रम्"

---

[1] प्राकृतानां—केवलप्रकृतिपोषकाणां आत्मधर्मविमुखानामित्यर्थः ।

[2] अभिक्रमः=परम्पराप्राप्तो धर्मः । स्वीकृतो धर्मो वा ।

675

शिवसंस्कारयोगेन शिवधर्मानुषङ्गिणाम् ।
[2]प्राकृतानां न धर्मेषु प्रवृत्तिरुपपद्यते ॥४॥

---

इति श्रुतिसिद्धान्वितवर्णाश्रमे इह अभिक्रमः आत्माभिमुखीकरणप्रवीण-गुरुकारुण्यप्राप्तभूतिधारणाद्याचारक्रमः, तस्य नाशः नास्ति, विस्मृति-शून्यत्वेन तदेकनिष्ठया सदा विधीयमानत्वेन विच्छेदो नास्तीत्यर्थः ॥३॥

674 [तस्य कर्मलोपनिमित्तदोषाभावः]

नन्वेवं चेत् नित्यनैमित्तिकर्मलोपात् प्रत्यवायः स्यात् इत्यत्राह—

"प्र यवायो न विद्यते"

इति । कुतः इत्यत्राह—अस्य धर्मस्य शिवानुसन्धानाङ्गभूतभूतिधारणादि-धर्मस्य स्वल्पमपि लेशमात्रमपि महतो भयात् महापातकादिभयात् त्रायते इति । यथा पूर्वाश्रमधर्मपरित्यागे संन्यासिनां प्रत्यवायो नास्ति, तथा शिवाश्रयनिष्ठानां पूर्वाश्रयधर्मपरित्यागे प्रत्यवायो नास्तीति भावः । ते पूर्वाश्रयधर्माः प्राकृतानां हि मायासम्बन्धिनामेव मताः प्रोक्ताः इति हि प्रसिद्धम् । तस्मात् ॥[1]

नोपपद्यते न जायते इत्यर्थः ॥४॥

---

[1] अध्यात्ममार्गानुसारेण गन्तृषु आस्तिकेषु इति यावत् ।
[2] प्राकृतानां धर्मेषु इत्यन्वयः ।

676 [मानुषेषु द्वैविध्यम्]

विशुद्धाः प्राकृताश्चेति द्विविधा मानुषाः स्मृताः ।
शिवसंस्कारिणः शुद्धाः प्राकृता इतरे मताः ॥५॥

677 [धर्मद्वैविध्यम्]

वर्णाश्रमादिधर्माणां व्यवस्था हि द्विधा मता ।
एका शिवेन निर्दिष्टा ब्रह्मणा कथिता परा ॥६॥

678 [तयोः त्याज्यग्राह्यत्वनिर्णयः]

शिवोक्तधर्मनिष्ठा तु शिवाश्रमनिषेविणाम् ।
शिवसंस्कारहीनानां धर्मः पैतामहः[1] स्मृतः ॥७॥

---

ननु मर्त्येषु द्वैविध्यं कथम् ?[2] इत्यत्राह—

स्पष्टम् ॥५॥

ननु वर्णाश्रमधर्मेषु द्वैविध्यं न दृश्यते इत्यत्राह—

स्पष्टम् ॥६॥

तर्हि को धर्मः कस्य ? इत्यत्राह—

स्पष्टम् ॥७॥

(18) इति पूर्वाश्रयनिरसनस्थलम् (2–3)

—o—

---

1 ब्रह्मणा स्वसृष्टमानवान् सर्वान् प्रत्यपि साधारण्येन निर्दिष्टः इत्यर्थः ।
2 केन प्रकारेणेत्यर्थः ।

## (19) माहेश्वरस्थले सर्वाद्वैतनिरसनस्थलम् (2-4)

679 [सर्वाद्वैतनिरसनस्थलनिरूपणम्]

पूज्यपूजकयोर्लिङ्गजीवयोर्भेदवर्जने ।
पूजाकर्माद्यसम्पत्तेः लिङ्गनिष्ठाविरोधनः ॥१॥

680

सर्वाद्वैतविचारस्य ज्ञानाभावे[1] व्यवस्थितेः ।
भवेन्माहेश्वरः कर्मी सर्वाद्वैतनिरासकः ॥२॥

---

अथ माहेश्वरः यथा लिङ्गनिष्ठाविरोधित्वात् पूर्वाश्रयनिरासकः, तथा लिङ्गनिष्ठाविरोधित्वात् सर्वाद्वैतनिरासकोऽपि भवेत्, इति तेन विधीयमानसर्वाद्वैतनिरसनस्थलं प्रतिपादयति—

पूज्यपूजकयोः शिवलिङ्गभक्तयोः भेदाभावे सति लिङ्गनिष्ठाविरोधात् पूजादिकर्मसम्पत्त्यभावात् सर्वाद्वैतविचारस्य व्यवस्थितेः वर्तनस्य ज्ञानाभावे ज्ञानस्य अनुपपन्नत्वे सति[2], कर्मा माहेश्वरः सर्वाद्वैतनिरासकः स्यात् ।

"यावदायुः त्रयो वन्द्याः वेदान्तो गुरुरीश्वरः"

इति वेदान्तवचनात् ।

"क्रियाद्वैतं न कर्तव्यम्"

---

[1] ज्ञानिभावे (क)
[2] अत्र अभावशब्दः प्रागभाववाचकः इति भावः ।

681 [द्वैतभावेन क्रियमाणपूजाविधिः]

प्रेरकं शङ्करं बुद्ध्वा प्रेर्यमात्मानमेव च ।
भेदात्तं पूजयेन्नित्यं न चाद्वैतपरो[1] भवेत् ॥३॥

682 [प्रकारान्तरेण द्वैतभावः]

पतिः साक्षान्महादेवः पशुरेष तदाश्रयः ।
अनयोः स्वामिभृत्यत्वं अभेदे कथमिष्यते ॥४॥

---

इति सिद्धान्तवचनाच्च लिङ्गनिष्ठो माहेश्वरः सर्वाद्वैतं न कुर्यात् इति भावः १-२॥

अथ भेदेन क्रियमाण पूजाप्रकारः कथम्? इत्यत्राह—

जीवानां धर्माधर्मगोचरीभूतबुद्धिवृत्तिप्रेरकः परमेश्वरः, तत्प्रेर्याः जीवाः इति बुद्ध्वा, एवंविधभेदात् तं परमेश्वरं नित्यं पूजयेत्, अद्वैतपरः न भवेत्, पूजाविरोधात् इति[2] ॥३॥

अथ [3]प्रकारान्तरेण भेदमुपपादयति—

महादेवः परमेश्वरः

"पतिं विश्वस्य"

इति श्रुतेः, पतिः जगत्पतिः तदाश्रय एष जीवः पशुः, अनयोः शिवजीवरूपपतिपश्वोः अभेदे भेदाभावे स्वामिभृत्यत्वं कथमिष्यते? इच्छाविषयी-

---

[1] न ज स्वद्वैतपरो–घ

[2] अद्वैतपरतायाः व्यावहारिकत्वानुपपत्तेः इति भावः ।

[3] व्यावहारिकतयेत्यर्थः ।

683 [भेदभावानुवृत्तिसीमा]

साक्षात्कृतं परं तत्त्वं यदा भवति बोधतः ।[2]
तदाऽद्वैतसमापत्तिः ज्ञानहीनस्य न क्वचित् ॥५॥

684 [कर्मिण अद्वैतभावानुपपत्तिः]

भेदस्य कर्महेतुत्वात् व्यवहारः प्रवर्तते ।
लिङ्ग जादिकर्मस्थः न चाद्वैतं समाचरेत् ॥६॥

---

क्रियते ? न कथञ्चिदपीति स्वामिभृत्यत्व[1]लक्षणभेदेनैव पूजनीयः इत्यर्थः ॥४॥

नन्वयं भेदभावः कियत्पर्यन्तमनुवर्तते ? इत्यत्राह—

बोधतः श्रुतिगुरुस्वानुभवबोधतः परं तत्त्वं परशिवब्रह्माख्यमहालिङ्ग-तत्त्वं यदा साक्षात्कृतं भवति, दशमदृष्टान्तेन स्वात्माभेदेन प्रत्यक्षीकृतं भवति, तदा अद्वैतसमापत्तिः अद्वैतस्फूर्तिः, ज्ञानहीनस्य श्रुतिगुरुस्वानुभव-रहितस्य केवलकर्मयुतस्य क्वचित् कदाचित् किञ्चिदपि न नास्तीत्यर्थः ॥४॥

ननु कर्मिणः कस्मात् नाद्वैतसिद्धिः ? इत्यत्राह—

भेदस्य व्यवहारः जीवेश्वरभेदव्यवहारः कर्महेतुत्वात् शिवपूजादि-क्रियाहेतुत्वेन प्रवर्तते, अतः शिवलिङ्गपूजाजपादिकर्मनिष्ठः अद्वैतं न

---

[1] लक्षणपदं तद्रूपपरम् ।
[2] पारमार्थिकज्ञानतः इत्यर्थः ।

685 [निगमनम्]

पूजादिव्यवहारः स्यात् भेदाश्रयतया सदा ।[3]
लिङ्गपूजापरस्तस्मात् नाद्वैते निरतो भवेत् ॥७॥

(19) इति अद्वैतनिरसनस्थलम् (2-4)

———

समाचरेत् ।[1] तस्मात् लिङ्गपूजादिकर्मनिष्ठस्य अद्वैतबोधाविर्भावो नास्तीत्यर्थः[2] ॥६॥

अथ उक्तार्थमुपसंहरति—

लिङ्गपूजानिष्ठः वीरमाहेश्वरः अद्वैते निरतः आसक्तः न भवेत् न स्यात् इत्यर्थः ॥७॥

———

[1] न भावयेत् इत्यर्थः ।

[2] सहजतया असिद्धस्य केवलसिद्धान्तभावनया आश्रयणं अयुक्तमिति भावः ।

[3] यतः—(ग)

## (20) वीरमाहेश्वरस्थले आह्वाननिरसनस्थलम् (2-5)

686 [आह्वाननिरसनस्थलनिरूपणम्]

लिङ्गार्चनपरः शुद्धः सर्वाद्वैतनिरासकः ।
स्वेष्टलिङ्गे शिवाकारे न तमावाहयेच्छिवम् ॥१॥

687 [आह्वानानुपपत्तिहेतुः]

यदा शिवकलायुक्तं[2] लिङ्गं दद्यान्महागुरुः ।
तदारभ्य शिवस्तत्र तिष्ठत्याह्वानमत्र किम् ॥२॥

---

अथ शिवलिङ्गपूजार्थं अद्वैतं निरस्य, द्वैताङ्गीकारवान् माहेश्वरः, शैव इव शिवलिङ्गे शिवं नावाहयेत् इति आह्वाननिरसनस्थलं कथयति—

लिङ्गार्चनपरः शिवलिङ्गपूजातत्परः सन् सर्वाद्वैतनिरासकः शुद्धः नित्यशुद्धवीरमाहेश्वरः शिवाकारे शिवस्वरूपवति स्वेष्टलिङ्गे तं प्रसिद्धं शिवं नावाहयेत् इत्यर्थः[1] ॥१॥

अथ कस्मात् ? इत्यत्र कारणमाह—

अत्र शिवलिङ्गे आह्वानं किं प्रयोजनम् ? न किञ्चित् प्रयोजनमित्यर्थः । शिष्टं स्पष्टम् ॥२॥

---

[1] शिवस्य नित्यसंनिहितत्वादिति भावः ।

[2] कलाकर्षणेन शिवमयं कृत्वा दद्यात् इत्यर्थः ।

688

ससंस्कारेषु लिङ्गेषु सदा सन्निहितः शिवः ।
तत्राह्वानं न कर्तव्यं प्रतिपत्तिविरोधकम् ॥३॥

689 [तन्निमित्तविसर्जनस्याप्यभावः]

नाह्वानं न विसर्गं च[2] स्वेष्टलिङ्गे तु कारयेत् ।
लिङ्गनिष्ठापरो नित्यं इति शास्त्रस्य निश्चयः ॥४॥

(20) इति आह्वाननिरसनस्थलम् (2-5)

---

पुनश्च कारणान्तरमाह—

पुनराह्वानं पूर्वाह्वानविरोधि । [1]तद्विसर्जनानन्तरभावित्वात् इति भावः ॥३॥

अथ आह्वानासम्भवादेव विसर्जनं च नास्तीत्याह—

स्पष्टम् ॥४॥

---

1 तत्=तस्य पुनराह्वानस्येत्यर्थः ।

2 विसर्गपदं विसर्जनपरम् ।

## (21) माहेश्वरस्थले अष्टमूर्तिनिरसनस्थलम् (2-6)

690 [मूर्तिनिरसनस्थलनिरूपणम्]

यथाऽऽत्मशिवयोरैक्यं न मतं कर्मसङ्गिनः ।
तथा शिवात् पृथिव्यादेः अद्वैतमपि नेष्यते ॥१॥

691 [शिवे पृथिव्यादिभूताभेदाभावनिरूपणम्]

पृथिव्याद्यष्टमूर्तित्वं ईश्वरस्य प्रकीर्तितम् ।
तदधिष्ठातृभावेन न साक्षादेकभावतः ॥२॥

---

अथ शिवलिङ्गमेव शिवः इत्यभिप्रायेण आह्वानं निराकृत्य 'पृथिव्याद्यष्टमूर्तित्वं च न सम्भवति भेदात्' इति तेन माहेश्वरेण विधीयमानाष्टमूर्तिनिरसनस्थलं प्रदर्शयति—

कर्मसङ्गिनः शिवपूजादिकर्मनिष्ठस्य माहेश्वरस्य आत्मशिवयोः जीवलिङ्गयोः ऐक्यं एकत्वं यथा न मतं न संमतम्, पूज्यपूजकविवेकासम्भवात्, तथा शिवात् भूम्यादेरद्वैतं अभेदोऽपि नेष्यते, भूम्याद्यष्टमूर्तिषु आत्मनोऽपि प्रविष्टत्वात्[1] इति भावः ॥१॥

अथ शिवस्य पृथिव्यादेरभेदोऽपि न सम्भवतीत्याह—

---

[1] स्वस्मिन् स्वप्रवेशोक्तेः बाधितत्वात् ।

"यस्य पृथिवी शरीरम्"

इत्यारभ्य,

"यस्यात्मा शरीरम्"

इत्यन्तबृहदारण्यकश्रुतिप्रोक्ताष्टमूर्तित्वं तदधितिष्ठातृभावेन —पृथिव्याद्यष्टमूर्तित्वं पृथिव्याद्यष्टमूर्त्यधिष्ठातृत्वेन प्रकीर्तितम् ।

"विश्वं महेश्वर! भवानधितिष्ठतीति ।
[1]विश्वात्मतामुपचरन्ति यदागमास्ते ॥"

इत्यभियुक्तोक्तेः ॥

यथा-स्तनस्तन्ययोर्भेदेऽपि "स्तनं पिबति" इति व्यवहारः, तथा अभेदव्यवहारः औपचारिकः ।[2] साक्षादेकभावतो न ।[3]

"द्वयमुष्णं द्वयं शीतं अनुष्णाशीतलं द्वयम् ।
द्वयमस्पर्शमित्यष्टौ पान्तु वो हरमूर्तयः ॥"

इति तासां परस्परभिन्नत्वात् , शरीरशरीरिभावस्य च भेदघटितत्वादिति ॥२॥

692 शिवभूतयोरैक्याभावेहे त्वन्तरम् ]

अथ कार्यकारणभावाच्च तयोरैक्यं न सम्भवतीत्याह—

---

[1] विश्वस्वरूपतामित्यर्थः ।

[2] लाक्षणिकः इत्यर्थः ।

[3] ऐक्यं नेत्यर्थः ।

पृथ्व्यादिकमिदं सर्वं कार्यं कर्ता महेश्वरः ।
नैतत्साक्षान्महेशोऽयं कुलालो मृत्तिका यथा ॥३॥

693 [तयोरात्यन्तिकभेदस्यापि निरसनम् ]

पृथिव्याद्यात्मपर्यन्तप्रपञ्चो ह्यष्टधा मतः ।
तनुरीशस्य चात्माऽयं सर्वतत्त्वनियामकः[1] ॥४॥

---

"ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते, सर्वाणि चेन्द्रियाणि ।
सह भूतैर्न कारणम्, कारणं तु ध्येयः शम्भुराकाशमध्ये" ॥

इति श्रुतेः पृथिव्यादेः कार्यकोटिप्रविष्टत्वात् शिवस्य कारणरूपत्वात् । एवं च मृच्छब्दोपलक्षितघटादेः कुलालस्य च यथा ऐक्यं न सम्भवति, तथा कार्यरूपभूम्यादेः कारणात्मनः शिवस्य च अभेदो न सम्भवतीत्यर्थः ॥३॥

ननु घटकुलालयोरिव ईश्वरस्य भूम्यादेश्च आत्यन्तिकभेदः किम्? इत्यत्राह—

पृथिव्यप्तेजोवाय्वाकाशचन्द्रसूर्याग्निहोत्रिरूपेण आत्मपर्यन्तं अष्टधा-स्थितः प्रपञ्चः सर्वोऽपि ईशस्य शरीरम्, अयमीशः सर्वतत्त्वनियामकः सर्वतत्त्वात्मकशरीरप्रेरकीभूतः आत्मा शरीरी इत्यर्थः । एवं च - घटकुलालयोः देहदेहिभावशून्यत्वात् ततो विशेषः इति भावः ॥४॥

---

[1] शरीरशरीरिभावस्थले घटपटवत् आत्यन्तिकभेदाभावादिति भावः ।

694 [तयोरात्यन्तिकाभेदस्यापि निरसनम् ]

शरीरभूतादेतस्मात् प्रपञ्चात् परमेष्ठिनः ।
आत्मभूतस्य देवस्य नाभेदो न पृथक्स्थितिः[1] ॥५॥

695 [तयोर्भेदप्रकारः]

अचेतनत्वात् पृथ्व्यादेः अज्ञत्वादात्मनस्तथा ।
सर्वज्ञस्य महेशस्य नैकरूपत्वमिष्यते ॥६॥

---

तर्हि अभेदः किम्? इत्यत्राह—

परमेष्ठिनः शिवस्य शरीरभूतात् एतस्मात् 'इदम्' इत्यङ्गुलिनिर्देश्यत्वेन प्रतीयमानात् प्रपञ्चात् अभेद एवेत्यर्थः । तथापि आत्मभूतस्य विश्वशरीरिणः देवस्य न पृथक्स्थितिः घटपटयोरिव परस्परबाह्यत्वेन स्थितिः नास्ति, शिवस्य व्यापकत्वात् इति भावः ॥५॥

तर्हि भेदः कथम्? इत्यत्राह—

भूम्यादेः जडत्वात् आत्मनः अग्निहोत्रिणो यजमानस्य अज्ञत्वात् किञ्चिज्ज्ञत्वादित्यर्थः[2], महेशस्य चराचरलक्षणविश्वशरीरस्य शिवस्य सर्वज्ञत्वात् इत्यर्थः । एकरूपत्वं एकरूपं शरीरशरीरिणोरैक्यं नेष्यते नेच्छाविषयीक्रियते । तस्मात् भेद एवेत्यर्थः ॥६॥

---

[1] भेदसहिष्णुः अभेदः एतादृशः इति भावः ।
[2] अत्र नञः ईषदर्थकत्वात् ।

696 [एतादृशभेदज्ञानिस्वरूपम्]

इति यश्चिन्तयेन्नित्यं पृथ्व्यादेरष्टमूर्तितः ।
विलक्षणं महादेवं सोऽष्टमूर्तिनिरासकः[2] ॥७॥

—— ——

(21) इति अष्टमूर्तिनिरसनस्थलम् (2-6)

(22) माहेश्वरस्थले सर्वगतत्वनिरसनस्थलम् (2-7)

—— ——

697 [सर्वगतत्वनिरसनस्थलनिरूपणम्]

सर्वगत्वे महेशस्य सर्वत्राराधनं भवेत् ।
न लिङ्गमात्रे तन्निष्ठः न शिवं सर्वगं भवेत् ॥१॥

---

नन्वेवं भेदज्ञानवान् कोऽसौ ? इत्यत्राह....

स्पष्टम् ॥७॥

अथ महेश्वरस्य लिङ्गनिष्ठाविरोधिसर्वगतत्वनिरसनस्थलं प्रकाशयति—

महेश्वरस्य सर्वगत्वे सर्वत्राराधनं स्यात्, लिङ्गमात्रे न स्यात्।

---

[1] धर्मधर्मिणोः अभेदभावनायाः एव प्रायशः सर्वसहजत्वादिति भावः ।

698 [लिङ्गविशेषसांनिध्यनिरूपणम् ]

सर्वगोऽपि स्थितश्शम्भुः स्वाधारे हि विशेषतः ।
तस्मादन्यत्र विमुखः स्वेष्टलिङ्गे यजेच्छिवम् ॥२॥

699 [शिवस्य सर्वगतत्वलिङ्गविशेषगतत्वयोः अविरोधः]

शिवः सर्वगतश्चापि स्वाधारे व्यज्यते भृशम् ।
शमीगर्भे यथा वह्निः[3] विशेषेण विभाव्यते ॥३॥

---

तस्मात् लिङ्गनिष्ठः शिवं सर्वगतं न स्मरेत्[1] इत्यर्थः ॥१॥

ननु शिवस्य सर्वगतत्वाभावे परिच्छिन्नत्वेन लोके भक्तबाहुल्यात् तत्तच्छरीरसङ्गतेष्टलिङ्गनां च बाहुल्यात् एकत्र विश्रमिताशेष[2]शरीरभारस्य अन्यत्रावस्थानासम्भवात् कथं तत्र स्थितिः सम्भवति ? इत्यत्राह —

शम्भुः सर्वगोऽपि व्यापकोऽपि स्वाधारे स्वाश्रयीभूतलिङ्गे विशेषतः अतिशयेन स्थितो भवति । तस्मादन्यत्र द्विमुखस्सन् स्वेष्टलिङ्गं शिवं पूजयेत् इत्यर्थः ॥२॥

ननु सर्वगतः शिवः तत्रतत्र लिङ्गे कथं विशेषेण तिष्ठति ? इत्यत्राह —

वृक्षस्थितो वह्निः शमीवृक्षे यथा विशेषेण भासते, शिवः सर्वगतोऽपि

---

[1] न भावयेदित्यर्थः । स्मृतेः अनुभवपूर्वकत्वात् तस्य पूर्वं असंभवात् ।
[2] अशेषेति पूर्वपक्षाशयोक्तम् ।
[3] अचरे = स्थावरे लिङ्गे इत्यन्वयः ।

700 [लिङ्गे विशेषस्थितिनिमित्तम्]

सर्वगत्वं महेशस्य सर्वशास्त्रविनिश्चितम् ।
तथाप्याश्रयलिङ्गादौ पूजार्थमधिका स्थितिः[1] ॥

नित्यं भासि तदीयस्त्वं या ते रुद्र शिवा तनूः ।
अघोराऽपापकाशीति[2] श्रुतिराह सनातनी ॥

---

स्वाधारे लिङ्गे भृशं अतिशयेन व्यज्यते प्रकाशते इत्यर्थः ॥

ननु लिङ्गे किमर्थं विशेषेण तिष्ठति ? इत्यत्राह—

अत्र आदिशब्देन गुरुचरमूर्ती लक्ष्येते । शिष्टं स्पष्टम् ॥

701

अस्मिन्नर्थे—

"या ते रुद्र !"

इति श्रुत्यर्थमेव श्लोकमुखेन उपन्यस्यति—

भो रुद्र ! ते तव या तनूः शिवलिङ्गमूर्तिः, शिवा मङ्गला अघोरा अभयङ्करा अपापकाशी दोषरहिता, त्वं तदीयः लिङ्गसम्बन्धी सन् नित्यं भासीति सनातनी नित्याश्रुतिः आह कथयतीत्यर्थः ॥

---

[1] आधिक्यं चात्र सामान्यजनस्यापि विषयीभूतत्वम् ।

[2] "या ते रुद्र शिवा तनूः । अघोरापापकाशिनी" इति तैत्तिरीयसंहितायां चतुर्थे काण्डे मन्त्रः ।

702 [इष्टलिङ्गपूजाविधिः]

तस्मात् सर्वप्रयत्नेन सर्वस्थानपराङ्मुखः ।[1]
स्वेष्टलिङ्गे महादेवं पूजयेत् पूजकोत्तमः ॥

703 [निगमनम् ]

शिवस्य सर्वगत्वेऽपि सर्वत्र रतिवर्जितः ।[2]
स्वेष्टलिङ्गे यजत् देवं सर्वगत्वनिरासकः ॥

(22) इति सर्वगतत्वनिरसनस्थलम् (2-7)



---

तस्मात् इष्टलिङ्ग एव पूजयेदित्याह—

तस्मात् श्रुतिप्रसिद्धत्वात् पूजकोत्तमः माहेश्वरः सर्वप्रयत्नेन सर्वस्थानविमुखः सन् स्वेष्टलिङ्गे स्वसम्बन्धवति इष्टलिङ्गे एव महादेवं पूजयेत् इत्यर्थः ॥

एवं बुद्ध्वास्वेष्टलिङ्गे यजन्नेव सर्वगत्वनिरासकः इत्याह—

स्पष्टम् ॥

---

[1] ईश्वरस्य शिवस्य सवत्रगत्वेन एवमुक्तम् ।

[2] तत्तत्सर्वरूपेषु भक्त्यनुगुणरसग्रहणशक्त्यभावात् इति भावः

## (23) माहेश्वरस्थले शिवजगन्मयस्थलम् (2-8)

704 [शिवजगन्मयस्थलनिरूपणम् ]

पूजाविधौ नियम्यत्वात् [2]लिङ्गमात्रे स्थितं शिवम् ।
पूजयन्नपि देवस्य सर्वगत्वं विभावयेत् ॥

---

अथ महेश्वरस्य पूजार्थं सर्वगत्वे निराकृतेऽपि[1] प्रमाणबलात् सर्वगत्वं यथाऽङ्गीक्रियते, तथा प्रमाणबलात् सर्वमयत्वं च अङ्गीकरणीयम् इति शिवजगन्मयस्थलं निरूपयति—

शिवस्य सर्वनियामकत्वेऽपि पूजाकाले भक्तनियाम्यत्वात्, लिङ्गमात्रे स्थितं शिवं भक्तः पूजयन्नपि, देवस्य लिङ्गस्थितस्य प्रकाशात्मनः शिवस्य सर्वगत्वं विभावयेत् । अन्यथा कुम्भाकारवत्[3] परिच्छिन्नत्वप्रसङ्गात् इति ॥

705 शिवजगन्मयत्वोपपादनम् ]

एवं सर्वगत्वे सिद्धे, शिवस्य—

"आत्मनः आकाशः सम्भूतः आकाशाद्वायुः ।
वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी ॥"

इति श्रुतेः अभिन्ननिमित्तोपादानकारणत्वश्रवणात्[4] बहुदृष्टान्तपूर्वकं शिवजगन्मयत्वं प्रतिपादयति—

---

1 आकाशवत् विभोः पूजादिक्रियान्वयकारणार्हताभावात् ।
2 लिङ्गप्रमाणाकारपरिमितस्वरूपे इत्यर्थः ।
3 कुम्भकारवत् (ख)
4 हेतुत्वेन पञ्चम्या उभयोरपि ग्रहणादिति भावः ।

यस्मादेतत् समुत्पन्नं महादेवाच्चराचरम् ।
तस्मादेतन्न भिद्येत यथा कुम्भादिकं मृदः ॥[1]

706

शिवतत्त्वात् समुत्पन्नं जगदस्मान्न भिद्यते ।
फेनोर्मिबुद्बुदाकारं यथा सिन्धोर्न भिद्यते ॥[2]

707

यथा तन्तुभिरुत्पन्नः पटस्तन्तुमयः स्मृतः ।
तथा शिवात् समुत्पन्नं शिव एव चराचरम् ॥

708 [तत्र दृष्टान्तवैषम्यनिरसनम् ]

आत्मशक्तिविकासेन[3] शिवो विश्वात्मना स्थितः ।
कुटीभावाद्यथा भाति पटः स्वस्य प्रसारणात् ॥

---

यस्मात् महादेवात् इति सम्बन्धः ॥ शिष्टं स्पष्टम् ॥

स्पष्टम् ॥

स्पष्टम् ॥

ननु मृदादीनां विकारित्वात् शिवस्य निर्विकारत्वात् उक्तदृष्टान्तो विषमः इत्याह —

पटः स्वतादात्म्यापन्नप्रसरणशक्त्या कुटीभावात् प्रस्थानकुटीभावात्[4]

---

[1] अनेन दृष्टान्तेन सत्कार्यवाद एव स्वीकृतः इत्यर्थः ।

[2] एकस्मिन्नेव धर्मिणि नामान्तरहेतुधर्मभेददर्शनमात्रमिति भावः ।

[3] विकासस्थले हि अन्तर्गतमेव सूक्ष्मरूपं वस्तु स्थूलरूपान्तरमापन्नं सत् दृष्टिगोचरो भवति इति ।

[4] चलद्गृहाद्यावरणरूपेणेत्यर्थः ।

709 [शिवस्य शक्तिद्वारा विकारित्वव्यवहारः]

तस्मात् शिवमयं सर्वं जगदेतच्चाचरम् ।
तदभिन्नतया भाति सर्पत्वमिव रज्जुतः ॥

710

रज्जौ तत् सर्पवत् भाति शुक्तौ च रजतत्ववत् ।
चोरत्ववदपि स्थाणौ मरीच्यां च जलत्ववत् ।

---

यथा भाति, तथा शिवोऽपि स्वात्मशक्तिविकासेन विश्वात्मना स्थितः सन् भातीत्यर्थः ॥

ननु प्रसारणशक्तिद्वारा यथा पटस्यापि विकारभात्त्वं[2] तथा शिव-स्यापि स्वसमवेतशक्तिद्वारा विकारिता स्यात्, इत्यत्र दृष्टान्तान्तरं उपन्यसन् उक्तार्थमुपसंहरति—

रज्जुः स्वनिष्ठदीर्घवृत्तगोधूमवर्णताशक्तिवशात् विकाररहित्येन यथा सर्पत्वेन भाति तथा शिवोऽपि विकारराहित्येन स्वसमवेतमायाशक्त्या विश्वाभिन्नतया भाति । तस्मात् सर्वमेतत् चराचरं विश्वं शिवमयम् । न तद्व्यतिरिक्तमित्यर्थः ॥

अथ दार्ढ्यार्थं उदाहृतदृष्टान्तपूर्वकं बहुदृष्टान्तमाह—

रज्ज्वां गोधूमवर्णनाशक्त्या सर्पत्ववत्, शुक्तौ धावल्यशक्त्या

---

[1] नात्र पटस्य प्रसारणमात्रेणविकारित्वं सम्भवति । पूर्वधर्मलोपेन धर्मान्तरोत्पत्तेरभावात् । तथापि धर्मभेददर्शनमात्रेण तथोक्तिः ।

711

गन्धर्वपुरवद्व्योम्नि सच्चिदानन्दलक्षणे ।
निरस्तभेदसद्भावे शिवे विश्वं विराजते ।

712 [विश्वस्यप्रातीतिकत्वम् ]

पत्रशाखादिरूपेण यथा तिष्ठति पादपः ।
तथा भूम्यादिरूपेण शिव एको विराजते ॥

---

रजतत्ववत्, स्थाणौ दीर्घताशक्त्या पुरुषत्ववत्, मरीच्यां स्वच्छतोद्रेक शक्त्या जलत्ववत्, कालशक्त्या व्योम्नि गन्धर्वनगरवत्, निरस्तसमस्त प्रापञ्चिकभेदवति निर्विकारे सच्चिदानन्दस्वरूपे परशिवब्रह्मणि तत्समवेत विमर्शशक्तिप्रतिस्फुरणायमानमायाशक्त्या विश्वं तदभिन्नतया भातीत्यर्थः[2] ॥

ननु एभिः दृष्टान्तैः विश्वं प्रातीतिकं[2] स्यात् इत्यत्र दृष्टान्तान्तरमाह—

वृक्षो यथा कालशक्त्या विकारराहित्येन स्वान्तर्लीनस्वविजातीय पत्रपुष्पादिभेदविशिष्टत्वेन भाति, तथा शिव एव स्वसमवेत शक्तितादात्म्य क्रोडीकृतभूम्यादिरूपेण प्रतिस्फुरणतया भातीत्यर्थः ॥

तत्र धृत्या धरणिः, करुणया जलम्, उज्ज्वलतया तेजः, परमानन्द- स्पन्दनेन वायुः, चिद्व्याप्त्या व्योम, चितिसङ्कोचचित्तविशिष्टोजीवः इति विवेकः ।

---

[1] सर्वत्र शक्तिरूपो धर्मः धर्मिणि तत्तदाकारतया भानं जनयतीत्यर्थः ।
[2] धर्मिणि उक्तभानहेतुस्वरूपाभावात् ।

713 [निरवयवशक्तेः सावयवप्रपञ्चरूपत्वोपपत्तिः]

ननु वृक्षस्य सावयवत्वात्, तदाभाससंयुक्तशिवस्य निरवयवत्वात् तत्समवेतशक्तेरपि तदभिन्नत्वेन तथात्वात्, कथं सावयवप्रपञ्चरूपेण भासनं सम्भवतीति नाशङ्कनीयम्। शक्तेः शिवाभिन्नत्वे सति दुर्घटकारित्वेन "अहिकुण्डलन्यायेन स्वस्वातन्त्र्यपरिकल्पितभेदोपस्थितिः परमाणुकार्यभूत द्व्यणुकादाविव तत्कार्यरूपमायाशक्तेः सांशत्वे [1]सम्भवतीत्युक्तत्वात्।

"[2]विष्टभ्याहमिदं कृत्स्नं एकांशेन स्थितं जगत्।"

इति भगवदुक्तेश्च ॥

प्रातीतिकप्रपञ्चरूपेणापि स्वशक्तिन्यूनीभावेन शिव एव भासते। शुक्तिरजतयोः परस्परभेदसत्त्वात् मेलकांशो नास्तीति वदता निषेधप्रतियोगित्वेन समानयोगेन च सोऽप्यङ्गीकरणीय एव। सा च उत्तरक्षणबाध्यमानत्वात् शक्तिन्यूनीभावनिबन्धनेति, सर्वविश्वं शिवमयमेवेति संक्षेपः[3] ॥

714 [तयोः परस्परबाधाभावोपपादनम्]

वस्तुतस्तु—बाध एव नास्ति। घटपटयोरिव शुक्तिरजतयोरपि वस्तुत्वात्। नापि शुक्तिज्ञानेन रजतज्ञानस्य बाधः, घटपटज्ञानयोरिव भिन्नकालभिन्नविषयत्वात्।

---

[1] सांशभावकार्यविषये तत्तत्क्रियाकारित्वादितिभावः।
[2] विष्टभ्य-सर्वांशेनव्याप्येत्यर्थः।
[3] अयमेवांशः प्रत्यभिज्ञावादमते विस्तृतया उपपादितः इति भावः।

## (23) इति शिवजगन्मयस्थलम् (2-8)

ननु एकस्मिन्नेव धर्मिणि 'इदं रजतं' 'नेदं रजतम्' इति विरुद्धावभासद्वयस्य प्रामाण्यासम्भवात्। अथोत्तरकालिक[1]रजताभावज्ञानेन पूर्वोत्पन्नरजतज्ञानस्य बाधः अङ्गीक्रियते इति चेत् न॥

ज्ञानानां त्रिक्षणावस्थायित्वनियमेन[2] रजताभावज्ञानस्थितिकाले रजतज्ञानस्याभावात्।

किञ्च-बाध्यबाधकभावस्य "दण्डभाण्डन्यायेन" [3]परस्परान्वयसापेक्षत्वेन ज्ञानानां गुणत्वेन परस्परसम्बन्धाभावात्।[4] तस्मात् घटपटज्ञानयोरिव उन्मेषनिमेषयोः अङ्गीकरणीयत्वेन बाधस्यैवाभावात् इति दिक्॥

---

[1] तदुत्तरकालिकेत्यर्थः।

[2] इदं च नैयायिकानुसारेण।

[3] दण्डेन घटादिभाण्डध्वंसे जननीये अनयोः संयोगस्य अवश्यापेक्षितत्वादिति भावः।

[4] गुणयोः परस्परसंयोगासंभवात्।

## (24) माहेश्वरस्थले भक्तदेहिकलिङ्गस्थलम् (2-9)



715 [भक्तदेहिकलिङ्गस्थलनिरूपणम्]

समस्तजगदात्माऽपि शङ्करः परमेश्वरः ।
भक्तानां हृदयाम्भोजे विशेषेण विराजते ॥

---

अथैवं शिवस्य जगन्मयत्वेऽपि—

"वेदवेदान्तवाक्यार्थसन्धानातीतवर्तनः ।
भक्तभावपरानन्दः भक्तभावैकगोचरः ॥"

इति योगजागमवचनानुसारेण भक्तहृदये प्रकाशयतीति[1] भक्तदेहिकलिङ्गस्थलं सप्तभिः सूत्रैः प्रतिपादयति—

शङ्करः सुखङ्करः[2], परमेश्वरः परशिवः समस्तजगदात्माऽपि भावाभावरूपप्रपञ्चमयोऽपि भक्तानां स्वभक्तानां हृदयाम्भोजे हृदयकमले विशेषेण विराजते आधिक्येन प्रकाशते इत्यर्थः ॥

716

तत् कथम् ? इत्यत्राह—

---

[1] शिवस्य जगन्मयत्वेऽपि इति शेषः ।

[2] शंपदस्य सुखवाचित्वात् ।

717 [अपरिच्छिन्नस्यपि परिच्छेदोपपत्तिः]

कैलासे मन्दरे चैव हिमाद्रौ कनकाचले ।
हृदयेषु च भक्तानां विशेषेण व्यवस्थितः ॥[1]

718 [तत्र प्रामाण्यम्]

सर्वात्माऽपि परिच्छिन्नः यथा देहेषु वर्तते ।[2]
तथा स्वकीयभक्तेषु शङ्करो भासते सदा ॥

नित्यं भाति स्वकीयेषु या ते रुद्र शिवा तनूः ।
अघोराऽपापकाशीति[3] श्रुतिराह सनातनी ॥

---

एषु स्थानेषु यथा शिवः विशेषेण भासते, तथा स्वभक्तानां हृदये भासते इत्यर्थः ॥

ननु अपरिच्छिन्नः परमेश्वरः कथं परिच्छिन्नः सन् भक्तहृदयेषु राजते ? इत्यत्राह—

सर्वात्माऽपि परमेश्वरः देवतिर्यङ्मनुष्यलक्षणसकलदेहेषु भिन्नान्तःकरणविशिष्टेषु प्रतिबिम्बगत्या यथा भासते तथा स्वकीयभक्तेषु सदा प्रकाशते इत्यर्थः ॥

अस्मिन्नर्थे प्रमाणगर्भितवचनमाह—

---

1 विशेषेण शिवः स्थितः (क)
2 बिम्बेषु वर्तते (क)
3 अघोरापापकाशनी (घ)

719 [अभक्तेषु शिवभानाभावे हेतुः]

विशुद्धेषु विरक्तेषु[1] विवेकिषु[2] महात्मसु ।
शिवस्तिष्ठति सर्वात्मा शिवलाञ्छनधारिषु ॥

720 [शिवभक्तगतो विशेषः]

नित्यं सन्तोषयुक्तानां ज्ञाननिर्धूतकर्मणाम् ।
माहेश्वराणामन्तस्स्थः विभाति परमेश्वरः ॥

---

भो रुद्र! ते तव या तनूः शिवलिङ्गमूर्तिः अघोरा सौम्या, अपापकाशी दोषरहिता, सा लिङ्गमूर्तिः स्वकीयेषु स्वसम्बन्धिषु भक्तेषु नित्यं भाति, इति सनातनी नित्या श्रुतिः आह इत्यर्थः ।

ननु शिवभक्तव्यतिरेकेषु न भासते किम्? इत्यत्राह—

विशुद्धेषु विरक्तेषु षट्स्थलज्ञानिषु चरमूर्तिषु इत्यर्थः । विवेकिषु महात्मसु शुकादियोगिषु इत्यर्थः । शिवलाञ्छनधारिषु भूतिरुद्राक्षमात्र धारिषु चे त्यर्थः । सर्वात्मा शिवः नित्यं तिष्ठति प्रकाशते इत्यर्थः ॥

नन्वेवं चेत् साधारणत्वात् शिवभक्तेषु को विशेषः? इत्यत्राह—

शिवज्ञानेन निर्धूतकल्मषवत्त्वात शिवसुखानुभाविनां माहेश्वराणां

---

1 विवेकेषु (क)
2 विरक्तेषु (क)

721

अन्यत्र शम्भोरतिमात्रशून्य-
निजेष्टलिङ्गे नियतान्तरात्मा ।
शिवात्मकं विश्वमिदं विबुध्यन्[1]
माहेश्वरोऽसौ भवति प्रसादी ॥

इति श्रीमत् षट्स्थलब्रह्मिणा शिवयोगिनाम्ना
रेणुकाचार्येण विरचिते सिद्धान्तशि-
खामणौ नवविधस्थलप्रसङ्गो
नाम दशमःपरिच्छेदः ॥

---

निर्मलदर्पणे मुखादेः स्फुटतया भासनमिव अतिस्फुटतया तेषां अन्तस्स्थः सन् भातीत्यर्थः ॥

अथ वक्ष्यमाणप्रसादिस्थलं सूचयति—

शिवादन्यत्र देवतान्तरे रतिमात्रशून्यः प्रीतिलेशेनापि रहितः सन् निजेष्टलिङ्ग नियतान्तरात्मा नियमितान्तःकरणवान् असौ माहेश्वरः[2] इदं विश्वं 'इदम्' इति अङ्गुलिनिर्देश्यत्वेन भासमानं विश्वम् शिवात्मकं उक्तदृष्टान्तैः शिवमयमिति बुध्यन् सन् प्रासादी भवति इत्यर्थः ।

अत्र— "शिव एकोध्येयः शिवङ्करः ।"
"सर्वमन्यत् परित्यज्य ॥" इति श्रुतिः ॥

---

1 विबुध्य (क)
2 लिङ्गनिष्ठाद्याचारवान् इत्यर्थः ।

(24) इति भक्तदेहिकलिङ्गस्थलम् (2-9)

इति द्वितीयं माहे

श्वरस्थलं समाप्तम्

—o— —

---

इति श्रीमत्पदपाक्यप्रमाणपारावार
धुरीणमरितोण्दार्येण विरचितायाम्
तत्त्वप्रदीपिकाख्यायां सिद्धान्तशिखामणि
व्याख्यायां माहेश्वरस्य
नवविधस्थलप्रसङ्गो
नाम दशमः परिच्छेदः
समाप्तः



॥ श्री शिवाय नमः ॥

# सिद्धान्त शिखामणौ

## एकादशः परिच्छेदः

प्रसादिनः सप्तविधस्थलप्रसङ्गः ॥

अथ तृतीयं

### (3) प्रसादिस्थलम्

722 [प्रसादिस्थलनिरूपणम्]

उक्तो माहेश्वरः साक्षात् लिङ्गनिष्ठादिधर्मवान् ।
कथमेष प्रसादीति कथ्यते गणनायकः[1] ॥१॥

723 [प्रसादिपदार्थः]

लिङ्गनिष्ठादिभावेन ध्वस्तपापनिबन्धनः ।
मनःप्रसादयोगेन प्रसादीत्येष कथ्यते ॥२॥

---

अगस्त्य उवाच—

स्पष्टम् ॥१॥

रेणुक उवाच—

उक्तलिङ्गादिनिष्ठस्थलपरिज्ञानतदाचरणतः ध्वस्तपापसमूहः एवः माहेश्वरः[2] मनोनैर्मल्य-सम्बन्धेन प्रसादीत्युच्यते इत्यर्थः ॥२॥

---

1 गणनायक=रेणुकगणेश्वर !

2 वीरमाहेश्वरः इति यावत् ।

724 [प्रसादिस्थलावान्तरभेदाः]

प्रसादिस्थलमित्येतत् अस्य माहात्म्यबोधकम् ।
[1]अंतरस्थलभेदेन सप्तधा परिकीर्तितम् ॥३॥

725

प्रसादिस्थलमादौ तु गुरुमाहात्म्युयकं ततः ।
ततो लिङ्गप्रशंसा च ततो जङ्गमगौरवम् ॥४॥

726

ततो भक्तस्य माहात्म्यं ततः शरणकीर्तनम् ।
शिवप्रसादमाहात्म्यं इति सप्तप्रकारम् ॥५॥

---

अथ एतत् स्थलं कीदृशं ? कीदृग्विधम् ? इत्यत्राह—

एतत् प्रसादिस्थलं अस्य भक्त माहेश्वरस्थलोक्तसदाचारसमूहस्य महत्त्वबोधकं अवान्तरस्थलभेदेन सप्तविधमिति प्रिरिकीर्तितमित्यर्थः ॥३॥

अथ तत् कथम् ? इत्यत्र उद्दिशति— ॥४॥

शरणकीर्तनं तन्महत्त्वकीर्तनमित्यर्थः । एवं सप्तप्रकारमित्युत्तरम्

[१ प्रसादिस्थलम् ।
२ गुरुमाहात्म्यस्थम् ।
३ लिङ्गप्रशंसास्थलम् ।
४ जङ्गमगौरवस्थलम् ।
५ भक्तमाहात्म्यस्थलम् ।
६ शरणकीर्तनस्थलम् ।
७ शिवप्रसादमाहात्म्यस्थलम् ।] ॥५॥

---

1 अत्र अन्तरपदं अवान्तरविभागवाचकम् ।

727
क्रमात् लक्षणमेतेषां कथयामि महामुने ॥६॥

728 [प्रसादिस्थलनिरूपणम्]

(25) प्रसादिस्थले प्रसादिस्थलम् (3–1)

729 [मनोनैर्मल्यस्य प्रसादफलता]

नैर्मल्यं मनसो लिङ्गं प्रसाद इति कथ्यते ।
शिवस्य लिङ्गरूपस्य प्रसादादेव सिद्धयति ॥७॥

---

अथ उद्दिष्टानां स्थलानां क्रमात् लक्षणमुच्यते इत्यत्राह—

स्पष्टम् ॥६॥

अथ—

"चित्तस्य हि प्रसादेन
हन्ति कर्म शुभाशुभम् ।
प्रसन्नात्माऽऽत्मनि स्थित्वा
सुखमक्षयमश्नुते ॥"[1]

इति मैत्रेयश्रुत्यनुसारेण शिवप्रसादजायमानमनःप्रसन्नतां द्वादशसूत्रैः प्रतिपादयति—

मनसः चित्तस्य नैर्मल्यं लिङ्गं निर्मलत्वचिह्नम् प्रसादः इति कथ्यते इत्यर्थः । एवः मनोनिर्मलत्वरूपप्रसाद· लिङ्गरूपस्य शिवस्य प्रसादात् सिद्ध्यतीत्यर्थः ॥७॥

---

[1] शिवप्रसादं (क)

730 [प्रसादस्वरूपम्]

शिवप्रसादो[1] यत् द्रव्यं शिवाय विनिवेदितम् ।
निर्माल्यं तत्तु शैवानां मनोनैर्मल्यकारणम् ॥

731 [प्रसादिस्वरूपम्]

मनः प्रसादसिद्ध्यर्थं निर्माल्यं ज्ञानकारणम् ।
शिवप्रसादं स्वीकुर्वन् प्रसादीत्येष कथ्यते ॥[2]

732 [प्रसादस्य मनोनैर्मल्यहेतुत्वे कारणम्]

अन्नशुद्ध्या हि सर्वेषां सत्त्वशुद्धिरुदाहृता ।
विशुद्धमन्नजातं हि यच्छिवाय समर्पितम् ॥

---

ननु कोऽयं चित्तनैर्मल्यलक्षणप्रसादकारणीभूतशिवप्रसादः ? इत्यत्राह—

शिवाय विनिवेदितं समर्पितं यत् द्रव्यं तत् शिवप्रसादः, तन्निर्माल्यं तु विशेषतः शैवानां मनोनैर्मल्यकारणं भवतीत्यर्थः ॥

अथैवंरूपशिवप्रसादस्वीकारवान् प्रसादीत्याह—

ज्ञानकारणं शिवज्ञानकारणं शिवप्रसादं निर्माल्यं शिवलिङ्गप्रसादरूप-शिवनिर्माल्यं मनःप्रसादसिद्ध्यर्थं चित्तनैर्मल्यार्थं स्वीकुर्वन् एष वीरमाहेश्वरः प्रसादीति कथ्यते इत्यर्थः ॥

तस्मात्—

---

1 शिवप्रसादं-(क)
2 प्रसादीति निगद्यते (घ)

733

तदेव सर्वकालं तु भुञ्जानो लिङ्गतत्परः ।
मनःप्रसादमतुलं लभते ज्ञानकारणम् ॥

734 [सर्वेषां शिवसमर्पणावश्यकता]

आत्मभोगाय नियतं यद्यद्द्रव्यं समाहितम् ।
तत्तत् समर्प्य देवाय भुञ्जीतात्मविशुद्धये ॥[1]

---

"आहारशुद्धौ सत्त्वशुद्धिः"[2]

इति छान्दोग्यश्रुतेः शुद्धशिवनिर्माल्यभक्षणेन सकलसत्त्वशुद्धिद्वारा मनोनैर्मल्यं लभते भक्तः इत्याह—

अन्नशुद्ध्या सर्वेषां प्राणिनां सत्त्वशुद्धिः देहाक्षभुवनप्रपञ्चशुद्धिरिति शास्त्रज्ञैरुदाहृता । यत् शिवाय समर्पितं अन्नजातं शुद्धं तत् अन्नजातमेव लिङ्गतत्परः सन् सदाकालं भुञ्जानः प्रसादी अतुलं[3] शिवज्ञानकारणं मनःप्रसादं मनोनैर्मल्यं लभते इत्यर्थः ॥

तस्मात् आत्मभोगार्थं नियमितं सत् यद्यद्द्रव्यं प्राप्तम् भवति तत् सर्वं—

"यद्यदात्महितं वस्तु
तत्तत् सर्वं शिवार्पितम्"

---

1 अत्र आत्मपदं अन्तःकरणपरमिति भावः ।
2 सत्त्वशुद्धौ ध्रुवा स्मृतिः । इति तदुत्तरवाक्यम् ।
3 अतुलं=अनन्यसामान्यम् ।

735
नित्यसिद्धेन देवेन भिषजा जन्मरोगिणाम् ।
यद्यत् प्रसादितं भुक्त्वा तत्तज्जन्मरसायनम् ॥

736 [प्रसादस्य आरोग्यहेतुत्वमपि]
आरोग्यकारणं पुंसां अन्तःकरणशुद्धिदम् ।
तापत्रयमहारोगसमुद्धरणभेषजम् ॥

737
विद्यावैशद्यकरणं विनिपातविघातनम्[1] ।
द्वारं ज्ञानावतारस्य मोहोच्छेदस्य कारणम् ॥

738
वैराग्यसम्पदो मूलं महानन्दप्रवर्धनम् ।
दुर्लभं पापचित्तानां सुलभं शुद्धकर्मणाम् ॥

---

इति शिवरहस्यवचनानुसारेण शिवाय समर्प्य भुञ्जीयात् इत्याह—

आत्मभोगाय नियमितं सत् समाहितं सम्पादितं तत्तत् शिवलिङ्ग-देवाय समर्प्य आत्मविशुद्धये चित्तशुद्ध्यर्थं भुञ्जीयात् इत्यर्थः ॥

अथ अस्य महत्त्वं प्रतिपादयति—

जन्मरोगिणां भवरोगिणां भिषजा वैद्येन नित्यसिद्धेन[2] शिवलिङ्गे-निरन्तरसिद्धेन देवेन परमेश्वरेण यत् द्रव्यं भुक्त्वा प्रसादितं प्रसादीकृतं तत्तत् जन्मरसायनं संसारव्याधिरसायनमित्यर्थः ॥[3]

अथ ऐहिकारोग्यादिकारणं चेत्याह—

---

[1] विद्यादिसिद्धिकरणम् (क)
[2] जन्मतः मनोवाक्कायसिद्धिं प्राप्तस्येत्यर्थः ।
[3] रसायनपदं सर्वविघ्नमृत्युपरिहारकस्य अमृतस्य पर्यायभूतम्

739

आहृतं ब्रह्मविष्ण्वाद्यैः वसिष्ठाद्यैश्च तापसैः ।
शिवस्वीकृतमन्नाद्यं स्वीकार्यं सिद्धिकाङ्क्षिभिः॥

740 [प्रसादस्य पापक्षयहेतुत्वम्]

पत्रं पुष्पं फलं तोयं यच्छिवाय निवेदितम् ।
तत्तत्स्वीकारयोगेन[1] सर्वपापक्षयो भवेत् ॥

---

अत्र पुनः 'तत् इत्यनुवर्तते । तत् प्रसादद्रव्यं पुंसां आरोग्यकारणं सत् अन्तःकरणशुद्धिदं आध्यात्मिकादितापत्रयलक्षणमहारोगोन्मूलनौषधं विद्याविशेषसिद्धिकारणम् । विनिपातः कृत्रिमदोषः, तस्य घातकम् । शिवज्ञानावतारस्य द्वारम् । अज्ञानोच्छेदकारणम् । वैराग्यसम्पदः मूलकारणम् । ब्रह्मादिदेवैः वसिष्ठादिमुनिभिः प्रीतिविषयीकृतम् ।

एवंरूपं शिवस्वीकृतान्नाद्यं [2]शिवलिङ्गस्वीकृतान्नप्रसादद्रव्यं सिद्धिकाङ्क्षिभिः—इह परत्र भोगमोक्षलक्षणसिद्धिकाङ्क्षाशिभिः प्रसादिभिः स्वीकार्यमित्यर्थः ॥

अथ एतत्प्रसादस्वीकारेण सर्वपापक्षयश्च भवतीत्याह—

---

1 शिवनिवेदितान्नादिस्वीकार एव योगविशेषपर्यायः इति भावः ।
2 अन्नं आद्यं=प्रथमं येषां तत् ।

[741 [निगमनम्]

यथा शिवप्रसादान्नं स्वीकार्यं लिङ्गतत्परैः ।
तथा गुरोः प्रसादान्नं तथैव शिवयोगिनाम् ॥[1]

---

यत् यद्द्रव्यमित्यर्थः । शिष्टं स्पष्टम् ॥

अथ—

"गुरुजङ्गमलिङ्गानां निर्माल्यं भुक्तिमुक्तिदम् ।
सदैवानुभवेद्देवि ! प्रसादव्रतमुत्तमम् ॥"

इति शिवागमवचनानुसारेण शिवलिङ्गप्रसादवदेव श्रीगुरुशिवयोगिनोरपि प्रसादः स्वीकार्यः इत्युक्त्वा प्रसादिस्थलं समापयति—

लिङ्गनिष्ठैः प्रसादिभिः यथा शिवनिवेदितप्रसादान्नं स्वीकार्यम्, तथा श्रीगुरुशिवयोगिनां च अन्नप्रसादोऽपि स्वीकार्य इत्यर्थः ॥

(25) इति प्रसादिस्थलम् (3-25)

---

1 सर्वत्र स्वीकार्यमित्यन्वेति ।

## (26) प्रसादिस्थले गुरुमाहात्म्यस्थलम् (3-2)

742 [गुरुमाहात्म्यस्थलनिरूपणम्]

गुरुरेवात्र सर्वेषां कारणं सिद्धिकर्मणाम् ।
गुरुरूपो महादेवः यतः साक्षादुपस्थितः ॥

743 [शिवस्य गुरुरूपेण प्रकाशे हेतुः]

निष्कलो हि महादेवः नित्यज्ञानमहोदधिः ।
सकलो गुरुरूपेण सर्वानुग्राहको भवेत् ॥

---

अथ प्रसादनिष्ठेन ज्ञातव्यं गुरुमाहात्म्यस्थलं निरूपयति—

अत्र लोके भोगमोक्षलक्षणसकलसिद्धकर्मणां गुरुरेव कारणम् ।

" न गुरोरधिकं न गुरोरधिकम् "

इति शिवरहस्यवचनात् । यतः परमेश्वर एव साक्षात् गुरुरूपः सन् उपस्थितः तिष्ठति इत्यर्थः ॥

ननु निष्कलः शिवः किमर्थं सकल[1]गुरुरूपेण प्रकाशते? इत्यत्राह—

नित्यज्ञानार्णवपरमेश्वरः निष्कलोऽपि निरवयवोऽपि[2] गुरुरूपेण सकलः सन्

---

1 अत्र सकलपदं कलाविशिष्टपरम् ।
2 कालपदं च अवयवपरमिति भावः ।

744 [गुरुशिवयोरभेदप्रतिपादनम्]

य शिवः स गुरुर्ज्ञेयः यो गुरुः स शिवः स्मृतः ।
न तयोरन्तरं कुर्यात्[1] ज्ञानावाप्तौ महामतिः ॥

745 [शिवाभेदेन गुरोः पूजाविधिः]

हस्तपादादिसाम्येन नेतरैः सदृशं वदेत् ।
आचार्यं ज्ञानदं शुद्धं शिवरूपतया स्थितम् ॥

---

करचरणादिविशिष्टः सन् सर्वानुग्राहको भवेत्, लोकानुग्रहार्थं भातीत्यर्थः ॥

तस्मात् गुरुशिवयोः भेदो नास्तीत्याह—

गुरोः मोक्षकारणीभूतज्ञानप्रदत्वेन शिवाभिन्नत्वात् । अन्यथा ज्ञानानुदयप्रसङ्गात् । तदर्थं सूक्ष्मदृक् तयोरन्तरं भेदं न कुर्यादित्यर्थः॥

"यथाऽहं सर्वलोकानां
गुरुरम्बिकया सह ॥"

इत्यागमोक्तेः, शिवसदृशं श्रीगुरुं प्राकृतैः सदृशमनुक्त्वा[3] पूजयेदित्याह—

शुद्धं निर्मलान्तःकरणं शिवज्ञानप्रकाशकं उमामहेश्वररूपेण स्थितं श्रीगुरुं हस्तपादादिसाम्येन प्राकृतैः सदृशं सन्तं न वदेत् ॥

---

1 तौ परस्परं भिन्नौ इति भावं न कुर्यात् इत्यर्थः ।
2 प्राप्तशिवज्ञानः अत एव मुनिषु अत्यन्तश्रेष्ठः – इत्यर्थः ।
3 मनसि विभावनां अकृत्वा इति यावत् ।

746 [तादृशगुरुपूजाफलम्]

आचार्यस्यावमानेन श्रेयः प्राप्तिर्विहन्यते ।
तस्मान्नि.श्रेयसप्राप्त्यै पूजयेत् तं समाहितः ॥

747 [निगमनम्]

गुरुभक्तिविहीनस्य शिवभक्तिर्न जायते ।
ततः[1] शिवे यथा भक्तिः तथा भक्तिर्गुरावपि ॥

---

तेन किं भवतीत्यत्राह—

आचार्यस्य अवमानेन प्राकृतजनसमोक्त्या भोगमोक्षलक्षणश्रेयःप्राप्तिः विहन्यते । तस्मात् निःश्रेयसप्राप्त्यै भोगमोक्षावाप्त्यै समाहितः एकाग्रचित्तः सन् तं श्रीगुरुं पूजयेत् इत्यर्थः ॥

अथ

"यस्य देवे परा भक्तिः
यथा देवे तथा गुरौ"

इति श्वेताश्वतरश्रुत्यर्थं प्रकटयन् गुरुमहत्त्वस्थलं समापयति —

स्पष्टम् ॥

(26) इति गुरुमाहात्म्यस्थलम् (3-2)

---

1 तस्य गुरोः यत् सहजं मानं, तन्न्यूनेन मानेन इति यावत् ।
2 ततः=पूर्वोक्तात् कारणादित्यर्थः ।
3 स्यादिति शेषः ।

अथ-

## (27) प्रसादिस्थले लिङ्गमाहात्म्यस्थलम् (3-3)

748 [लिङ्गमाहात्म्यस्थलनिरूपणम्]

गुरुमाहात्म्ययोगेन निजज्ञानातिरेकतः ।[1]
लिङ्गस्यापि च माहात्म्यं सर्वोत्कृष्टं विभाव्यते॥

749 [लिङ्गस्वरूपम्]

शिवस्य बोधलिङ्गं[2] यत् गुरुबोधितचेतसा ।
तदेव लिङ्गं विज्ञेयं शाङ्करं[3] सर्वकारणम् ॥

---

अथ गुरुकृपाप्रकाश्यलिङ्गमहत्त्वस्थलं निरूपयति—

गुरुमाहात्म्यज्ञानयोगेन निजज्ञानाधिक्यात् लिङ्गस्य शिवलिङ्गस्य माहात्म्यमपि सर्वोत्कृष्टं सत् विभाव्यते विज्ञायते इत्यर्थः ॥

ननु लिङ्गज्ञानव्यतिरेकेण तन्माहात्म्यज्ञानासम्भवात्, लिङ्गस्वरूपम् केन ज्ञापितम् ? इत्यत्राह—

शिवस्य यत् बोधलिङ्गं चिन्मयलिङ्गमस्ति तत् शाङ्करं लिङ्गं सर्वकारणं विष्णवादिसर्वविश्वकारणं सत् गुरुबोधितचेतसैव विज्ञेयं ज्ञातुं योग्यं गुरुणैव ज्ञापितमित्यर्थः ॥

---

1 आधिक्येन स्पष्टतया आत्मज्ञानसम्पादनादित्यर्थः ।
2 अत्र बोधपदं ज्ञानपर्यायचित्परम् ।
3 शाङ्करं लिङ्गमित्यन्वयः ।

750

परं पवित्रममलं लिङ्गं ब्रह्म सनातनम् ।
शिवाभिधानं चिन्मात्रं सदानन्दं निरङ्कुशम् ॥

751

कारणं सर्वलोकानां वेदानामपि कारणम् ।
पूरणं सर्वतत्त्वस्य तारणं जन्मवारिधेः ॥

752

ज्योतिर्मयमनिर्देश्यं योगिनामात्मनि स्थितम् ।
कथं विज्ञायते लोके महागुरुदयां विना ॥

---

अथ तत् कीदृशम् ? इत्यत्राह--

अथ "सर्वतत्त्वस्य पूरणम्" इत्यनेन शिखण्ड्यण्डरसन्यायेन[1] स्वात्मैकरसेन परिपूर्णविश्वमयत्वमुक्तम्, योगिनाम् शिवयोगिभिः अनिर्देश्यं सत् आत्मनिनिजस्वरूपे स्थितं ज्योतिर्मयम् —

"स्थाणुवत् ज्वलति लिङ्गमदृश्यम्"

इति याज्ञवल्क्यश्रुतेः[2] स्वातिरिक्तमानान्तरागम्यत्वेन स्वयमेव भासमानं परशिवाख्यपरब्रह्ममहालिङ्ग—"तद् ज्ञानं सद्गुरोर्ज्ञेयं नान्यथा शास्त्रकोटिभिः ॥"

इति शिवरहस्यवचनमप्यस्तीति, लोके महागुरुदयां विना कथं केन प्रकारेण विज्ञायते केनापि प्रकारेण ज्ञातुमशक्यमित्यर्थः । शिष्टं स्पष्टम् ॥

---

1 शिखण्डी=मयूरः मयूराण्डरसन्यायेनेति पूर्वमेवोक्तम् ।
2 याज्ञवल्क्योपनिषदः इत्यर्थः ।

753 [दिवादीनामपि गुरुदययैव लिङ्गमहिमज्ञानकथनम् ]

ब्रह्मणा विष्णुना पूर्वं यल्लिङ्गं ज्योतिरात्मकम् ।
[1]अपरिच्छेद्यमभवत् केन वा परिचोद्यते ॥

754 [तादृशलिङ्गमहिमा ]

बहुनाऽत्र किमुक्तेन ? लिङ्गं ब्रह्म सनातनम् ।
योगिनो यत्र लीयन्ते मुक्तपाशनिबन्धनाः ॥[2]

ननु अस्मदादीनां गुरुदयाव्यतिरेकेण विज्ञातुमशक्यत्वेऽपि ब्रह्मादीनां सर्वज्ञत्वेन तदपेक्षा नास्तीति, कथं उक्तार्थसिद्धिः ? इत्यत्र—

"वराहो विष्णुर्निममज्ज भूमौ
ब्रह्मोत्पपात दिवमाशु गृध्रः"

इति लिङ्गसूत्राभिप्रायेणोक्तं स्थापयति—

ज्योतिरात्मक ज्योतिर्मयं यत् लिङ्गं ब्रह्मणा विष्णुना च पूर्वमपरिच्छेद्यं ज्ञातुमयोग्यमभवत् तत् महाशिवलिंङ्गं केन वा परिचोद्यते ? केन विज्ञायते ? इत्यर्थः ।

ननु ब्रह्माद्यगम्यं लिङ्गं कीदृशम् ? इत्यत्राह—

---

[1] अपरिच्छेद्यं—धर्मतः स्वरूपतश्च इयदिति निर्णेतुमशक्यम् ।
[2] निबन्धनपदं बन्धपर्यायमेव ।

755 [लिङ्गपीठस्वरूपम् ]

पीठिका[1] परमा शक्तिः लिङ्गं साक्षात् परः शिवः ।
शिवशक्तिसमायोगं विश्वं लिङ्गं तदुच्यते ॥

---

अत्र बहुभाषणेन किम् ? विश्वलयगमनकारणं नित्यं ब्रह्मैव लिङ्गं यत्र परब्रह्मात्मनि शिवलिङ्गे सनकादियोगिनः मुक्तपाशनिबन्धनाः विसृष्टाविद्यादिपञ्चक्लेशपाशबन्धाः सन्तः लीयन्ते तादात्म्यं भजन्ते इत्यर्थः ॥

ननु ब्रह्मैव लिङ्गं चेत् किमस्य पीठम् ? इत्यत्राह—

"क्रियाशक्त्यात्मकं पीठं
ज्ञानशक्त्यात्मनः प्रभोः ।"

इति शिवागमवचनात् परमा शक्तिः सर्वोत्कृष्टा क्रियाशक्तिः पीठं साक्षात्परः शिवः चिद्रूपपरमेश्वर एव लिङ्गम् शिवशक्तिसमायोगं शिव-शक्तिसम्बन्धवत्तल्लिङ्गं विश्वं, इति पुराणोक्तेः सर्वजगद्रूपमित्युच्यते

"न वज्रचक्राङ्कसरोरुहाङ्कं लिङ्गाङ्कितं पश्य जगत् भगाङ्कम्"
"ज्ञानकर्मेन्द्रियैर्विश्वं चित्क्रियालिङ्गरूपकम् "

इति पुराणोक्तेः सर्वजगद्रूपमुच्यते इत्यर्थः ॥

---

[1] मनोग्राह्यपरिच्छिन्नरूपेण परिकल्पितः पीठविशेषः—इत्यर्थः ।

## (27) लिङ्गमाहात्म्यस्थलम् (3-3)

### 756 [लिङ्गपूजामहिमा]

ब्रह्मादयः सुरास्सर्वे मुनयः शौनकादयः ।
शिवलिङ्गार्चनादेव स्वं स्वं [1]पदमवाप्नुयुः ॥

---

अत्र—

"तव श्रियै मरुतोऽमर्जयन्त
रुद्र यत्ते जनिम चारु चित्रं
परं यद्विष्णोरुपमं निधायि ॥"

इति ऋग्वेदश्रुतिः । अयमर्थः—भो रुद्र ! मरुतः ब्रह्मादयो देवाः श्रियै विष्णोः पदं स्थानं वैकुण्ठादिकं उपमं दृष्टान्तं निधायि, मनसि निधाय चारु मनोहरं चित्रं विचित्रं जनिम आविर्भावस्थानं लिङ्गं अमर्जयन्त अर्चितवन्तः इत्यर्थः । वैकुण्ठादिस्थानं महैश्वर्यं च विष्णुः शिवलिङ्ग पूजामहिम्ना लब्धवान् इति दृष्टान्तीकृत्य ब्रह्मादयो देवाः सर्वेऽपि शिवलिङ्गं श्रियै पूजितवन्तः इति यावत् ॥

### 757 [शिवस्य सहजसिद्धैश्वर्यवत्त्वम् ]

ननु शिवस्यापि विश्वाधिकत्वादिमहैश्वर्यं क्वचिदुपासनया[2] समागतं किम् ? इत्यत्राह—

---

[1] स्वेच्छानुगुणां उत्तमां पदवीमित्यर्थः ।
[2] इन्द्रादिसमानन्यायेनेति शेषः ।

757

विश्वाधिपत्वमीशस्य लिङ्गमूर्तेः स्वभावजम् ।
अनन्यदेवसादृश्यं श्रुतिराह सनातनी ॥

(27) इति लिङ्गमाहात्म्यस्थलम् (3-3)

---

(28) प्रसादिस्थले जङ्गममाहात्म्यस्थलम् (3-4)

---

758 [जङ्गममाहात्म्यस्थलनिरूपणम् ]

गुरुशिष्यसमारूढलिङ्गमाहात्म्यसम्पदः ।
सर्वं चिद्रूपविज्ञानात् जङ्गमाधिक्यमुच्यते ॥

---

"विश्वाधिको रुद्रो महर्षिः
हिरण्यगर्भं जनयामास पूर्वम् ।
न तत्समश्चाभ्यधिकश्च दृश्यते "

इति श्वेताश्वतरश्रुतेः, लिङ्गमूर्तेः शिवलिङ्गमूर्तेः ईशस्य परमेश्वरस्य अनन्यदेवसादृश्ये[1] विश्वाधिपत्वं चराचरप्रपञ्चनियामकत्वं स्वभावजं स्वतस्सिद्धमिति सनातनी श्रुतिराह इत्यर्थः ॥

अथ गुरुलिङ्गमहत्त्वात् संवेद्यं जङ्गमस्थलं प्रकाशयति—

"आचार्यः पूर्वरूपम् । अन्तेवा-
स्युत्तररूपम् । विद्या सन्धिः ॥"

इति श्रुतेः, गुरुशिष्यमध्यगतशिवलिङ्गमहत्त्वसम्पदः सर्वं विश्वप्रपञ्चं

---

1 अन्यदेवता साम्याभावमित्यर्थः ।

759 [जङ्गमलक्षणम्]

जानन्त्यतिशयाद्ये तु शिवं विश्वप्रकाशकम् ।
स्वस्वरूपतया ते तु जङ्गमा इति कीर्तिताः ॥

---

चिद्रूपविज्ञानात् चित्क्रियारूपत्वेन विज्ञानात् [1]जङ्गमाधिक्यमुच्यते । गुरुशिष्ययोः इष्टप्राणभावेषु तादात्म्यभावनया समारूढलिङ्गमहत्त्वसम्पत्त्या सर्वं विश्वं शिवशक्त्यात्मकमिति[2] विज्ञानमेव जङ्गमाधिक्यमित्यर्थः ॥

अथ ते के जङ्गमाः ? इत्यत्राह—

"तस्य भासा सर्वमिदं विभाति"

ये विश्वप्रकाशकं स्वकीयचित्क्रिया[3]शक्तिभ्यां प्रपञ्चप्रकाशकं शिवं अतिशयेन सर्वासर्वशब्दार्थयोः मायाकार्यकोटिप्रविष्टत्वेन असनातनत्वात् एतज्जीवनभूतज्ञत्वकर्तृत्वयोः सनातनत्वात्, अन्यथा स्वविषयकज्ञान-शून्यत्वेन स्फटिकादिप्रकाशवत् जडत्वप्रसङ्गात् तयोः जीवेश्वरसाधारणी-भूतास्मच्चद्रूपात्मतत्त्वनिजस्वभावत्वात् स्वयं तदनतिरिक्त इति दृढतर-

---

[1] जङ्गमस्यैव सर्वश्रेष्ठत्वमित्यर्थः ।

[2] पुम्भावयुतं सर्वं शक्त्यात्मकमिति च भावः ।

[3] चित्क्रिया=ज्ञानक्रिया ।

760 [जङ्गमानशिवमयत्वम् ]

ये पश्यन्ति जगज्जालं चिद्रूपं शिवयोगतः ।
निर्धूतमलसंस्पर्शाः ते स्मृताः शिवयोगिनः ॥

761

घोरसंसारतिमिरपरिध्वंसनकारणम् ।
येषामस्ति शिवज्ञानं ते मताः शिवयोगिनः ॥

---

निश्चयेन स्वस्वरूपतया ये जानन्ति ते जङ्गमाः इत्यर्थः ॥

अथ शिवयोगित्वेन प्रसिद्धजङ्गममहत्त्वं पञ्चभिः सूत्रैः प्रतिपादयति—

ये जङ्गमाः[1] देवाः विश्वं शिवयोगतः । विश्वस्य शिवसम्बन्धाभावे चिद्बाह्यत्वेन सङ्कल्पतापत्तेः शिवसम्बन्धः अङ्गीकरणीय एव । स च संयोगरूपो न भवति । तस्य क्रियापूर्वत्वेन भिन्नदेशस्थितयोरेवोपपद्यते इति, ब्रह्मबाह्यदेशाभावेन तादात्म्यरूप एवेत्युपपादितत्वात्, चिद्रूपं चित्क्रियास्वरूपमिति पश्यन्ति जानन्ति, ते निर्धूतमलसंस्पर्शाः निर्गताणवादि मलसम्बन्धिनः शिवयोगिनः इति स्मृताः इत्यर्थः ॥

[2]भयङ्करसंसारान्धकारनिवारकं शिवाधिविषयज्ञानं येषामस्ति ते शिवयोगिनः इति मताः स्मृताः इत्यर्थः ॥

---

[1] जङ्गमपदं स्वरूपतः सर्वत्र व्यापनशीलार्थकम् ।

[2] स्वस्य विस्तारकर्मताकरणमेव संसारपदार्थः । तत्काले तदर्थं सर्वकालं प्रयतमानस्य मनसः विवेकप्रच्युतेः अन्धकारात्मकत्वं ज्ञेयम् । अत एव भयङ्करत्वं च ।

762 [जङ्गमानां स्वरूपस्थितिप्रकाराः]

जितकामाः जितक्रोधाः मोहग्रन्थिविभेदिनः ।
समलोष्टाश्मकनकाः[1] साधवः शिवयोगिनः ॥

763

समाः शत्रौ च मित्रे च साक्षात्कृतशिवात्मकाः ।
निःस्पृहाः निरहङ्काराः वर्तन्ते शिवयोगिनः ॥

764 [जङ्गमानां शिवस्वरूपत्वम्]

दुर्लभं हि शिवज्ञानं दुर्लभं शिवचिन्तनम् ।
येषां एतद् द्वयं चास्ति ते हि साक्षात् शिवात्मकाः ॥

---

अथ ते कीदृशाः । कथं तिष्ठन्ति ? इत्यत्राह—

स्पष्टम् ॥

एवं उक्तलक्षणज्ञानसम्पन्नाः साक्षात् शिवाः एवेत्याह—

शिवज्ञानं शिवाधिक्यज्ञानं, शिवचिन्तनं उक्तयुक्तिभिः स्वयमेव शिव इति मननं च दुर्लभं एतद्द्वयं येषामस्ति ते साक्षात् शिवरूपाः[2] इत्यर्थः ।

---

[1] लोष्टे अश्मनि सुवर्णे च आभिमानिकमहत्त्वन्यत्वज्ञानशून्याः इत्यर्थः ।
[2] यथा स्वस्यशिवंमयत्वं सम्पद्येत तथा तपः कृतवन्तः इत्यर्थः ।

765 [जङ्गमानां निरतिशयमहत्त्वम्]

पादाग्ररेणवो यत्र पतन्ति शिवयोगिनाम् ।
तदेव सदनं पुण्यं पावनं गृहमेधिनाम् ॥[1]

766

सर्वसिद्धिकरं पुंसां दर्शनं शिवयोगिनाम् ।
स्पर्शनं पापशमनं पूजनं मुक्तिसाधनम् ॥

767 [निगमनम् ]

महतां शिवतात्पर्यवेदनां अनुमोदिनाम् ।
किं वा फलं न सिद्धयेता सम्पर्कात् शिवयोगिनाम् ॥

(28) इति जङ्गममहत्त्वस्थलम् (3-4)

---

अथ पुनः तेषां महत्त्वं श्लोकद्वयेनाह—

शिवयोगिनां जङ्गमदेवानामित्यर्थः । गृहमेधिनां गृहस्थानामित्यर्थः । पुण्यं पुण्यक्षेत्रमित्यर्थः । पावनं पवित्रम् । शिष्टम् स्पष्टम् ॥

अथैवं तादृशशिवयोगिनां सम्पर्कात् सर्वेप्सितार्थसिद्धिरित्याह—

शिवरहस्याभिप्रायवेदिनां शिवसुखानुमोदिनां महतां सत्पुरुषाणां शिवयोगिनां जङ्गमदेवानां[2] सम्पर्कात्[3] किं वां फलं न सिद्धयेत ? सर्वं सिद्धयेदित्यर्थः ॥

---

1 गृहस्थानामित्यर्थः ।
2 जङ्गमरूपाणां देवानामित्यर्थः ।
3 सम्पर्कात्-सहवासादिति यावत् ।

## (29) प्रसादिस्थले भक्तमाहात्म्यस्थलम् (3-5)

768 [भक्तमाहात्म्यस्थलनिरूपणम्]

गुरोर्लिङ्गस्य माहात्म्यकथनात् शिवयोगिनाम् ।
सिद्धं भक्तस्य माहात्म्यं तथाप्येष प्रशस्यते ॥

769 [तत्र भक्तानां स्वरूपम्]

ये भजन्ति महादेवं परमात्मानमव्ययम् ।
कर्मणा मनसा वाचा ते भक्ता इति कीर्तिताः ॥

---

अथ गुरुलिङ्गजङ्गममहत्त्वलम्पटस्य[1] भक्तस्य महत्त्वं द्वादशसूत्रैः[2] प्रतिपादयति—

गुरुलिङ्गजङ्गमेषु एवं विधमाहत्म्यज्ञानपूर्वकं भक्तेः क्रियमाणत्वेन भक्तमाहात्म्यं सिद्धमिति [3]तथैवायं शास्त्रे प्रशस्यते उत्कर्षेण भण्यते इत्यर्थः ॥

अथ के भक्ताः ? इत्यत्र—

"यद्धि मनसा ध्यायति,
तद्वाचा वदति, तत्कर्मणा करोति"

इति श्रुत्यर्थानुसारेण भक्तस्वरूपमाह—

---

1 एषां महत्त्वं सम्यक् ज्ञातव्यमिति अत्युत्कटाकांक्षायुक्तस्येत्यर्थः ।
2 सूत्रप्रायैः श्लोकैः इतियावत् ।
3 सूत्रे अपि शब्दः एवकारार्थकः इति भावः ।

770 [शिवभक्तेषु जातिभेदाभावः]

दुर्लभा हि शिवे भक्तिः संसारभयतारिणी ।
सा यत्र वर्तते साक्षात् स भक्तः परिगीयते ॥

771 [शिवभक्तेः प्राधान्यम्]

किं वेदैः ? किं ततः शास्त्रैः ?
किं यज्ञैः ? किं तपोव्रतैः ?
नास्ति चेत् शाङ्करी भक्तिः[2]
देहिनां जन्मरोगिणाम् ॥

---

हस्ताभ्यां अर्चनारूपकायिकक्रियया, शिवमूर्तिध्यानरूपमानस क्रियया, स्तुतिरूपवाचिकया च ये परमात्मान लिङ्गरूपिणं महादेवं भजन्ति ते भक्ताः इत्यर्थः ॥

शिवभक्तेषु जातिभेदः अस्ति किम् ? इत्यत्राह—

स्पष्टम् ॥

तस्मात् जननमरणपरिपीडितानां जनानां शिवभक्तिव्यतिरेकेण केनापि सत्कर्मणा प्रयोजनं नास्तीत्याह—

शास्त्रैः वेदार्थानुगैः शिवागमसूत्रपुराणादिभिः इत्यर्थः । शिष्टं स्पष्टम् ॥

---

1 भक्तएवेति व्यवहारः नतुतदीयजातिस्पर्शेन व्यवहार इति भावः ।
2 शिवभक्तिः इत्यर्थः ।

772 [निर्भक्तिककर्मणां व्यर्थता]

शिवभक्तिविहीनस्य सुकृतं चापि निष्फलम् ।
विपरीतफलं च स्यात् दक्षस्यापि महाध्वरे ॥[1]

773 [भक्तेः सत्कर्मतासम्पादनसामर्थ्यम्]

अत्यन्तपापकर्माऽपि शिवभक्त्या विशुद्ध्यति ।
[2]चण्डो यथा पुरा भक्त्या पितृहाऽपि शिवोऽभवत् ॥

774 [शिवभक्तेषु पुण्यपापालेपः]

सुकृतं दुष्कृतं चापि शिवभक्तस्य नास्ति हि ।
शिवभक्तिविहीनानां कर्मपाशनिबन्धनम् ॥

---

अथ शिवभक्तिव्यतिरेकेण विधीयमानं सत्कर्म विफलं विपरीतफलदं-चेति दृष्टान्तपूर्वकमाह—

स्यात् अभवदित्यर्थः ।

अथ शिवभक्त्या दुष्कर्मापि सत्कर्म भवेदिति दृष्टान्तपूर्वकमाह—
शिवः शिवगणाधीशः इत्यर्थः । शिष्टम् स्पष्टम् ॥

नन्वेवं चेत् शिवभक्तानां पुण्यपापसम्बन्धः अस्ति न वा ? इत्यत्राह—

स्पष्टम् ॥

---

1 इदं भावगर्भितं वाक्यं, शिवभक्तिं विनाकृतस्य दक्षयज्ञस्य दृष्टान्तत्व । स्फोरकम् ।

2 चण्डवृत्तान्तः पद्मपुराणे प्रसिद्धः ।

3 पुण्यपापसामान्यमेव कर्मपाशनिमित्त मिति भावः ।

775 [तदुपपादनम्]

शिवाश्रितानां जन्तूनां कर्मणा नास्ति सङ्गमः ।
वाजिनां दिननाथस्य कथं तिमिरजं भयम् ॥[1]

776

निरोध्दुं न क्षमं कर्म[2] शिवभक्तान् विशृङ्खलान् ।
कथं मत्तगजान् रुन्धेत् शृङ्खला बिसतन्तुजा ? ॥

777 [शिवभक्तस्य पूज्यता]

ब्राह्मणः क्षत्रियो वाऽपि वैश्यो वा शूद्र एव वा ।
अन्त्यजोवा शिवे भक्तः शिववन्मान्य एव सः ॥[3]

---

तत् कथम् ? इत्यत्र दृष्टान्तपूर्वकं सूत्रद्वयेनाह—

दिननाथस्य रवेः वाजिनां अश्वानां यथा अन्धकारप्रयुक्तभीः नास्ति, तथा शिवभक्तानां कर्मणा पुण्यपापमयेन कर्मणा सङ्गमः सम्बन्धः नास्तीत्यर्थः ॥

शिवदीक्षया आणवादिमलत्रयस्य निवृत्तत्वेन विशृङ्खलान् शिवभक्तान् कर्म निरोद्धुं न क्षमं न समर्थम् । तत्र दृष्टान्तः—मृणालतन्तुनिर्मिता शृङ्खला यथा मत्तगजं न रुन्धेत । तथा इत्यर्थः ॥

तस्मात् शिवभक्त एव पूज्यः इत्याह—
स्पष्टम् ॥

---

1 सदाप्रकाशमयसूर्यसांनिध्यात् इति भावः ।
2 शिवभक्तकृतानां केषामपि कर्मणां बन्धकत्वमेव नास्तीत्यर्थः ।
3 शिवभक्त्या सर्वविधपाशविमोचनात् ।

778 [शिवभक्तेषु जातिपरिकल्पनाभावः]

शिवभक्तिसमावेशे क्व जातिपरिकल्पना ?
इन्धनेष्वग्निदग्धेषु को वा भेदः प्रकीर्त्यते ?[1]

779 [निगमनम्]

शुद्धाः नियमसंयुक्ताः शिवार्पितफलागमाः ।
अर्चयन्ति शिवं लोके विज्ञेयास्ते गणेश्वराः ॥[2]

(28) इति भक्तमाहात्म्यस्थलम् (3–5)

---

ननु शूद्रादीनां ब्राह्मणाद्यपेक्षया निकृष्टत्वात् कथं तेषां तत्समानत्वम्? इत्यत्राह—

स्पष्टम् ॥

तस्मात् शिवभक्ता एव गणेश्वराः इत्युक्त्वा भक्तमाहात्म्यं समापयति—

ये शुद्धाः दीक्षया परिपूताः नियमसंपन्नाः शिवव्रतिनः शिवार्पितफलागमाः तदर्पितपुण्यपापफलागमाः सन्तः लोके शिवलिङ्गमर्चयन्ति, ते—

"नाशिवस्य शिवोपास्तिः"
"नारुद्रो रुद्रमर्चयेत्"

इत्यादिवचनैः गणेश्वराः इति रुद्राः इति विज्ञेया इत्यर्थः ॥

---

1 सर्वमपि पदार्थजातं तदा केवलं भस्म इत्येव कथ्यते खलु तथेति भावः ।
2 शिवभक्तगणेषु प्रधानभूताः इत्यर्थः ।

## (30) प्रसादिस्थले शरणमहत्त्वस्थलम् (3–6)

780 [शरणमहत्त्ववस्थलनिरूपणम् ]

गुरुलिङ्गादिमाहात्म्यबोधान्वेषणसङ्गतः ।
सर्वात्मना शिवापत्तिः शरणस्थानमुच्यते ॥

781 [शरणस्थलस्वरूपोपापपादनम् ]

ब्रह्मादिविबुधान् सर्वान् मत्वा प्राकृतवैभवान् ।
प्रपद्यते शिवं यत्तु शरणं तदुदाहृतम् ॥

---

अथ गुरुलिङ्गादिमहत्त्वं ज्ञात्वा, शिव एक एव रक्षकः इति प्रपद्यमानस्य[1] शरणस्य महत्त्वं प्रतिपादयति —

गुरु-लिङ्ग शिवयोगि-शिवभक्त-महत्त्वज्ञानान्वेषणसम्बन्धात् सर्वात्मना नानाप्रकारेणापि शिवापत्तिः[2] शिव एक एव रक्षकः इति प्रपन्नता शरणस्थानमित्युच्यते इत्यर्थः ॥

अथ तदेव विशदयति —

'शिव एको ध्येयः शिवशङ्करः सर्वमन्यत् परित्यज्य"

इति श्रुतेः प्राकृतवैभवान् प्रकृतिजन्यसम्पत्ति[3]मतः ब्रह्मविष्ण्वादिदेवान्

---

[1] निश्चयात्मकज्ञानसम्पन्नस्य ।

[2] आपत्तिरित्यत्र उपसर्गस्य आङ प्रोपसर्गार्थकत्वमिति भावः ।

[1] सम्पत्तिः धनादिरूपं ऐश्वर्यम् ।

782 [शरणागतानां स्वरूपम्]

शरण्यः सर्वभूतानां शङ्करः शशिशेखरः ।
सर्वात्मना प्रपन्नस्तं शरणागत उच्यते ॥

783 [शरणार्थिनां स्वरूपम्]

विमुक्तभोगलालस्यः देवतान्तरनिःस्पृहः ।
शिवमभ्यर्थयेन्मोक्षं शरणार्थीति गीयते ॥

---

भुक्त्वा त्यक्त्वा शिवं यत् प्रपद्यते प्रपन्नत्वेन आश्रयते तत् शरणं शरणस्थलमित्युदाहृतं कथितमित्यर्थः ।

अथ शरणागतस्य स्वरूपं विशदयति—

शशिशेखरः शङ्करः परमेश्वरः सर्वभूतानां सकलप्राणिनां शरण्यः[1] रक्षणे समर्थः इति, तं सर्वात्मना सर्वप्रकारेण प्रपन्नः 'रक्ष' इति प्रपन्नः शरणागतः इत्युच्यते इत्यर्थः ॥

अथ शरणार्थिस्वरूपं कथयति—

विमुक्तभोगलम्पटत्ववान् ब्रह्मविष्ण्वादि पदेभ्यां विरक्तः सन् शिवं प्रति[2] मोक्षमभ्यर्थयन् शरणार्थीति गीयते इत्यर्थः ॥

---

[1] शरणे साधुः शरण्यः, शरणं गृहरक्षित्रोः, इत्यमरः ।

[2] मोक्षमेवेति यावत् ।

784 [शरणगतानानां कर्मावश्यकत्वाभावः]

ये प्रपन्नाः महादेवं मनोवाक्कायकर्मभिः ।
तेषां तु कर्मजातेन किं वा देवादितर्पणैः ?

785

सर्वेषामपि यज्ञानां [2]क्षयः स्वर्गः फलायते ।
अक्षयं फलमाप्नोति प्रपन्नः परमेश्वरम् ॥

786 [पापवतामपि प्रपत्तेरेवकर्तव्यता]

प्रपन्नपारिजातस्य भवस्य परमात्मनः
पपत्त्या किं न जायेत ? पापिनामपि देहिनाम् ॥

---

एवं शिवं प्रपन्नानां किमपि सत्कर्म[1]माऽस्तु इत्याह—

ये महादेवं शिवं मनोवाक्कायकर्मभिः ध्यानस्तुतिपूजाकर्मभिः 'रक्ष' इति प्रपन्नानां तेषां कर्मजातेन यज्ञादिकर्मसमूहेन देवप्रभृतितर्पणेन च किं वा ? किमपि प्रयोजनं नास्तीत्यर्थः ॥

कुतः ? इत्यत्र तदर्थं सूत्रद्वयेन प्रतिपादयति—

अक्षयं फलम्—मोक्षमित्यर्थः । शिष्टं स्पष्टम् ॥ [पापिनां कथम् ? इत्यत्राह—

---

1 लोकेऽस्मिन् पापादिकर्मण, निरासाय यत् उत्तमं कर्मेति कथ्यते तदित्यर्थः ।

2 दिनेदिने क्षीणतामापद्यमानः ।

787 [शरणागतानां श्रेष्ठत्वम्]

प्रपन्नानां महादेवं परिपक्वन्तरात्मनाम् ।
जन्मैव जन्म[3], नान्येषां वृथा जननसंज्ञिनाम्

788

दुर्लभं मानुषं प्राप्य जननं ज्ञानसाधनम् ।
ये न जानन्ति देवेशं तेषां आत्मा निरर्थकः ॥

---

शरणागतकल्पद्रुमस्य परमात्मनः शिवस्य प्रपत्त्या रक्षकत्वेन प्रपत्त्या[1] पापिनां प्राणिनामपि किं[2] न जायेत ? सर्वं भवेदित्यर्थः ॥

तस्मात् शिवप्रपन्ना एव श्रेष्ठाः इत्याह--

महादेवं प्रपद्य परिपक्वान्तःकरणानां पुंसां जन्मैव जन्मफलम् । वृथाजननभाजां अप्रपन्नानां जन्म न—जन्मैव न, वृथेत्यर्थः ॥

अथ तदेव विशदयति—

दुर्लभं मानुषं जननं जन्म प्राप्य ज्ञानसाधनं आत्मज्ञानप्रदं देवेशं परशिवं ये न जानन्ति, तेषां आत्मा जीवः निरर्थकः अप्रयोजकः इत्यर्थः ॥

अथ—

789 (निगमनम्)

"कुलं पवित्रं जननी कृतार्था"

---

[1] आश्रयणेनेत्यर्थः ।
[2] किं वा उत्तमं फलमित्यर्थः ।
[3] सार्थकं जन्मेत्यर्थः ।

तत् कुलं हि सदा शुद्धं सफलं तस्य जीवितम् ।
यस्य चित्तं शिवे साक्षात् विलीनमबहिर्मुखम् ॥

(30) इति शरणमहत्त्वस्थलम् (3-6)

—०—

---

इति सूतसंहितानुसारेण शरणमहत्वं प्रकाश्य, तत् स्थल समापयति—

यस्य चित्तं सदा साक्षात् शिवलिङ्गे अबहिर्मुखं बहिर्मुखं यथा न भवति तथा विलीनं विशेषेण लयं गतम्, तत् कुलं शुद्धम्, तस्य जीवितं जीवनं सफलमित्यर्थः ॥

——

## (31) प्रसादिस्थले प्रसादमहत्त्वस्थलम् (3-7)

790 [प्रसादमहत्त्वस्थलनिरूपणम्]

गुरुलिङ्गादिमाहात्म्यविशेषानुभवस्थितिः ।
यस्मात् शिवप्रसादात् स्यात् तदस्य महिमोच्यते ॥

791 [शिवप्रसन्नताहेतुः]

सदा लिङ्गैकनिष्ठानां गुरुपूजानुषङ्गिणाम् ।[2]
प्रापन्नानां विशुद्धानां प्रसीदति महेश्वरः ॥

---

अथ पूर्वोक्तगुरुलिङ्गादिमहत्त्वानुभवस्थितेः[1] शिवप्रसादलभ्यत्वात् तत्प्रसादमहत्तां कथयति—

गुरु-लिङ्ग-जङ्गम-शिवभक्त-शिवशरणमहत्त्वविशेषानुभवस्थितिः यस्मात् कारणात् शिवप्रसादात् स्यात्, तस्मात् कारणात् अस्य शिवप्रसादस्य महिमा महत्त्वं उच्यते कथ्यते इत्यर्थः ॥

ननु शिवप्रसादः कथं गुरुलिङ्गादिमहत्त्वविशेषानुभवस्थितिहेतुः ? इत्यत्राह—

स्पष्टम् ।

---

[1] तन्महत्त्वभावनया तद्रहस्यतत्त्वसाक्षात्कारजन्यसुखानुभवस्थितेरित्यर्थः ।
[2] गुरुपूजकानामिति यावत् ।

792 [शिवप्रसादस्वरूपम्]

प्रसादोऽपि महेशस्य दुर्लभः परिकीर्त्यते ।
घोरसंसारसन्तापनिवृत्तिर्येन जायते ॥

793 [सर्वकर्मणामपि शिवप्रसन्नताहेतुत्वम्]

यज्ञास्तपांसि मन्त्राणां जपः चिन्ता प्रबोधनम् ।
प्रसादार्थं महेशस्य कीर्तितानि न संशयः ॥

---

स च शिवप्रसादः कीदृशः ? तेन किं भवति ? इत्यत्राह—

इतरेषां अलिङ्गिनां दुर्लभः[1] तेन शिवप्रसादेन भयङ्करसांसारिकतापत्रयनिवृत्तिः जायते इत्यर्थः ॥

ननु—

"तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति[2]
यज्ञेन दानेन तपसानाशकेन"[3]

इति श्रुतेः, यज्ञादीनां शिवज्ञानसाधनत्वश्रवणात्, तेनैव सांसारिकदुःखनिवृत्तेः किं महेश्वरप्रसादेन ? इत्यत्राह—

अत्र चिन्ता ध्यानं, प्रबोधनं शिवाधिक्यज्ञानम् ॥ शिष्टं स्पष्टम् ॥

---

[1] प्रसादः इति शेषः ।
[2] ज्ञातुं इच्छन्ति ।
[3] अनाशकेन-अचञ्चलेन स्थिरेण ।

794 [शिवप्रसन्नताऽऽवश्यकता]

प्रसादमूला सर्वेषां भक्तिरव्याभिचारिणी ।
शिवप्रसादहीनस्य भक्तिश्चापि न सिद्ध्यति ॥

795

गर्भस्थो जायमानो वा जातो वा[2] ब्राह्मणोऽथ वा ।
अन्त्यजो वाऽपि मुच्येत प्रसादे सति शाङ्करे ॥

796 [शिवप्रसन्नताया महिमा]

ब्रह्माद्याः विबुधाः सर्वे स्वस्वस्थाननिवासिनः ।
नित्यसिद्धा भवन्त्येव[3] प्रसादात् पारमेश्वरात् ॥

---

ननु मोक्षस्य भक्तिमूलत्वात् किं प्रसादेन ? इत्यत्राह—

सर्वेषां समस्तजनानां अव्यभिचारिणी अनन्यगामिनी भक्तिः प्रसादमूला । शिवप्रसादशून्यस्य भक्तिरेव[1] न सिद्ध्यतीत्यर्थः ॥

तस्मात्—

स्पष्टम् ॥

अथ ब्रह्मादयोऽपि शिवप्रसादेनैव नित्यसिद्धाः इत्यत्राह—

स्पष्टम्—

---

1 अचञ्चला भक्तिरिति यावत् ।
2 तत्तद्दशायामेव मुक्तिरिति भावः ।
3 तेषां मुक्त्यर्थं स्थानान्तरगन्यावश्यकता नास्तीत्यर्थः ।

797 [शिवज्ञान-तत्प्रसादयोः कार्यकारणभावः]

प्रसादे शाम्भवे सिद्धे परमानन्दकारणे
सर्वं शिवमयं विश्वं दृश्यते नात्र संशयः ॥ [1]

798 [शिवप्रसाद महत्त्वम्]

संसारचक्रनिर्वाहनिमित्तं कर्म केवलम् । [2]
प्रसादेन विना शम्भोः न कस्यापि निवर्तते ॥

---

ननु सर्वात्मक शिवज्ञानेनैव सांसारिकदुःखनिवृत्तेः किं प्रसादेन ? इत्यत्र—

"भोक्ता भोग्यं प्रेरयिता
भोगोपकरणानि च ।
सर्वं शिवमयं भाति
प्रसादात् पारमेश्वरात् ॥

इति सूतसंहितावचनानुसारेणाह—

स्पष्टम् ॥

अथ शिवप्रसादमहत्त्वं पुनः सूत्रद्वयेन कथयति—

संसारचक्रनिर्वाहकारणं कर्मैव तत् यज्ञादिना न नश्यति । तस्यापि कर्मरूपत्वेन पुनः परिपोषकत्वात् । तस्मात् कस्यापि शिवप्रसादेन विना कर्म न नश्यतीति भावः ॥

---

1 यथा आम्रचम्पकादिवृक्षेषु सर्वं तन्मयमेव भाति तद्वदित्यर्थः !

2 अनिवार्यकर्मेति यावत् ।

799 [निगमनम्]

बहुनाऽत्र किमुक्तेन ? नास्ति नास्ति जगत्त्रये ।
समानमधिकं चापि प्रसादस्य[1] महेशितुः ॥

800

शिवप्रसादे सति योगभाजि सर्वं शिवैकात्मतया विभाति ।
स्वकर्ममुक्तः शिवभावितात्मा स प्राणलिङ्गीति निगद्यतेऽसौ ॥

——

इतिश्रीमत्षट्स्थलब्रह्मिणा
शिवयोगिनाम्ना रेणुकाचार्येण प्रणीते
सिद्धान्तशिखामणौ प्रसादिनः
सप्तविधस्थलप्रसंगो
नाम एकादशः परिच्छेदः
समाप्तः

——

स्पष्टम् ॥

एवंरूपप्रसादसिद्धः प्रसाद्येव प्राणलिङ्गीत्याह—

योगभाजि स्वरूपहानिवृद्धिव्यतिरेकेण सृजनीयसमरसशिवयोगवति शिवप्रसादे सति सिद्धे सति सर्वविश्वं कृत्स्नं जगत् शिवैकात्मतया शिवाभेदेन विभाति ।

तस्मात् शिवभावितात्मा शिवाभेदेन भावितस्वरूपवान् सोऽसौ प्रसादी

[1] प्रसादेन समानं प्रसादादधिकं वा इति भावः ।

## (31) इति[1] प्रसादमहत्त्वस्थलम् (3-7)

इति तृतीयं
प्रसादिस्थलं समाप्तम्

—o— —

मुक्तः— कर्मणोऽपि शिवमयत्वेन, स्वस्वरूपतया प्रतिबन्धकत्वात्[2] स्वकर्मपाशविनिर्मुक्तः सन् प्राणलिङ्गी इति निगद्यते कथ्यते इत्यर्थः ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारधुरीण
श्रीमरितोण्टदार्येण विरचितायाम्
तत्त्वप्रदीपिकाख्यायां सिद्धान्तशिखामणि-
व्याख्यायां प्रसादिनः
सप्तविधप्रसङ्गो नाम
एकादशः परिच्छेदः
समाप्तः

1 स्वस्वरूपापरित्यागे बन्धकत्वं कर्मणां अनिवार्यमेवेति भावः ।

2 शिवप्रसाद- (क:)

॥ श्री शिवाय नमः ॥

# सिद्धान्तशिखामणौ

## द्वादशः परिच्छेदः

## प्राणलिङ्गिनः पञ्चस्थलप्रसङ्गः ॥

### (4) चतुर्थं प्राणलिङ्गिस्थलम्

801 [प्राणलिङ्गिस्थलनिरूपणम्]

अगस्त्य उवाच—

भक्तो माहेश्वरश्चेति प्रसादीति निबोधितः ।
एक एव कथं चैषः[1] प्राणलिङ्गीति कथ्यते ? ॥

802 [लिङ्गदीक्षासम्पन्नस्य ज्ञानयोगः प्राणलिङ्गित्वं च]

भक्तो माहेश्वरश्चैषः प्रसादीति च कीर्तितः ।
कर्मप्राधान्ययोगेन ज्ञानयोगोऽस्य कथ्यते ॥

---

अगस्त्य उवाच—

एक एव भक्तो माहेश्वरः प्रसदीति बोधितः । एष च कथं केन प्रकारेण प्राणलिङ्गीति कथ्यते ? इति प्रश्नार्थः ॥

---

[1] केन धर्मविशेषेण किंजन्येन वा धर्मेण अस्य प्राणलिङ्गीति संज्ञा ? इति प्रश्नः ।

श्री रेणुकउवाच—

लिङ्गं चिदात्मकं ब्रह्म तच्छक्तिः प्राणरूपिणी ।
तद्रूपलिङ्गविज्ञानी प्राणलिङ्गीति [1]कथ्यते ॥

---

एषः अयं शिवलिङ्गदीक्षासम्पन्नः कर्मप्राधान्ययोगेन एवंरूपकर्मकाण्डोक्तक्रियाप्रधानयोगेन 'भक्तः' इति, 'माहेश्वरः' इति, प्रसादी' इति च कीर्तितः । अस्य एवंविधरूपत्रयसम्पन्नस्य ज्ञानयोगः ज्ञानकाण्डोक्तज्ञानयोगः कथ्यते—अनेन ज्ञानयोगेन प्रसाद्येव प्राणलिङ्गीत्युच्यते इत्यर्थः ॥[2]

803 [प्राणलिङ्गिपदार्थविवरणम्]

अथ कोऽयं प्राणलिङ्गी ? इत्यत्र —

"सर्वतत्त्वमयः प्राणः सर्वज्ञानमयः शिवः ।
अनयोर्योग एवैतत् प्राणलिङ्गमिहोच्यते ॥"

इति वीरागमोक्तप्राणलिङ्गवान् प्राणलिङ्गी [3]इत्याह—

चिद्रूपं ब्रह्मैव शिवलिङ्गं तच्छक्तिः शिवलिङ्गपीठशक्तिः प्राणरूपिणी प्रणवात्मकप्राणस्वरूपवतो प्राणस्य वेद्यसंस्कारलक्षणबिन्दुघटितत्वात् चित्क्रियासामरस्यलक्षणोन्मेषशक्तिघटितत्वाच्च सर्वतत्त्वमयत्वं उक्तम् । तद्रूपलिङ्गविज्ञानी तत्प्रकारकलिङ्गज्ञानवान् प्राणलिङ्गीति कथ्यते इत्यर्थः ॥

---

[1] इति यावत्—(ख)
[2] इत्याशयेनाह—(ख)
[3] सित्यंते—(ग)

805

प्राणलिङ्गिस्थलं चैतत् पञ्चस्थलसमन्वितम् ।
प्राणलिङ्गिस्थलं चादौ प्राणलिङ्गार्चनं ततः ।
शिवयोगसमाधिश्च ततो लिङ्गनिजस्थलम् ।
अङ्गलिङ्गस्थलं चाथ क्रमादेषां भिदोच्यते ॥

806 [प्राणलिङ्गिस्थलनिरूपणम्]

(32) प्राणलिङ्गिस्थले-प्राणलिङ्गिस्थलम् (4-1)

---

804 [अस्य स्थलस्या वान्तरभेदः]

अथ अस्यापि स्थलभेदाः सन्ति किम्? इत्यत्राह—

स्पष्टम् ॥

[अस्य प्राणलिङ्गिस्थलस्य पञ्चभेदाः—

1 प्राणलिङ्गिस्थलम् ।
2 प्राणलिङ्गार्चनस्थलम् ।
3 शिवयोगसमाधिस्थलम् ।
4 निजलिङ्गस्थलम्
5 अङ्गलिङ्गिस्थलम् चेति ।]

अथ—"प्राणेष्वन्तर्मनसो लिङ्गमाहुः"[1] इति

"ऊर्ध्वं प्राणमुन्नयति अपानं प्रत्यगस्यति ।
मध्ये वामनमासीनं विश्वेदेवा उपासते ॥"

इति अथर्वशिरः-कठवल्लीश्रुत्यनुसारेण प्राणलिङ्गिस्थलं पञ्चभिः सूत्रैः

---

[1] मनसो लिङ्गं लिङ्गमाहुः (ख)
[2] इति च (ख)

807 [प्राणलिङ्गशब्दार्थः]

प्राणापानसमाघातात् कन्दमध्यात् यदुत्थितम् ।
प्राणलिङ्गं तदाख्यातं प्राणापाननिरोधिभिः ॥

808

प्राणो यत्र लयं याति भास्करे तुहिनं यथा ।
तत् प्राणलिङ्गमुद्दिष्टं तद्धारी स्यात् तदाकृतिः ॥

---

प्रतिपादयति—

प्राणापानसमाघातात् देशिकोपदेशेन[1] प्राणापानवायुसङ्घट्टने सति। कन्दमध्यात् नाभिकन्दमध्यात् यत् ज्योतिः उत्थितम्, उद्भूतं भवति, तत् ज्योतिः प्राणलिङ्गमिति प्राणापानवायुनिरोधवद्भिः शिवयोगिभिः आख्यातं कथितमित्यर्थः ॥

ननु इदं केन[2] विज्ञातम्? इत्यत्राह—

प्राणः प्राणवायुः यत्र यस्मिन् परब्रह्ममयशिवलिङ्गे लयं भास्करे तुहिनमिव याति, तस्मात् प्राणलिङ्गमिति उद्दिष्टम्[3], तद्धारी तत्परामर्शी तदाकृतिः तत्स्वरूपः स्यात् इत्यर्थः । देशकालाद्यचुम्बितत्वेन सामान्याकारेण भासमानचिदहन्तैव प्राणलिङ्गमित्यर्थः ॥

---

[1] गुरूपदेशपरिज्ञानरहस्यज्ञानानुगुणं प्रवर्तने कृते इति भावः ।
[2] केन प्रयोगविधानेनेत्यर्थः ।
[3] शिष्यमुद्दिश्य उपदेशरूपेण दत्तमित्यर्थः ।

809 [प्राणलिङ्गस्फुरणस्थानम्]

ज्ञानिनां योगयुक्तानां अन्तः स्फुरति दीपवत् ।
चिदाकारं परं ब्रह्म लिङ्गमज्ञैर्न भाव्यते ॥

810 [एतत्त्यागस्य मौर्ख्यहेतुता]

अन्तः स्थितं परं लिङ्गं ज्योतीरूपं शिवात्मकम् ।
विहाय बाह्यलिङ्गस्थाः विमूढाः इति कीर्तिताः ॥

---

अथ तल्लिङ्गं केषां स्फुरति ? इत्यत्राह—

चिदाकारं स्फुरणरूपं परब्रह्मलिङ्गं [1]परब्रह्ममयप्राणलिङ्गं योगयुक्तानां शिवयोगयुक्तानां ज्ञानिनां शिवज्ञानिनां अन्तः हृदयकमले दीपवत् स्फुरति प्रकाशते । अज्ञैः गुरूपदेशरहितैः प्राकृतैः[2] न भाव्यते न हृदयङ्गमीक्रियते ।[3]

"हृदये वै ब्रह्म सोमसूर्याग्निमण्डले[4]
निवातदीपोपमस्थायि ह्यन्तर्ज्योतिः पुरुषः"

इत्याद्युपनिषत्प्रसिद्धम् ॥

अथ एतादृशप्राणलिङ्गं विहाय बाह्यलिङ्गनिष्ठाः मूढाः इत्याह—

अत्र बाह्यलिङ्गं इष्टलिङ्गातिरिक्तप्राकृतलिङ्गपरम् इष्टलिङ्गस्य चिदानन्दघनत्वेन आन्तरत्वात् इति भावः ॥

---

[1] परब्रह्ममयं—(ख)
[2] केवलं भौतिकजीवनयुतैः इत्यर्थः ।
[3] हृदयङ्गमीक्रियते=साम्यक् ज्ञानं यथा स्यात् तथा क्रियते इत्यर्थः ।
[4] निवातदीपः—वाताघातनिमित्तचलनशून्यः दीपः ।

8।1 [प्राणलिङ्गिस्वरूपम्]

संविल्लिङ्गपरामर्शी बाह्यवस्तुपराङ्मुखः ।
यः सदा वर्तते योगी प्राणलिङ्गी स उच्यते ॥[1]

8।2 [तन्निष्ठासम्पादनोपायः]

मायाविकल्पजं विश्वं हेयं संचिन्त्य नित्यशः ।
चिदानन्दमये लिङ्गे विलीनः प्राणलिङ्गवान् ॥

---

तस्मात् बाह्यलिङ्गविमुखः सन् चिल्लिङ्गपरामर्श्येव प्राणलिङ्गी इत्याह—

बाह्यवस्तुशब्देन बाह्यलिङ्गं तत्पूजासाधनीभूतद्रव्यं च कथ्यते। तत्र विमुखः सन् सदा निरन्तरं संविल्लिङ्गपरामर्शी अभ्यन्तरे चिद्रूपप्राणलिङ्गविचारवान् यः शिवयोगी वर्तते, सः शिवयोगी प्राणलिङ्गी इति कथ्यते इत्यर्थः ।

ननु बाह्यलिङ्गादौ वैमुख्यं[2] किं निबन्धनम् ? इत्यत्राह—

विश्वं मायाविकल्पजं मायिकगुणभेदसञ्जातमिति हेयं त्यजनीयमिति सञ्चिन्त्य, सम्यग्विभाव्य नित्यशः सदा चिदानन्दमये

---

[1] कथ्यते=(घ)

[2] अरुचिरितियावत् ।

813 [लिङ्गस्यपणिपीठत्वोपपत्तिः]

सत्ताप्राणमयी शक्तिः सद्रूपं प्राणलिङ्गकम् ।
तत्सामरस्यविज्ञानात् प्राणलिङ्गीति कथ्यते ॥

(32) इति प्राणलिङ्गिस्थलम् (4-1)

---

सच्चिदानन्दरूपे लिङ्गे प्राणलिङ्गे विलीनः मनोलयवान् प्राणलिङ्गी प्राणलिङ्गवान् इति कथ्यते इत्यर्थः ॥

ननु चिल्लिङ्गस्य नादबिन्दुकलातीतत्वात् प्राणस्य नादबिन्दुकलारूपत्वात्[1] कथं तस्य पीठरूपत्वम् सम्भवति ? इति शङ्कां शमयन् प्राणलिङ्गिस्थलं समापयति—

सतो भावः सत्तेति अस्मीत्युत्तमपुरुषा[2]न्तर्गतस्फूर्तिरेव चिल्लिङ्गस्य प्राणमयी जीवनभूता शक्तिः तादृशस्फुरणाभावे जडत्वप्रसङ्गात्, सद्रूपं तादृशस्फुरणवदुत्तमपुरुषमयं प्राणलिङ्गमित्यर्थः । तत्सामरस्यविज्ञानात् तयोः शिवशक्त्योः अन्योन्यसामरस्यविज्ञानात् प्राणलिङ्गीति कथ्यते इत्यर्थः ॥

---

[1] "नादबिन्दुकलारूपः ज्ञानिना प्राण उच्यते" इति वीरागमः ।

[2] त्युत्तरपुरुषः _ (स)

## (33) प्राणलिङ्गिस्थले प्राणलिङ्गार्चनस्थलम् (4-2)

814 [प्राणलिङ्गार्चनस्थलनिरूपणम्]

अन्तर्गतं चिदाकारं लिङ्गं शिवमयं परम् ।
पूज्यते [1]भावपुष्पैर्यत् प्राणलिङ्गार्चनं हि तत् ॥

815 [प्राणलिङ्गार्चनक्रमः]

अन्तःपवनसंस्पृष्टे[2] सुसूक्ष्माम्बरशोभिते ।

---

अथ प्राणलिङ्गिना विधीयमानसकलयोगशास्त्रप्रसिद्धप्राणलिङ्गार्चनप्रकारं सप्तभिः सूत्रैः प्रतिपादयति—

हृत्कमलगतं चिदाकारं, घटस्य कम्बुग्रीवादित्त्वमिव चित्स्फुरणमाकारं स्वरूपं यस्य तादृशं परं सर्वोत्कृष्टं यत् शिवमयं लिङ्गं शिवस्वरूपविश्वप्राणलिङ्गं भावपुष्पैः अन्तकरणवृत्तिविशेषैः पूज्यते, तत् प्राणलिङ्गार्चनमिति हि प्रसिद्धमित्यर्थः ॥

अथ कुत्र पूजनीयम्? इत्यत्र प्राणलिङ्गाश्रयभूतोर्ध्वहृत्कमलम् वर्णयित्वा भावपुष्पैः पूजनीयमित्याह—

---

1 परिशुद्धेन मनसा इति भावः ।

2 अन्तःपवनः=प्राणवायुः । वक्ष्यमाणहृदालये इत्यस्य विशेषणं संस्पृष्टे इत्यादि ।

816

मूर्धन्यचन्द्रविगलत्सुधासेकातिशीतले ।
बद्धेन्द्रियनवद्वारे बोधदीपे हृदालये ॥

817

पद्मपीठे समासीनं चिल्लिङ्गं शिवविग्रहम् ।
भावयित्वा सदाकालं पूजयेत् भाववस्तुभिः ॥

818 [प्राणलिङ्गार्चनसाधनानि]

क्षमाभिषेकसलिलं विवेको वस्त्रमुच्यते ।
सत्यमाभरणं प्रोक्तं वैराग्यं पुष्पमालिका ॥

---

अन्तःपवनसंस्पृष्टे प्राणवायुव्याप्ते सुसूक्ष्माम्बरशोभिते अतिसूक्ष्माकाशविलसिते ब्रह्मरन्ध्रगतपूर्णचन्द्रमण्डलस्रवत्सुधासेकेन अतिशीतले प्रतिबद्धश्रोत्रादिपञ्चेन्द्रियनवद्वारे शिवज्ञानप्रदीपे ऊर्ध्वहृदयसदने पद्मपीठे द्वादशदलकमलकर्णिकायां समासीनं विद्यमानं शिवविग्रहं मङ्गलमूर्तिम् चिल्लिङ्गम् प्राणलिङ्गं भावयित्वा गुरूपदिष्टप्रकारेण ध्यात्वा, भाववस्तुभिः मानसिकपदार्थैः[2] सदा पूजयेत् इत्यर्थः ॥

अथ तानि वस्तूनि कानि ? इत्यत्राह—

---

1 अस्याः प्रक्रियायाः तन्त्रार्णवे द्वितीयतरङ्गे विस्तरः द्रष्टव्यः ।
2 शुद्धभावरूपैरिति यावत् । भावाश्चैते आत्मगुणरूपाः इति अग्रे स्पष्टम् ।

819

गन्धः समाधिसम्पत्तिः अक्षता निरहङ्कृतिः ।
श्रद्धा धूपो महाज्ञानं जगद्भासिप्रदीपिका ॥

820

भ्रान्तिमूलप्रपञ्चस्य नैवेद्यं तन्निवेदनम् ।
मौनं घण्टापरिस्पन्दः ताम्बूलं विषयार्पणम् ।

821

विषयभ्रान्तिराहित्यं तत्प्रदक्षिणकल्पना ।
बुद्धेः तदात्मिका शक्तिः नमस्कारक्रिया मता ।

822

एवंविधैः भावपुष्पैः उपचारैरदूषितैः ।
प्रत्युन्मुखमना भूत्वा पूजयेल्लिङ्गमान्तरम् ॥

---

[1]क्षमैव अभिषेकोदकम् ।
नित्यानित्यवस्तुविवेक एव वसनम् ।
सत्यं अननृतवचनं आभरणम् ।
वैराग्यं इहामुत्रफलभोगविराग एव कुसुममालिका ।
चित्तैकाग्रतैव गन्धः ।
निरहङ्कार एव अक्षता ।
विश्वप्रकाशकं महाज्ञानं दीपः ।

---

1 अथैषां आत्मगुणानां स्वरूपं विव्रियते ।

## (33) इति प्राणलिङ्गार्चनस्थलम् (4-2)

---

अत्र भ्रान्तिशब्देन अज्ञानं लक्ष्यते । नाहमीश्वरः इत्यज्ञानस्य मूलप्रपञ्चस्य शरीराद्यहङ्कारवर्गस्य यत् निवेदनं तत् नैवेद्यम् ।

मौनं घण्टानादः । तस्य अनाहतनादानुसन्धानहेतुत्वात् ।

विषयाणां मातृमानमेयात्मकानां फेनादेस्तरङ्गद्वारा समुद्रैकलोलीभाव इव, मेयं माने, मानं मातरि, तं परमप्रमातरि ज्योतिर्लिङ्गे लयचिन्तनमेव पूगपर्णचूर्णात्मकताम्बूलसमर्पणमित्यर्थः ।

विषयाणां शब्दादीनां शिवापेक्षया भेदभ्रान्तिराहित्यं प्रदक्षिणम् ।

बुद्धेः तदात्मिका लिङ्गरूपता शक्तिः सामर्थ्यं बुद्धिवृत्तेर्लिङ्गे लयः इत्यर्थः । स च नमस्कारः ।

823 [निगमनम्]

एवंविधैः भावशुद्धैः अनिन्दितैरुपचारैः अबहिर्मुखमनाः सन् आन्तरं चिल्लिङ्गं प्राणलिङ्गं पूजयेत् इत्यर्थः

---

1 अनिन्दितैः उत्तमगतिहेतुभिरितियावत् ।

## (34) प्राणलिङ्गिस्थले शिवयोगसमाधिस्थलम् (4-3)

824 [शिवयोगसमाधिस्थलनिरूपणम्]

अन्तःक्रियारतस्यास्य प्राणलिङ्गार्चनक्रमैः ।
शिवात्मध्यानसम्पत्तिः समाधिरिति कथ्यते ॥

825 [समाधिसाधनविधानम्]

सर्वतत्त्वोपरिगतं सच्चिदानन्दभासुरम् ।
स्वप्रकाशमनिर्देश्यं अवाङ्मनसगोचरम् ॥

---

अथ

"चित्तवृत्तिनिरोधो योगः"

इति योगसूत्रानुसारेण प्राणलिङ्गार्चनलभ्यशिवयोगसमाधिस्थलं निरूपयति—

प्राणलिङ्गार्चनक्रमैः पूर्वोक्तप्राणलिङ्गार्चनप्रकारैः अन्तरङ्गक्रियातत्पर-स्यास्य प्राणलिङ्गिनः शिवात्मध्यानसम्पत्तिः लिङ्गाङ्गरूपशिवजीवसंमानसामरस्यानुसन्धानसम्पत्तिरेव समाधिरित्यर्थः ॥[1]

अथ तत् कथम् ? इत्यत्र—

''योऽसावसौ पुरुषः सोऽहम्''

इतिश्रुत्यनुसारेण [2]अजपागायत्रीरूपशिवयोगेन समाधिं कथयति—

---

1 तथा च 'चित्तवृत्तिनिरोधो योगः' इति सूत्रे योगपदं प्रधानाङ्गिभूत-समाधिपरमिति भावः ।

2 तत्रात्र सजपा अजपेति गायत्रीद्विविधा इति भावः ।

826

उमाख्यया महाशक्त्या दीपितं चित्स्वरूपया ।
हंसरूपं परात्मानं सोहंभावेन भावयेत् ॥

827

तदेकतानतासिद्धिः समाधिः परमो मतः ।

---

सर्वतत्त्वोपरिगतं भूम्यादिशिवान्तषट्त्रिंशत्तत्त्वोत्तीर्णत्वेन विद्यमानं सच्चिदानन्दरूपेण प्रकाशमानम्—

"यतो वाचो निवर्तन्ते ।
अप्राप्य मनसा सह ॥"[1]

इति श्रुतेः वाङ्मनोमार्गातीतं, अत एव 'इदमेतादृक्' इति लक्षितुमशक्यं, प्रत्यक्षादिमानान्तरागम्यं[2] शुक्लपटन्यायेन स्वसमवेतस्फुरणरूपोमाख्यमहाशक्तिप्रदीपितं हंसरूपं परमात्मानं सोऽहंभावेन स एवाहमिति भावेन भावयेत् । तदेकतानतासिद्धिः[3] तयोर्जीवेश्वरयोः एकत्वसिद्धिः परमः समाधिः उत्कृष्टसमाधिः इति मतं संमतमित्यर्थः ॥

828

तच्छब्दवाच्यस्य षडध्वोत्तीर्णत्वेन प्रसिद्धस्य परमात्मनः—

---

1 'आनंदं ब्रह्मणो विद्वान् न बिभेति कदाचनेति' इति तदुत्तरभागः ।
2 साधनामात्रगम्यमितिहृदयम् ।
3 'एकतानोऽनन्यवृत्तिः' इत्यमरः ।

829 [समाधिलक्षणम्]

परब्रह्म महालिङ्गं प्राणो जीवः प्रकीर्तितः ।
तदेकभावमननात् समाधिस्थः प्रकीर्तितः ॥

" अहंशब्दस्य रूढत्वात्
लोके जीवात्मवस्तुनि ।"

इति सूतसंहितोक्तेः, अकारादिहकारान्तवर्णाध्वपाशबद्धस्य जीवात्मनश्च—
"अहमस्मि प्रथमं च"

इति,

'अहमादिर्हि देवानाम्'
अहं सर्वस्य प्रभवः
मत्तः सर्वं प्रवर्तते ॥

इत्यादिप्रमाणबलात् ।

"अकारः शिव आख्यातः
हकारः शक्तिरुच्यते ॥

इति वक्ष्यमाणप्रकारेण षडध्वकारणीभूतानाहतनादलक्षणपरावाकुछक्तिमयास्मद्रूपसमाविष्टात्मकत्वानतिरिक्तत्वेन तादात्म्यचिंतनं[1] समाधिरिति भावः ॥

अथ—

"प्राणरूप इह जीव उच्यते
लिङ्गरूप इति शङ्करः स्मृतः ।

---

1 अनतिरकेः अभेदः । इदंच तन्त्रमार्गेण समाधिपदार्थविवरणमिति ध्येयम् ।

2 अनयोः जीवशङ्करयोः वेदिता ज्ञाता इत्यर्थः ।

830 [सकलसमाधिवर्णनम्]

अन्तष्षट्चक्ररूढानि पङ्कजानि विभावयेत् ।
ब्रह्मादिस्थानभूतानि भ्रूमध्यान्तानि मूलतः ॥

831

भ्रूमध्यादूर्ध्वभागे तु सहस्रदलमम्बुजम् ।
भावयेत्तत्र विमलं चन्द्रबिम्बं तदन्तरे ॥

---

यस्तदैक्यमिति वेदिताऽनयोः[1]
प्राणलिङ्गविदसौ शिवयोगी ॥

इति शङ्करसंहितावचनानुसारेण समाधिस्थस्य लक्षणमाह —

महालिङ्गमेव परब्रह्म परब्रह्माख्यपरशिवतत्त्वमिति प्रोक्तम्,

"प्राणारूढो भवेज्जीवः"

इत्यागमोक्तेः, प्राणः प्राण एव जीव इति प्रोक्तः, तदेकभावमननात् लिङ्गप्राणमधिकृत्य विद्यमानयोः लिङ्गाङ्गिनोः शिवजीवयोः समानसमरसैक्यचिन्तावान् समाधिस्थः शिवयोगसमाधिनिष्ठः इति प्रकीर्तितः इत्यर्थः ॥

अथ— "गुदमवष्टभ्य आधाराद्वायुमुत्थाप्य, स्वाधिष्ठानं त्रिः प्रदक्षिणीकृत्य, मणिपूरकं गत्वा, अनाहतमतिक्रम्य, विशुध्दौ प्राणलिङ्गं निरुद्धय, आज्ञामनुयान्, ब्रह्मरन्ध्रं ध्यायन्, त्रिमात्रोऽहमिति सर्वदा ध्यायेत्" —इति हंसोपनिषद्वचनानुसारेण सकलसमाधिं[2] प्रकाशयति—

---

1 अनयोः जीवशङ्करयोः वेदिता ज्ञाता इत्यर्थः ।

23

832

सूक्ष्मरन्ध्रं विजानीयात् तत् कैलासपदं विदुः ।
तत्रस्थं भावयेत् शम्भुं सर्वकारणकारणम् ॥

833 [आत्मानन्दैकरसत्ववर्णनम्]

बहिर्वासनया विश्वं विकल्पार्थं प्रकाशते ।
अन्तर्वासितचित्तानां आत्मानन्दः प्रकाशते ॥

---

अन्तः जीवेश्वराश्रयीभूतसूक्ष्मशरीरमध्ये षट्चक्ररूढानि षट्चक्रोत्पन्नानि[1] पङ्कजानि षट्कमलानि मूलत आधारमारभ्य भ्रूमध्यान्तानि आज्ञाचक्रान्तानि ब्रह्मादिस्थानभूतानि भावयेत् गुरूपदिष्टप्रकारेण चिन्तयेत् ।

भ्रूमध्यादूर्ध्वभागे तु ब्रह्मरन्ध्रे इत्यर्थः, सहस्रदलमम्बुजं सहस्रशक्तिदलालङ्कृतकमलं भावयेत् । तत्र तत्कमलमध्ये विमलं निर्मलं चन्द्रबिम्बं सोममण्डलं भावयेत् । एतदन्तरे—तच्चन्द्रमण्डलमध्ये सूक्ष्मरन्ध्रं वालाग्रसमानातिसूक्ष्मरन्ध्रं विजानीयात् उपदेशाज्जानीयात् । तत् तत्सूक्ष्मरन्ध्रं कैलासपदं कैलासस्थानं सत् विदुः शास्त्रज्ञाः जानीयुः । तत्रस्थं शम्भुं शिवं सर्वकारणकारणं ब्रह्मादिकारणेशानामपि कारणीभूतं सन्तं भावयेत् स्वात्माभेदेन ध्यायेत् इत्यर्थः ।

अथ आधारस्वाधिष्ठानगतपृथ्वीजलसङ्घट्टनेन मणिपूराख्यनाभिकन्दमुत्पत्य, तदुद्भूतानाहताख्यहृदयद्वादशदलकमले तापिन्यादिद्वादशकलायुक्तसूर्यमंडलं भाति ।

---

[1] रूढानि इत्यस्य उत्पन्नानीत्यर्थः ।

834 [तदानीं बहिर्वासनालयप्रकारः]

[1]आत्मारणिसमुत्थेन प्रमोदमथनात् सुधीः ।
ज्ञानाग्निना दहेत् सर्वं पाशजालं जगन्मयम् ॥

---

तदुपरि षोडशदलयुक्तविशुद्धिकमले अमृतादिषोडशकलायुक्तं चन्द्रमंडलं विभाति ।

तदुपरि द्विदलयुक्ताज्ञाचक्रे ज्वलिन्यादिदशकलात्मकवह्निमण्डलम् प्रकाशते ।

तदुपरि सहस्रदलालङ्कृतब्रह्मचक्रे तदष्टत्रिंशत्कलोपेतकुण्डलीमण्डलोपरि लिङ्गाङ्गसामरस्यलक्षणशिवयोगसमाधिसम्पन्नस्य प्राणलिङ्गिनः शिवानन्द-व्यतिरेकेण [2]मायिकसुखानुभवो नास्ति—इति सूत्रद्वयेनाह—

'इदम्' इति बहिर्मुखेन संस्कारेण सर्वं जगत् सङ्कल्पविकल्पार्थं प्रकाशते । 'अहम्' इति अन्तर्मुखे परिमिलितचित्तानां आत्मानन्दः शिवानन्द एव प्रकाशते इत्यर्थः ॥

ननु बहिर्वासना कथं गच्छतीति ? तत्राह—

सुधीः प्राणलिङ्गी प्रमोदमथनात् शिवसुखस्य विचारात् आत्मारणिसमुत्थेन ज्ञानाग्निना शिवाभेदज्ञानाग्निना सर्वं जगन्मयं मलमायादिपाशसमूहं दहेत् भस्मीकुर्यात् इत्यर्थः ॥

---

1 अरणिः अग्निमथनहेतुशिलादिः ।
2 अत्र मायिकपदं प्राकृतपरम् ।

835 [शिवध्यानस्य महत्त्वं]

संसारविषवृक्षस्य पञ्चक्लेशपलाशिनः ।
छेदने कर्ममूलस्य परशुः शिवभावना ॥

836

अज्ञानराक्षसोन्मेषकारिणः संहृतात्मनः ।
शिवध्यानं तु संसारतमसः चण्डभास्करः ॥[1]

(34) इति शिवयोगसमाधिस्थलम् (4-3)

---

अथ शिवध्यानमहत्त्वं सूत्रद्वयेन कथयन् शिवयोगसमाधिस्थलं समापयति—

धर्माधर्मलक्षणकर्ममूलस्य अविद्यादिपञ्चक्लेशलक्षणपर्णवतः[2] जनन-मरणलक्षणसंसारविषवृक्षस्य छेदने शिवध्यानमेव परशुः इत्यर्थः ॥

अज्ञानलक्षणराक्षसनयनोन्मीलनकारिणः निबिडतरसंसारान्धकारस्य शिवध्यानं चण्डभास्करः प्रचण्डमार्तण्ड इत्यर्थः ॥

---

1 सम्पूर्णनाशकः इत्यर्थः ।

2 पलाशिनः इति मूलस्य विवरणं पर्णवतः इति ।

## (35) प्राणलिङ्गस्थले निजलिङ्गस्थलम् (4-4)



837 [निजलिङ्गस्थलनिरूपणम्]

स्वान्तःस्थशिवलिङ्गस्य प्रत्यक्षानुभवस्थितिः ।
यथैव परलिङ्गस्य निजमित्युच्यते बुधैः ॥

838 [निजलिङ्गस्वरूपम्]

ब्रह्मविष्ण्वादयो देवाः सर्वे वेदादयस्तथा ।
लीयन्ते यत्र गम्यन्ते तल्लिङ्गं ब्रह्म केवलम् ॥

---

अथ एवंविधशिवयोगसम्पन्नस्य प्रत्यक्षीभूतलिङ्गनिजस्थलं निरूपयति—

स्वात्मनि तादात्म्येन स्थितस्य शिवलिङ्गस्य या प्रत्यक्षानुभवस्थितिः देशकालाकाराकृतसङ्कोचाभावेन सामान्यतः 'अहम्' इति प्रत्यक्षानुभव-स्थितिः अस्ति, सैव परलिङ्गस्य महालिङ्गस्य निजं इति निजस्वरूपमिति बुधैः आत्मतत्त्वज्ञानिभिः उच्यते कथ्यते इत्यर्थः ॥

अथ तत्स्वरूपं सूत्रद्वयेन प्रकटयति—

ब्रह्मविष्णुप्रभृतिदेवाः वेदागमपुराणादिशब्दसमूहाश्च यत्र लयं

---

1 वस्तुतः परिशील्यमाने जीवस्यैवास्य लिङ्गरूपत्वमिति भावः ।

839 [अनन्यलिङ्गपदार्थः]

चिदानन्दमयः साक्षात् शिव एव निरञ्जनः ।
लिङ्गमित्युच्यते नान्यत् यतः स्यात् विश्वसम्भवः ॥

840

बहुनाऽत्र किमुक्तेन ? लिङ्गमित्युच्यते बुधैः ।
शिवाभिधं परं ब्रह्म चिद्रूपं जगदास्पदम् ॥

---

गच्छन्ति[1] पुनः. प्रकाशयन्ति तत् लिङ्गं लिङ्गशब्दाभिधेयं केवलं ब्रह्म ब्रह्मैव इत्यर्थः ॥[2]

[3]ननु लिङ्गशब्दाभिधेयं विश्वोत्पत्तिलयस्थानं ब्रह्मैव चेत् तत् शिवस्वरूपं वा ? तद्व्यतिरिक्तं वा इत्यत्राह—

यतः ब्रह्मस्वरूपलिङ्गात् विश्वसम्भवः विश्वोत्पत्तिः स्यात् तल्लिङ्गम् ब्रह्मस्वरूपलिङ्गं चिदानन्दमयः सच्चिदानन्दस्वरूपः निरञ्जनः दोषरहितः साक्षात् प्रत्यक्षीभूतः शिव एव उच्यते, नान्यत् अन्यत् वस्तु नोच्यते इत्यर्थः ॥

अथ निष्कर्षमाह—

अत्र अस्मिन् विषये बहुभाषणेन किम् ? जगदाधारभूतस्फुरणस्वभावं परब्रह्मैव शिवाभिधं परशिवाभिधानं लिङ्गम् निजलिङ्गमिति ।

---

1 पृथक्तया विश्लेषणानर्हसंयुक्तस्थितिर्हि लयपदार्थः इति भावः ।
2 केवलशब्दस्य अभेदार्थेऽपि प्रसिद्धत्वात् इति भावः ।
3 तद्वाचकविशेषशब्दबुबोधयिषया प्रश्नः ।

८४१ [लिङ्गस्य मायिकत्वनिरसनम्]

वेदान्तवाक्यजां विद्यां लिङ्गमाहुस्तथाऽपरे ।
तदसज्ज्ञेयरूपत्वात् लिङ्गस्य ब्रह्मरूपिणः ॥

---

बुधैः शास्त्रज्ञैः उच्यते इत्यर्थः ।

[1]मायिकवेदान्तमतसिद्धं लिङ्गं निजलिङ्गं न भवतीति सूत्रद्वयेनाह—

वेदान्तवाक्यजं—

"प्रज्ञानं ब्रह्म"
"अहं ब्रह्मास्मि"
"तत्त्वमसि"
"अयमात्मा ब्रह्म"

इत्यादिवेदान्तवाक्यप्रकाशितां विद्यां, तथा तत्प्रकारकं निजलिङ्गं सत् अपरे वेदान्तिनः वेदान्तज्ञानिनः आहुः । तत् तद्वेदान्तप्रकाशितज्ञानलिङ्गं ब्रह्मरूपिणः परब्रह्मस्वरूपिणः लिङ्गस्य ज्ञेयरूपत्वात् निजलिङ्ग-रूपचिदहंप्रकाशवेद्यत्वात् असत् अप्रशस्तमित्यर्थः । प्रमाणानां प्रमातृ-मितिलक्षत्वेनैव प्रमेयप्रकाशकत्वनियमात् । अन्यथा बौद्धमतप्रवेशापत्तेः । ब्रह्मलिङ्गस्य प्रमेयपदप्रविष्टत्वेन प्रमाणान्तरसापेक्षत्वात् इति ॥

अथ मतान्तरं[2] निराकरोति—

---

1 अद्वैतमतं मनसिकृत्याह ।
2 प्राणलिङ्गिव्यतिरिक्तं मतमित्याशयः ।

842 [लिङ्गस्य स्वरूपान्तरत्वनिरासः]

अव्यक्तं लिङ्गमित्याहुः जगतां मूलकारणम् ।
लिङ्गी महेश्वरश्चेति मतमेतदसङ्गतम् ॥

843 [लिङ्गमहिमा]

न सूर्यो भाति तत्रेन्दुः न विद्युन्न च पावकः ।
न तारकाः महालिङ्गे द्योतमाने परात्मनि ॥

---

जगतां मूलकारणं अव्यक्तं मायातत्त्वं लिङ्गमाहुः, महेश्वरो लिङ्गीचेति लिङ्गवानित्याहुः ।

"मायां तु प्रकृतिं विद्यात्
मायिनं तु महेश्वरम्"

इति श्वेताश्वतराणां मतं असङ्गतं प्राणलिङ्गिनां असंमतम् । प्रकृतेः जडत्वेन हेयकोटिप्रविष्टत्वात् इति ॥[1]

अथ—

"न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति ॥"

इति कठवल्लीश्रुत्यनुसारेण प्राणलिङ्गिनां संमतं निजलिङ्गस्वरूपं सूत्रद्वयेन प्रतिपादयति—

परात्मनि परमात्मनि महालिङ्गे द्योतमाने सति तत्र तस्मिन्

---

[1] उपासकस्वरूपभेदेन विविधसोपानरूपमतानां तत्रतत्र उपदिष्टत्वादिति भावः ।

844

ज्योतिर्मयं परं लिङ्गं श्रुतिराह शिवात्मकम् ।
तस्य भासा सर्वमिदं प्रतिभाति न संशयः ॥

---

महाप्रकाशे न सूर्यः–सूर्यो न भाति, नेन्दुः चन्द्रो न भाति, पावकः न भाति विद्युच्च न भाति नक्षत्राणि च न भान्ति ।

तर्हि तेषां भासनं कथम् ? इत्यत्राह—

शिवात्मकं परं लिङ्गं महालिङ्गमेव ज्योतिर्मयं अन्यानपेक्षप्रकाशरूपं, तस्मात् तस्य भासा ज्योतिर्लिङ्गप्रकाशेनैव इदं सर्वं सूर्यचन्द्रादिकं सर्वं प्रतिभाति । अत्र सन्देहः नास्तीति [1]कठवल्लीश्रुतिराहेत्यर्थः ।

845

अयं भावः—वह्न्यर्कसोमानां मातृमानमेयात्मकत्रिपुटीमयप्रपञ्च-रूपत्वात् एतेषां प्रकाशः महालिङ्गप्रकाशाधीनः इति सिद्धत्वेन पुनः यन्महालिङ्गं[2] वेदान्तजन्यज्ञानप्रकाश्यमित्यङ्गीकृतं चेत् पराधीनप्रकाशत्वेन अत्यन्तजडत्वप्रसङ्गात् अप्रमेयं स्वप्रकाशं वस्तु निजलिङ्गशब्दार्थः । अस्मन्मते निगमागमादिप्रमाणानां स्वशक्तिमयत्वेन स्वसंवेद्यत्वात् न दोष इति ॥

अथ सूत्रद्वयेन लिङ्गमहत्त्वं उक्त्वा निजलिङ्गस्थलं समापयति—

---

1 'तस्य भासा सर्वमिदं विभाति' इति तु कठवल्लीश्रुतिः ।

2 वेदान्तस्यापि स्वसंवेद्यत्वे न दोषः इति अग्रे व्यक्तीभविष्यति ।

846

लिङ्गान्नास्ति परं तत्त्वं यदस्माज्जायते जगत् ।
यदेतद्रूपतां धत्ते यदत्र लयमश्नुते[1] ॥

847 [निगमनम्]

तस्माल्लिङ्गं परं ब्रह्म सच्चिदानन्दलक्षणम् ।
निजरूपमिति ध्यानात् तदवस्था प्रजायते ॥

(35) इति निजलिङ्गस्थलम् (1-4)

---

यत्र लिङ्गे यतः यस्मात् कारणात् यज्जगज्जायते उत्पद्यते, यज्जगत् एतद्रूपतां स्थितिरूपतां धत्ते दधाति, यज्जगत् लयं संहारं अश्नुते अनुभवति तस्मात् कारणात् अस्माल्लिङ्गात् अन्यानपेक्षभासमानस्वप्रकाशमयनिजलिङ्गात् परं तत्वं नास्ति ॥

तस्मात् सच्चिदानन्दस्वरूपं परब्रह्मैव निजरूपं लिङ्गं निजरूपमिति ध्यानात् चिन्तनात् तदवस्थालिङ्गमेव निजमित्यवस्था प्रजायते प्रकाशते इत्यर्थः ॥[2]

---

1 इदमेव लिङ्गपदस्य सहजः आन्तरश्चार्थः ।

2 निगमागमजालोक्तं परं ब्रह्म च इदमेवेति भावः ।

## (36) प्राणलिङ्गिस्थले अङ्गलिङ्गस्थलम् (4-5)

848 [अङ्गलिङ्गस्थलनिरूपणम् ]

ज्ञानमङ्गमिति प्राहुः ज्ञेयं लिङ्गं सनातनम् ।
विद्यते तद्द्वयं यस्य सोऽङ्गलिङ्गीति कीर्तितः ॥

849 अस्य सिद्धान्तस्य भेदवादिमताद्भेदः]

अङ्गं लिङ्गं समारूढं लिङ्गे चाङ्गमुपस्थितम् ।
एतदस्ति द्वयं यस्य[2] स भवेदङ्गलिङ्गवान् ॥

---

[1]अथ लिङ्गनिजाङ्गिनं अङ्गलिङ्गिनं सूत्रद्वयेन निरूपयति—

ज्ञानं शिवज्ञानवान् जीवः अङ्गं अङ्गमिति प्राहुः इत्यर्थः । ज्ञेयं तेन शिवज्ञानवता अनेन साक्षात्करणीयं वस्तु सनातनं नित्यं लिङ्गमिति प्राहुः ।

"द्वा सुपर्णा सयुजा सखाया"

इति श्रुतेः । एतद्द्वयं अङ्गलिङ्गद्वयं यस्य प्राणलिङ्गिनः वर्तते, सः अङ्गलिङ्गी कीर्तितः इत्यर्थः ।

अथैवं चेत् भेदवादिमतप्रवेशो जातः इत्यत्राह—

---

[1] उपासकस्वरूपयोग्यताभेदनिमित्तं ध्येयभेदं व्याख्याति ।
[2] 'एतद्द्वयं यस्य लिङ्ग' (ख)

850 [अङ्गलिङ्गिस्वरूपम्]

ज्ञात्वा यः सततं लिङ्गं स्वान्तःस्थ ज्योतिरात्मकम् ।
पूजयेद्भावयन् नित्यं तं विद्यादङ्गलिंगिनम् ॥

851 निजलिङ्गनिष्ठस्य जीवन्मुक्तत्वम्]

ज्ञायते लिङ्गमेवैकं सर्वैः शास्त्रैः सनातनैः[1]
ब्रह्मेति विश्वधामेति विमुक्तेः पदमित्यपि ॥

---

अङ्ग जीवात्मनि लिङ्गं शिवलिङ्गं समारूढं सामरस्येनास्ति । लिङ्गे शिवलिङ्गे अङ्गं जीवः उपस्थितं सामरस्येनास्ति । एतत् द्वयं यस्यास्ति बीजाङ्कुरन्यायेन[1] एवंविधज्ञानद्वयं यस्य प्राणलिङ्गिनः अस्ति, सः अङ्गलिङ्गवान् इत्यर्थः ॥

नन्वत्र ज्ञानमात्रमेव विवक्षितं किम्? इत्यत्राह—

यः प्राणलिङ्गी स्वान्तस्थं स्वहृदयकमलस्थं ज्योतिरात्मकं ज्योतिर्मयं सततं नित्य लिङ्गं निजलिङ्गं ज्ञात्वा सामरस्यरूपं श्रुतिगुरुस्वानुभवैः विदित्वा पूजयेत् ध्यायेत्[2] तं प्राणलिङ्गिनं विद्यात् जानीयात् इत्यर्थः ॥

अथ निजलिङ्गपर्यायनामान्युक्त्वा तत्र दृढचित्तवान् जीवन्मुक्तः इति सूत्रत्रयेण कथयति —

---

1 परस्परकार्यकारणभावेनेति भावः ।
2 निजस्वरूपज्ञानस्यैव सर्वत्र पूजापदार्थत्वादिति भावः ।

मुक्तिरूपमिदं लिंगं इति यस्य मनःस्थितिः ।
स मुक्तो देहयोगेऽपि स ज्ञानी स महागुरुः ॥[1]

852 [तदितरस्य मुक्त्यभावः]

[2]अनादिनिधनं लिङ्गं कारणं जगतामिति ।
ये न जानन्ति ते मूढाः मोक्षमार्गबहिष्कृताः ॥

853 [प्राणलिङ्गिस्थलनिगमनम्]

यः प्राणलिंगार्चनभावपूर्वैः[3] धर्मैरुपेतः शिवभावितात्मा ।
स एव तुर्यः परिकीर्तितोऽसौ संविद्विपाकात् शरणाभिधानः ॥

---

एकं निजलिंगमेव परब्रह्मेति जगदाधारमिति परमुक्तिस्थानमिति—
' विरूपनित्यया वाचा "

इति श्रुतिः आरम्भविरक्षाऽध्यवसायोक्तिरूपेण शिवशक्तिमयत्वात् सनातनैः नित्यैः सर्वैः शास्त्रैः निगमागमादिप्रमाणैः ज्ञायते । इदं निजलिंगं मुक्तिरूपं परमुक्तिस्वरूपमिति यस्य प्राणलिंगिनो मनःस्थितिः सः देहयोगेऽपि मुक्तः पुनर्जन्मान्तराभावात् जीवन्मुक्तः सः ज्ञानी, स एव शिवज्ञानवान् सः महागुरुः श्रीगुरुः इत्यर्थः ॥

अथैवं लिंगनिजज्ञानशून्यानां मुक्तिः नास्तीत्याह—
अनादिनिधनं उत्पत्तिविनाशरहितमित्यर्थः । शिष्टम् स्पष्टम् ॥

अथ प्राणलिंगार्चनादिधर्मवान् प्राणलिंग्येव ज्ञानपरिपाकवशात्

---

1 एष एव तत्त्वज्ञः जीवन्मुक्तः इत्यपि कथ्यते ।
2 मूढानां स्वरूपमाह—
3 पूर्वोक्तैः धर्मैरित्यर्थः ।

इति श्रीमत्षट्स्थलब्रह्मिणा शिवयोगिनाम्ना
रेणुकाचार्येण विरचिते सिद्धान्त-
शिखामणौ प्राणलिंगिनः
पञ्चस्थलप्रसंगो नाम द्वादशः परिच्छेदः
समाप्तः

(36) इति अङ्गलिङ्गिस्थलम् (4-5)

इति चतुर्थं प्राणलिङ्गिस्थलं समाप्तम्

---

शरणः इत्यभिधानवान् इत्युक्त्वा प्राणलिंगस्थलं समापयति—

यः प्राणलिङ्गी प्राणलिङ्गपूजाचारप्रमुखैः धर्मैः शिवाचारैः समेतः सन् लिङ्गरूपेण भाविताङ्गस्वरूपवान्[2] तुर्यः भक्तापेक्षया चतुर्थः, स एवासौ प्राणलिंगी ज्ञानपरिपाकवशात् शरणः इत्यभिधानवान् इत्यर्थः ॥

इति श्रीमत्पदवाक्यप्रमाणपारावार
धुरीण श्रीमरितोण्टदार्येण विरचितायां तत्त्व
प्रदीपिकाख्यायां सिद्धान्तशिखामणि
व्याख्यायां द्वादशः परिच्छेदः

—o—

1 पूर्वोक्तैः धर्मैरित्यर्थः ।
2 अयं च मूले शिवभावितात्मा इत्यस्यार्थः ।

॥ श्री शिवाय नमः ॥

# सिद्धान्तशिखामणौ

## त्रयोदशः परिच्छेदः

### शरणस्य चतुः स्थलप्रसङ्गः

### (5) अथ पञ्चमं शरणस्थलम्

854 [शरणस्थलनिरूपणम्]

अगस्त्य उवाच —

माहेश्वरः प्रसादीति प्राणलिङ्गीति बोधितः ।
कथमेषः समादिष्टः पुनः शरणसंज्ञकः ॥

रेणुक उवाच —

855 [शरणशब्दार्थः]

अङ्गलिङ्गी ज्ञानरूपः सती ज्ञेयः शिवः पतिः ।
यत् सौख्यं तत्समावेशे तद्वान् शरणनामवान् ॥

---

अथ अगस्त्यप्रश्नः —

अगस्त्य उवाच — इति ।

माहेश्वरः प्रसादीति बोधितः प्राणलिङ्ग्येव पुनः[1] कथ केन प्रकारेण शरणाभिधानवान्? इत्यर्थः ॥

अस्य प्रश्नस्य उत्तरं निरूपयति—रेणुक उवाच — इति ॥

---

[1] शरणपदार्थव्युत्पत्तिप्रश्नोऽयम् । उत्तरं तु वीरमाहेश्वरे एव स्वीय-धर्मनिमित्तः रूढः इति ।

८५६ [अस्य स्थलस्य अवान्तरभेदाः]

स्थलमेतत् समाख्यातं चतुर्धा धर्मभेदतः ।
आदौ शरणमाख्यातं ततः तामसवर्जनम् ॥
ततो निर्देशमुद्दिष्टं शीलसम्पादनं ततः ॥

---

ज्ञानरूपः शिवज्ञानमेव स्वरूपं यस्य सः तादृशः, शिवज्ञानवान् इत्यर्थः । अङ्गलिङ्गी अङ्गलिङ्गसामरस्यवान् प्राणलिङ्गी सतीति[1] ज्ञेयः । शिवः शिवलिङ्गमेव पतिः पतिरिति ज्ञेयः । तत्समावेशे तयोः अङ्गलिङ्गरूपयोः स्त्रीपुरुषयोः समानसमरसरूपयोगे यत् सौख्यं, यथा—

"यथा स्त्रिया सम्परिष्वक्तः
न बाह्यं किञ्चन वेद ना-
न्तरं, एवमेवायं पुरुषः प्रा-
ज्ञेनात्मना सम्परिष्वक्तः न
बाह्यं किञ्चन वेद नान्तरम् ॥"

इति बृहदारण्यकश्रुति[2] प्रसिद्धं यत् सौख्यं अस्ति तद्वान् तादृशसौख्यवान् शरणनामवान् इत्यर्थः ॥

अथ अस्यापि स्थलभेदः अस्ति किम् ? इत्यत्राह—

---

[1] भावधर्मयोः प्राधान्यात् स्त्रीत्वनिर्देशः ।
[2] दारण्यश्रुति—(ख)

क्रमात् लक्षणमेतेषां कथयामि निशम्यताम् ॥[1]

(37) इति शरणमहत्त्वस्थलम् (5-1)

---

एतत् स्थलं शरणस्थलं धर्मभेदतः आचारभेदात् चतुर्धा चतुर्विधमिति समाख्यातम् ।

१ आदौ—शरणस्थलम् ।

२ तदनन्तरं —तामसनिरसनस्थलम् ।

३ ततः— निर्देशस्थलम् ।

४ अथ—शीलसम्पादनस्थलम् ॥

इति उद्दिष्टं—उपदिष्टम् ॥[2]एषां चतुर्णां लक्षणं क्रमात् वदिष्यामि श्रूयताम् इत्यर्थः ॥

857 [तत्र शरणस्थलनिरूपणम्]

"सती चाहं [3]पतिर्लिङ्गं
हृदि युक्तः स्वयंप्रभुः ।
प्रापञ्चिकसुखं नास्ति
शरणस्थलमुत्तमम् ॥"

इति शङ्करसंहितावचनानुसारेण शरणस्थलम् निरूपयति—

---

1 निशम्यतां=श्रूयताम् ।

2 क्रमशः उद्देशरूपनिर्देशपूर्वकं उपदेशः एव विधित्सितः इति भावः ।

3 जीवपदार्थः इत्यर्थः ।

सतीव रमणे यस्तु शिवे[1] शक्तिं विभावयन् ।
तदन्यविमुखः सोऽयं ज्ञातः शरणनामवान् ॥

858 [शिवलिङ्गनिष्ठस्यैव शरणत्वम्]

परिज्ञाते शिवे साक्षात् को वाऽन्यमभिकाङ्क्षति ?
[2]निधाने महति प्राप्ते कः काचं याचतेऽन्यतः

---

रमणे प्राणकान्तविषये सतीव पतिव्रता स्त्रीव यस्तु शिवे शिवलिङ्गविषये शक्तिं स्वात्मानं स्त्रियं भावयन् तदन्यविमुखः शिवलिङ्गादन्यत्र देवतान्तरे तिर्यङ्मुखः सन् अस्ति, सोऽयं शरणवान् शरणस्थलवान् इति ज्ञातः ज्ञातुं योग्यः इत्यर्थः ॥

अथ बहुदृष्टान्तपूर्वकं शिवलिङ्गासक्त एव शरणः इत्युपपादयति—

शिवे परमशिवे साक्षात् श्रुत्यादिप्रमाणैः परिज्ञाते ब्रह्मादिभ्योऽपि महान् इति ज्ञाते सति को वा अन्यं काङ्क्षति ? न काङ्क्षतीत्यर्थः । यथा महति निधाने प्राप्ते सति अन्यतः अन्यस्मात् काचं काचमणिं[3] को वा याचते ? न कोऽपि याचते इत्यर्थः । तथा शिवादन्यत्र देवतान्तरे विमुखः शरणः इत्यर्थः ॥

---

[1] अत्र शिवपदं शिवलिङ्गपरम् ।

[2] निधिरूपेण निक्षिप्ते धनकनकादौ इत्यर्थः ।

[3] काचः इदानीं 'ग्लास' इति प्रसिद्धः ।

859

शिवानन्दं समासाद्य को वाऽन्यमुपतिष्ठते ?
गङ्गाऽमृतं परित्यज्य कः काङ्क्षेत् मृगतृष्णिकाम् ॥

860

संसारतिमिरच्छेदे विना शङ्करभास्करम् ।
प्रभवन्ति कथं देवाः खद्योता इव देहिनाम् ॥

861

संसारार्तः शिवं यायात् ब्रह्माद्यैः किं फलं सुरैः ?
चकोरः तृषितः पश्येत् चन्द्रं किं तारका अपि ?

---

शिवानन्दं शिवलिङ्गसुखं[1] समासाद्य प्राप्य कः देवतान्तरमुपतिष्ठते आश्रयति ? नाश्रयतीत्यर्थः [1]गङ्गोदकं परित्यज्य कः मृगतृष्णिकां मरीचिका-जलं[2] काङ्क्षेत् इच्छेत् ? तथा शिवादन्यत्र विमुखः शरणः इत्यर्थः ॥

खद्योताः अल्पप्रकाशिनः प्राणिविशेषाः यथा अन्धकारनिवारणे समर्थाः न भवन्ति, भास्करः[3] समर्थो भवति, तथा संसारतिमिरच्छेदे शङ्करभास्करं[4] विना ब्रह्मादयो देवाः समर्थाः न भवन्तीति शिवादन्यत्र विमुखः शरण इत्यर्थः ।

तृषितः पिपासार्दितः चकोरः चन्द्रं यथा पश्येत्, तारकाः न पश्येत्

---

[1] भक्तिभावादिभावनोपासनाजन्यं सुखमित्यर्थः ।
[2] तत्र जलं वस्तुतः नास्त्येव किन्तु केवलं भ्रमरूपमिति तात्पर्यम् ।
[3] भास्करः = सूर्यः ।
[4] लिङ्गरूपं सूर्यमिति यावत् ।

862 [तस्य देवतान्तरवैमुख्यम् ]

शिव एव समस्तानां शरण्यः शरणार्थिनाम् ।
संसारोरगदष्टानां सर्वज्ञः सर्वदोषहा[1] ॥
शिवज्ञाने समुत्पन्ने परानन्दः प्रकाशते ।
तदासक्तमनाः योगी नान्यत्र रमते सुधीः ॥

863 निगमनम् ]

तस्मात् सर्वप्रयत्नेन शङ्करं शरणं गतः ।
तदनन्तसुखं प्राप्य मोदते नान्यचिन्तया ॥

---

तथा संसारेण[2]श्रमितैः "ब्रह्माद्यैः किं फलम्?" इति शिवमेवाश्रयेत्ः तादृशचकोरवत् अन्यत्र विमुखः शिवशरणः इत्यर्थः ।

संसारसर्पदष्टानां समस्तानां शरणार्थिनां सर्वज्ञः सर्वदोषघ्नः शिव एव रक्षकः इति शिवमाहात्म्यज्ञाने समुत्पन्ने सति परमानन्दाविर्भावो जायते, तदासक्तचित्तः शिवयोगी अन्यत्र देवतान्तरे न रमते[3] इत्यर्थः ॥

अथ उक्तार्थमुपसंहरन् शरणस्थलं समापयति—

तस्मात् कारणात् सर्वप्रयत्नेन मनोवाक्कायकर्मणा[4] शिवं शरणं गतः

---

[1] श्रान्तः इति यावत् । क्वचित् (ख) तथैव पाठः ।
[2] श्रम् धातोरिदं रूपं ।
[3] भक्तिभावं न भजते इत्यर्थः ।
[4] अचाञ्चल्येनेति यावत् ।

## (37) इति शरणस्थलम् (5-1)

---

## (38) शरणस्थले तामसनिरसनस्थलम् (5-2)

---

864 तामसनिराकरणस्थलनिरूपणम् ]

शिवासक्तपरानन्दमोदिना गुरुणा यतः ।
निरस्यन्ते तमोभावाः [1]स तामसनिरासकः ॥

---

[1]रक्षणविचक्षणः इति ज्ञात्वा प्रपन्नः, तदनन्तसुखं प्राप्य तस्मात् शिवात्
अनन्तसुखं लब्ध्वा मोदते, अन्यचिन्तया देवतान्तरचिन्तया[2] न मोदते
इत्यर्थः ॥

(37) इति शरणस्थलम् (5-1)

---

अथ शरणेन विधीयमानतामसनिराकरणस्थल निरूपयति

शिवासक्तः सन् परमानन्दानुमोदिना गुरुणा श्रेष्ठेन शरणेन तमोविकाराः यतः कारणात् निरस्यन्ते निवार्यन्ते ततः तस्मात् सः तामसनिरासको भवेत् इत्यर्थः ॥

---

[1] सः गुरुः इत्यर्थः । तदेवोक्तं —"गुशब्दस्त्वन्धकारः स्यात् रुशब्दः तन्निरोधकः इति ।

[2] स शिव एवेति शेषः ।

[3] अत्र चिन्तापदं ध्यानादिपरम् ।

865 तामस्याः वृत्तेः निराकरणावश्यकता]

यस्य ज्ञानं[1] तमोमिश्रं न तस्य गतिरिष्यते ।
सत्त्वं हि ज्ञानयोगस्य नैर्मल्यं विदुरुत्तमाः ॥

866 [सात्त्विकलक्षणम्]

शमो दमो विवेकश्च वैराग्यं पूर्णभावना ।
क्षान्तिः कारुण्यसम्पत्तिः श्रद्धा सत्यसमुद्भवा ॥

---

ननु तमोभावाः किमर्थं निराकरणीयाः ? इत्यत्राह —

नैर्मल्यं निर्मलता साधनं सत् इत्यर्थः । तस्मात् तमोविकाराः निराकरणीयाः इति भावः । शिष्टं स्पष्टम् ॥

अथ —

"सत्त्वात् सुखं च ज्ञानं च
वैराग्यं शौक्ल्यमेव च ।[1]
दुःखंप्रवृत्तिरागौ[2] च
लौहित्यं रजसो भवेत् ॥
मोहो भ्रान्तिस्तथाऽऽलस्यं
कार्ष्ण्यं च तमसो भवेत् ॥"

---

[1] वस्तुतस्तु तमोमिश्रं ज्ञानमेव न भवति । केवलं विषयग्रहणधर्मत्वात् ज्ञानत्वव्यवहारः ।

[2] शौक्ल्यं=स्वच्छता शुभ्रता निर्मलता वा ।

[3] दुःखप्रवृत्तिरागौ—(ख) ।

867

शिवभक्तिः परो धर्मः शिवज्ञानस्य बान्धवाः ।
एतैर्युक्तो महायोगी सात्त्विकः परिकीर्तितः ॥

868 [तस्य कामादिसम्बन्धराहित्यम्].

कामक्रोधमहामोहमदमात्सर्यवारणाः ।[1]
शिवज्ञानमृगेन्द्रस्य कथं तिष्ठन्त सन्निधौ ? ॥

---

इति सूतसंहितावचनानुसारेण गुणत्रययुक्तान् प्रकाशयति —

शमः शान्तिः[2] दमः, बाह्येन्द्रियनिग्रहः, विवेकः नित्यानित्यवस्तुविचारः, वैराग्यं विषय[3]विरक्तिः पूर्णभावना अखण्डध्यानम्, क्षान्तिः क्षमा, कारुण्यसम्पत्तिः भूतदया, सत्यसमुद्भवायथार्थवस्तुसम्भवा, श्रद्धा विश्वास ; शिवभक्तिः परोधर्मः उत्कृष्टशिवाचारः, शिवज्ञानस्य बान्धवाः एते शिवज्ञानस्य सम्बन्धिनः एतैः दशगुणैर्युक्तः महायोगी सात्त्विकः इति सत्त्वगुणयुक्तः इति प्रकीर्तितः ।

ननु एतैः गुणैः युक्तस्य महायोगिनः कदाचिद्वा[4] कामक्रोधादयः सम्भवन्ति किम् ? इत्यत्राह —

शिवज्ञानस्य मत्तमनोगजनिग्रहकरत्वेन सिंहरूपत्वात् तस्य संनिधौ कामक्रोधादिगजस्थितेः अवकाशो नास्तीत्यर्थः ॥

---

[1] वारणः = गजः ।
[2] शान्तिः — अन्तरिन्द्रियनिग्रहः ।
[3] विषयपदं सत्यविरोधि विषयपरम् ।
[4] यदाकदाचित् (ख)

869 [राजसलक्षणम्]

यत्र कुत्रापि वा द्वेष्टि प्रपञ्चे शिवरूपिणि ।
शिवद्वेषी स विज्ञेयः रजसाऽऽविष्टमानसः ॥

870 [तामसलक्षणम्]

यो द्वेष्टि सकलान्[1] लोकान् यो वाऽहङ्कुरुते सदा ।[2]
योऽसत्यभावनायुक्तः स तामस इति स्मृतः ॥

871 [शरणानां तमस्सम्बन्धशून्यता]

तमोमूला हि सञ्जाताः रागद्वेषादिपादपाः ।
शिवज्ञानकुठारेण छेद्यन्ते हि निरन्तरम् ॥

---

अथ रजोगुणयुक्तं प्रदर्शयति—

यः रजसाविष्टमानसः रजोगुणकार्यभूतकामक्रोधाद्यावृतचित्तः सन् शिवरूपिणि प्रपञ्चे यत्र क्वापि द्वेष्टि, सः शिवद्वेषी राजसः इति शेषः। विज्ञेयः [3]ज्ञातुं योग्यः इत्यर्थः"॥

अथ तमोगुणयुक्तं लक्षयति—

स्पष्टम् ॥

अथ अयं तमोगुणः शिवशरणानां नास्तीति श्लोकद्वयेनोक्त्वा तामसनिरसनस्थलं समापयति—

तमोगुणरूपमूलवन्तः सन्तः सञ्जाताः रागद्वेषादिपादपाः कामक्रोधादिराजसवृक्षाः शिवज्ञानकुठारेण सात्त्विकशिवज्ञानरूपपरशुना सदा छेद्यन्ते । हि प्रसिद्धम् ॥

---

1 धर्मानुकूलया व्यवहारकलया संयुतानित्यर्थः ।
2 तस्य अहङ्कारस्य प्रकाशस्तु विषयसम्बन्धानुगुण्येन ।
3 एवमिति शेषः ।

872 [एषां तमोनिवृत्त्युपाय:]

शिवज्ञाने समुत्पन्ने सहस्रादित्यसन्निभे ।[1]
कुतः तमोविकाराः स्युः महतां शिवयोगिनाम् ॥

(38) इति तामसनिरसनस्थलम् (5-2)

---

ननु तमोमूलकत्वेन सञ्जातरागद्वेषादिपादपानां शिवज्ञानकुठारेण छेदनमस्तु । एतत्कारणीभूततमोगुणनिवृत्तिः केन भवेत् ? तद्विना तदङ्कुर-निवृत्तिः न सम्भवति इत्यत्राह —

इति सहस्रादित्यसङ्काशे शिवज्ञाने समुत्पन्ने सति, महतां महा-पुरुषाणां शिवयोगिनां शिवशरणानां तमोविकाराः तमोऽङ्कुराः[2] कुतः स्युः ? कस्मात् कारणात् भवेयुः ? कारणीभूतस्य तमसः मूलनाशात्[3] इति भावः ॥

---

1 तमोनिरसन विषयकसामर्थ्ये साद्दश्यमित्तिज्ञेयम् ।

2 तमोभावाः—(ख)

3 सर्वदा प्रकाशरूपसत्त्वसांनिध्यात् ।

## (39) शरणस्थले निर्देशस्थलम् (5-3)

—०—

874 [निर्देशपदार्थः]

निराकृत्य तमोभागं संसारस्य प्रवर्तकम् ।
निर्दिश्यते तु यद्ज्ञानं स निर्देश इति स्मृतः ॥

875 [तादृशज्ञानस्य गुरुलभ्यत्वम्]

गुरुरेव परं तत्त्वं प्रकाशयति देहिनाम् ।
को वा सूर्यं विना लोके तमसो विनिवर्तते ? ॥[1]

876

अन्तरेण गुरुं सिद्धं कथं संसारनिष्कृतिः ।[2]
निदानज्ञं विना वैद्यं किं वा रोगो निवर्तते ? ॥

---

873 [निर्देशस्थलनिरूपणम्]

अथ तामसनिराकरणेन भासमाननिर्देशस्थलं निरूपयति—

संसारप्रवृत्तेः मूलकारणं तमोभागं निराकृत्य यत् ज्ञानं निर्दिश्यते उपदिश्यते[3] सः तत् ज्ञानं निर्देशः इति निर्देशस्थलमिति स्मृतमित्यर्थः ॥

अथ तत् ज्ञानं केनोपदिश्यते ? इत्यत्र गुरुरेवेति[1] तन्महत्त्वं[4] बहुधा प्रकाशयति—

लोके सूर्यं विना तमोनिराकरणद्वारा पदार्थप्रकाशकः यथा नास्ति तथा गुरुं विना तमोनिराकरणद्वारा परतत्त्वप्रकाशको नास्तीत्यर्थः ॥

पुनः दृष्टान्तमाह—

---

1 विनिवर्तने (ग)
2 निष्कृतिः=निरसनम् ।
3 प्रबोध्यते इति यावत् ।
4 तस्य गुरोः महत्त्वम् ।

877 [निजगुरुपरिज्ञानसाधनम्]

अज्ञानमलिनं चित्तदर्पणं यो विशोधयेत् ।
प्रज्ञाविभूतियोगेन तमाहुः गुरुसत्तमम् ॥

---

सिद्धं गुरुमन्तरेण ज्ञानसिद्धगुरुं विनेत्यर्थः । संसारनिष्कृतिः ।भवरोगनिवृत्तिः कथं स्यात् ? कथं भवेत् ? तत्र दृष्टान्तः—निदानज्ञं "एतद्धेतुकस्यास्य रोगस्य इदमौषधम्" इति रोगज्ञानपूर्वकं चिकित्साभिज्ञ वैद्यं विना रोगो निवर्तते किं वा ? न निवर्तते इत्यर्थः । यथा निदान-ज्ञानहीनेन वैद्येन विना रोगो न निवर्तते, तथा ज्ञानसिद्धगुरुव्यतिरेकेण संसारनिवृत्तिः न सम्भवतीति तात्पर्यम् ॥

ननु अयं गुरुः[1] कथं ज्ञायते ? इत्यत्राह—

अज्ञानमलिनं चित्तदर्पणं यः प्रज्ञाविभूतियोगेन ।

"प्रज्ञानं ब्रह्म"

इति श्रुतिप्रसिद्धशिवज्ञानविभूतिसम्बन्धेन शोधयेत् निर्मलं कुर्यात्, तं गुरुसत्तमं गुरुश्रेष्ठं सन्तमाहुः[2] इत्यर्थः ॥

878 [गुरुकटाक्षमहिमा]

अथ तादृशगुरुकटाक्षात् सकलसिद्धिर्भवतीत्याह—

---

[1] अयं गुरुरितीत्यर्थः ।
[2] स एव सन् इत्युच्यते इत्यर्थः ।

879 [तादृशगुरूणां दुर्लभत्वम् ]

अपरोक्षिततत्त्वस्य जीवन्मुक्तस्वभाविनः ।[1]
गुरोः कटाक्षे संसिद्धे को वा लोकेषु दुर्लभः ॥

---

अपरोक्षिततत्त्वस्य स्वस्वरूपेण साक्षात्कृतशिवतत्त्ववतः जीवन्मुक्तस्वभाविनः—

"विकल्परहितं [2]ज्ञानं निषेधरहिता क्रिया ।
अलोकरञ्जकं रूपं जीवन्मुक्तस्य लक्षणम् ॥"

इति वासिष्ठवचनात् जीवन्मुक्तस्वरूपवतः गुरोः सद्गुरोः कटाक्षे कृपारसपूरितापाङ्गे संसिद्धे सति लोकेषु को वा दुर्लभः? न कोऽप्यलभ्यः इत्यर्थः । भोगमोक्षलक्षणसकलसिद्धिर्भवतीति भावः ॥

ननु एतादृशगुरवः सन्ति किम्? इत्यत्र—

"गुरवो बहवः सन्ति शिष्यवित्तापहारकाः ।
शिष्यहृत्तापहारस्तु गुरुरेकोऽपि दुर्लभः ॥"

इति शिवरहस्यवचनानुसारेणाह—

---

[1] जीवन्मुक्तावस्थां आत्मनः प्रापयितुं समर्थस्येत्यर्थः ।
[2] व्यवसायात्मकमित्यर्थः ।

880 [निगमनम्]

कैवल्यकल्पतरवः[1] गुरवः करुणालयाः ।
दुर्लभा हि जगत्यस्मिन् शिवाद्वैतपरायणाः ॥

881

क्षीराब्धिरिव सिन्धूनां[2] सुमेरुरिव भूभृताम् ।
ग्रहाणामिव तिग्मांशुः[3] मणीनामिव कौस्तुभः ॥
द्रुमाणामिव भद्रश्रीः[4] देवानामिव शङ्करः ।
गुरुः शिवः परः श्लाघ्यः गुरूणां प्राकृतात्मनाम् ॥

---

(39) इति निर्देशस्थलम् (5-3)

---

स्पष्टम् ॥

तस्मात् शिवलिङ्गतत्परः श्रीगुरुः प्राकृतगुरुभ्यः श्रेष्ठः इति वदन् निर्देशस्थलं समापयति—

भद्रश्रीः मलयजः इत्यर्थः ॥

शिष्टं स्पष्टम् ॥

---

1 कैवल्यरूपधर्मस्य आत्मनि प्रकाशकाः इत्यर्थः ।
2 अनेकसमुद्राणां मध्ये इत्यर्थः ।
3 तिग्मांशुः=सूर्यः ।
4 भद्रश्रीः=चन्दनतरुः ।

## (40) अथ शरणस्थले शीलसम्पादनस्थलम् (5-4)

883 [शीलवतां लक्षणम्]

जिज्ञासा शिवतत्त्वस्य शीलमित्युच्यते बुधैः ।
[1]निर्देश्ययोगादार्याणां[2] तद्वान् शीलीति कथ्यते ॥

884 [शीलपदार्थः]

प्रपन्नार्तिहरे देवे परमात्मनि शङ्करे ।
भावस्य स्थिरतायोगः शीलमित्युच्यते बुधैः ॥

---

882 [शीलसम्पादनस्थलनिरूपणम्]

अथ श्रीगुरुः निर्देश्यज्ञानयोगात् शिवतत्त्वस्य जिज्ञासा शील-मित्युक्त्वा, शीलवतः स्वरूपं सप्तभिः सूत्रैः प्रतिपादयति—

आ(चा)र्याणां पूर्वोक्तलक्षणवदाचार्यैः निर्देश्ययोगात् उपदेश्यज्ञान-योगात् शिवतत्त्वस्य जिज्ञासा ज्ञातुमिच्छा शीलमिति बुधैः ज्ञानिभिः उच्यते । तद्वान् तादृशजिज्ञासालक्षणशीलवान् शीली इति कथ्यते इत्यर्थः ॥

अथ निष्कर्षमाह—

'पालयस्व' इति शरणागतानां क्लेशहरे परब्रह्मस्वरूपशिवे

---

1 अत्रनिर्देशपदं तत्त्वोपदेशपरम् ।

2 आर्यपदं चात्र तत्त्वोपदेष्टुः आचार्यस्य वाचकम् ।

885

शीलं शिवैकविज्ञानं शिवध्यानैकतानता ।
शिवप्राप्तिसमुत्कण्ठा तद्योगी शीलवान् स्मृतः ॥

886 [शीलवतां वृत्तिः]

शिवादन्यत्र विज्ञानेवैमुख्यं यस्य सुस्थिरम् ।
तदासक्तमनोवृत्तिः तमाहुः शीलभाजनम् ॥

---

चित्तस्थिरीकरणं शीलं इति बुधैः [1]शिवशास्त्रज्ञैः कथ्यते इत्यर्थः ॥

अथ प्रकारान्तरेण तल्लक्षणमाह—

शिवे विज्ञानं शिवे एव विशेषज्ञानं शिवध्यानैकतानता शिवध्यानं एव अनन्यवृत्तित्वं शीलमित्युच्यते । तद्योगी शीलविशिष्टः शिवज्ञान समुत्कण्ठात् शिवाभिगमनलालस्यात् शीलवान् इति स्मृतः इत्यर्थः ॥

इयमर्थमेव स्फुटोक्त्याह—

शिवात् शिवलिङ्गात् अन्यत्र विज्ञाने देवतान्तरविशेषज्ञाने वैमुख्यं विमुखत्वे यस्य शरणस्थं सुस्थिरं दृढं यस्य मनोवृत्तिः मनोव्यापारः । तदासक्ताः शिवलिङ्ग एव लम्पटाः तं शीलभाजनं शीलभाजकं सन्तं आहुः ॥[2]

887 [दृष्टान्तैः तद्विवरणम्]

अत्र दृष्टान्तमाह—

---

[1] प्रकृतबुधधात्वर्थावबोधनं शिवतत्त्वावबोधनरूपविशेषपरमिति भावः ।
[2] वस्तुतस्तु 'शीलसमाधौ' इति धातुजं शीलपदं समाहितमनस्कज्ञानिपरमिति ध्येयम् ।

८८८

[1]पतिव्रतायाः यच्छीलं पतिरागात् प्रशस्यते ।
तथा शिवानुरागेण सुशीलो भक्त उच्यते ॥

८८९ [निगमनम्]

पतिं विना यथा स्त्रीणां सेवाऽन्यस्य तु गर्हणा ।
[2]शिवं विना तथाऽन्येषां सेवा निन्दा कृतात्मनाम् ॥

---

पतिव्रतायाः यत् शीलं पातिव्रत्यं पतिरागात् पुरुषप्रीतिवशात् प्रशस्यते तथा शिवानुरागेण शिवोपरि प्रीत्या भक्तः अवियुक्तः शरणः सुशीलः शोभनशीलवान् इत्यर्थः । शरणलिङ्गयोः सतीपतिभावस्य उक्तत्वात् पतिव्रतादृष्टान्तः कथितः ॥[3]

अथ उक्तमर्थमेव विशदयति—

स्त्रीणां पतिं विना प्राणकान्तं विना अन्यस्य परपुरुषस्य सेवा यथा गर्हणा निन्दिता तथा कृतात्मनां कृतकृत्यानां शिवशरणानां शिवं विना अन्येषां विष्णवादिदेवानां सेवा निन्दा भवतीत्यर्थः ॥

अथ उक्तार्थं सङ्गृह्याह—

---

[1] उत्तरत्र तथा शब्दात् अत्र यथाशब्दयोगः कार्यः ।

[2] सर्वत्रात्र शिवपदं शिवलिङ्गपरमिति पूर्वमेवोक्तम् ।

[3] विश्वपतेः शिवस्य संनिधौ जीवसामान्यस्यैव जायास्थानत्वात् एवं शीलार्थसङ्गमनं कृतम् ।

[1]बहुनाऽत्र किमुक्तेन ? शिवज्ञानैकनिष्ठता ।
शीलमित्युच्यते सद्भिः शीलवांस्तत्परो मतः ॥

890 [शरणस्थलसमापनम्]

शिवात्मबोधैकरतः स्थिराशयः शिवं प्रपन्नो जगतामधीश्वरम् ।
शिवैकनिष्ठाहितशीलभूषणः शिवैक्यवानेष हि कथ्यते बुधैः ॥

इति श्रीमत्षट्स्थलब्रह्मिणा
शिवयोगिनाम्ना रेणुकाचार्येण विरचिते
सिद्धान्तशिखामणौ शरणस्य
चतुःस्थलप्रसङ्गो नाम
त्रयोदशः परिच्छेदः समाप्तः ॥

---

अत्र शीलविषये बहुभाषणेन किम् ? शिवज्ञानैकनिष्ठता श्रीगुरुनिर्दिष्टशिवज्ञाने एकस्मिन्नेव निष्ठा शीलमिति सत्पुरुषैः उच्यते । तत्परः तच्छीलासक्तः शीलवान् इति मतः संमतः इत्यर्थः ॥

अथ एवंविधशीलवान् शरण एव शिवलिङ्गैक्यवान् इति शरणस्थलं समापयति—

[1] एतावता कृतानि विवरणानि सर्वाण्यपि पीठिकारूपेण मनसि विभाव्य निर्दिष्टमर्थमेवाह—

(40) इति शीलसम्पादनस्थलम् (5-4)

इति शरणस्थलं पञ्चमं

समाप्तम् ॥

---

शिवात्मबोधैकरतः लिङ्गाङ्गज्ञानैकनिष्ठः सन् जगतां अधीशं शिवं प्रपन्नः 'रक्ष' इति शरणं गतः स्थिराशयः शिवशरणयोः दृढीभूतसतीपति-भावयुक्तचित्तः[1] शिवैकनिष्ठाहितशीलभूषणः शिवलिङ्गैकनिष्ठाकृतिशीला-लङ्कारवान् एषः शरणः शिवैक्यवान् इति बुधैः शिवशास्त्रप्रवीणैः कथ्यते। हि प्रसिद्धमित्यर्थः ॥

इति श्रीमत्पदवाक्यप्रमाणपारावार-
धुरीण-श्रीमरितोण्टदार्येण विरचितायां
तत्त्वप्रदीपिकाख्यायां सिद्धान्तशिखामणि-
व्याख्यायां त्रयोदशः परिच्छेदः

---

[1] अयमेवार्थः पूर्वं सूचितः यत् जगति अस्मिन् वस्तुतः पुमान् शिव एक एव—अन्ये जीवाः सर्वेऽपि स्त्रीप्रायाः इति ।।

॥ श्री शिवाय नमः ॥

# सिद्धान्तशिखामणौ

## चतुर्दशः परिच्छेदः

## शिवलिङ्गैक्यस्य चतुर्विधस्थलप्रसङ्गः

—— —

### (7) षष्ठं ऐक्यस्थलम्

891 [ ऐक्यस्थलनिरूपणम् ]

अगस्त्य उवाच—

तामसत्यागसम्बन्धात्[1] निर्देशात् शीलतस्तथा ।
शरणाख्यस्य भूयोऽस्य कथं ऐक्यनिरूपणम्[2] ॥१॥

---

अथ अगस्त्यप्रश्नः—

अगस्त्य उवाच-इति—

तमोभागनिराकरणात् ज्ञाननिर्देशात् तथा शीलसम्पादनात् शरणाख्यस्यास्य एतावन्मात्रेण कथं ऐक्यनिरूपणम्? लिङ्गाङ्गयोः भेदघटितत्वात् इति ॥

अस्य उत्तरं ददाति—

श्रीरेणुक उवाच—इति—

---

1 तामससम्बन्धत्यागादिति यावत् ।
2 लिङ्गाङ्गैक्यनिर्धारणं कथमिति प्रश्नः ।

892 [ ऐक्यवतां स्वरूपम् ]

रेणुक उवाच—

प्राणलिङ्गादियोगेन सुखातिशयमेयिवान् ।[1]
शरणाख्यः शिवेनैक्यभावनात् ऐक्यवान् भवेत् ॥२॥

---

प्राणलिङ्गादियोगेन बाह्यलिङ्गपूजावैमुख्येन अन्तर्लिङ्गपूजाध्यानयोगेन सुखातिशयं शिवसुखातिशयं एयिवान् । लब्धवान्, शरणाख्यः शिवेन शिवलिङ्गेन ऐक्यभावनात् एकत्वचिन्तनात् ऐक्यवान् शिवलिङ्गैक्यवान् भवेत् स्यात् इत्यर्थः ॥[2]

893 [लिङ्गस्य आत्मनश्च ऐक्यप्रकारवर्णनम् ]

अयं भावः—

लिङ्गात्मनोः भेदः न सम्भवति, चिदेकरूपत्वात् ।

ननु—चिद्रूपत्वेऽपि व्यक्तिभेदः अस्ति इति चेत्—उच्यते । सः जीवः परिच्छिन्नचित्प्रकाशरूपो वा ? अपरिच्छिन्नचित्प्रकाशरूपो वा ? ॥ नाद्यः । परिमितघटादिप्रकाशवत् स्वविषयस्वमात्रनिष्ठत्वेन परविषयपरस्वरूपेषु अन्धबधिरप्रायत्वेन—

"चैत्रो मैत्रात् भिन्नः"
"मैत्रः चैत्रात् भिन्नः"
"चैत्रमहं जानामि"
"मैत्रमहं जानामि"

इति बाह्याभ्यन्तरानुसन्धानं न सम्भवति इति ।[3] "चैत्रोऽहम्"

---

[1] एयिवान्=प्राप्तवान् ।
[2] तथा च ऐक्यसंज्ञेयं केवलं भावनिबन्धनेति भावः ।
[3] तथासति न संभवेत् इति अनुपपत्तिप्रकाशनम् ।

896

ऐक्यस्थलमिदं प्रोक्तं चतुर्धा मुनिपुङ्गव ।।
ऐक्यमाचारसम्पत्तिः एकभाजनमेव च ।
सहभोजनमित्येषां क्रमात् लक्षणमुच्यते ॥

---

इति प्रकाशस्य तन्मात्रनिष्ठत्वात्, मैत्रस्वरूपतद्विषययोः अन्धबधिरप्रायत्वात्। एवं "मैत्रोऽहम्" इति प्रकाशः स्यात् इति। न द्वितीयः। अपरिच्छिन्नप्रकाशत्वे[1] तादृशप्रकाशद्वयाङ्गीकारो न सम्भवति। सेव्यसेवकभावाद्यसम्भवात्। प्रकाशैक्ये तु कल्पितभेदमादाय तत्सम्भवात् प्रकाशैक्यं अङ्गीकरणीयमिति।

894

[2]सर्वासर्वशब्दयोः मायाकार्यकोटिप्रविष्टत्वेन आन्तरालिकत्वात्, सत्वकर्तृत्वयोरेवस्वाभाविकत्वात् इति तदेकत्वचिन्तनात् ऐक्यवान् स्यादिति ॥

895 [अस्य स्थलस्य अवान्तरभेदाः]

अथ अस्यापि स्थलभेदाः सन्ति किम्? इत्यत्राह—

स्पष्टम् ॥

[१. ऐक्यस्थलम्।
२. आचारसम्पत्तिस्थलम्।
३. एकभाजनस्थलम्।
४. सहभोजनस्थलम् ॥ इति]

---

[1] चित्प्रकाशत्वे इत्यर्थः।
[2] सिद्धान्तितमर्थमाह—

## (41) ऐक्यस्थले ऐक्यस्थलम् (6-1)

898 [लिङ्गैक्यलक्षणम्]

विषयानन्दकणिकानिस्पृहो निर्मलाशयः ।
शिवानन्दमहासिन्धुमज्जनादैक्यमुच्यते ॥

---

897 [तत्र ऐक्यस्थलनिरूपणम्]

अथ—

"एकमेव तद्भवति अविकल्पो विकल्पो वाऽत्र काचन भिदाऽस्ति[1] नैवात्र किञ्चन भिदाऽस्त्यत्र भिदामिव मन्यमानः शतधा सहस्रधा भिन्नः मृत्योर्मृत्युमाप्नोति[2] तदेव तदद्वयं स्वप्रकाशम् ॥"

इति उत्तरतापनीयश्रुत्यनुसारेण[3] लिङ्गैक्यस्य लक्षणं पञ्चभिः सूत्रैः प्रतिपादयति—

विषयानन्दकणिकानिस्पृहः शब्दादिविषयानन्दशीकरेषु विरक्तः सन् निर्मलाशयः निर्मलचित्तवानेव शिवानन्दमहासिन्धुमज्जनात् शिवानन्दमहासमुद्रे तादात्म्यानुप्रवेशनात् ऐक्यं लिङ्गैक्यस्थलमुच्यते इत्यर्थः ॥

899 [लिङ्गैक्याधिकारी]

ननु इदमैक्यं कीदृशस्य[4] सम्भवति ? इत्यत्राह—

---

1 'लोके परंतु' इति शेषः ।

2 सर्वप्रसिद्धमृत्योः लोके यादृशं भयं तस्मादपि अधिकं भयमाप्नोति इति भावः ।

3 सिद्धान्तितस्येति शेषः ।

4 अधिकारिणः इति शेषः ।

निर्धूतमलसम्बन्धः निष्कलङ्कमनोगतः ।
शिवोऽहमिति भावेन निरूढो हि शिवैक्यताम् ॥[1]

900 [तस्य जगद्दर्शनाभावनिरूपणम् ]

शिवेनैक्यं समापन्नः चिदानन्दस्वरूपिणा ।
न पश्यति जगज्जालं मायाकल्पितवैभवम् ॥

901 [जगद्दर्शनाभावे हेतुः]

ब्रह्माण्डबुद्बुदोद्भेदविजृम्भी तत्त्ववीचिमान् ।
मायासिन्धुर्लयं याति शिवैक्यबडबानले ॥

---

निवारिताणवादिमलसम्पर्कवान् कलङ्करहितमनोव्यापारवान् "शिवोऽहम्" इति परामर्शनेन शिवलिङ्गैक्यतां[2] निरूढो हि भजतीति प्रसिद्धम् ॥

अथ किं पश्यन्नास्ते ? इत्यत्राह—

मायाशक्तिपरिकल्पितं विश्वं अपश्यन् आस्ते इत्यर्थः ॥

तत् कुतो न पश्यति ? इत्यत्राह—

ब्रह्माण्डबुद्बुदोद्भेदविजृम्भी ब्रह्माण्डरूपबुद्बुदाविर्भावेन वर्धिष्णुः तत्त्ववीचिमान् षट्त्रिंशत्तत्त्वलक्षणवीचिमान् मायासिन्धुः शिवैक्यबडबानले

---

[1] शिवैक्यमिति यावत् ।
[2] लिङ्गैक्यमिति यावत् ।

902

मायाशक्तितिरोधानात् शिवे भेदविकल्पना ।
आत्मनः तद्विनाशे तु नाद्वैतात् किञ्चिदिष्यते ॥

---

शिवलिङ्गैक्यरूपवडबाग्नौ लयं याति। अतः कारणात् प्रपञ्चदर्शनं नास्ति। उपादानकारणनाशात् कार्यनाशस्य अवश्यं अङ्गीकरणीयत्वात् ।

अथ तदेव विशदयति —

शिवे मायाशक्तेः तिरोधानात् प्रसरणात्[1] आत्मनः जीवस्य भेदविकल्पना स्यात्, तद्विनाशे मायाप्रसरणस्य विनाशे अद्वैतात् किञ्चित् ईषत् भेदोऽपि नेष्यते न इच्छाविषयीक्रियते ॥

903 [शिवाद्वैतनिरूपणम् ]

ननु शिवजीवयोः पतिपशुलक्षणभेदश्रवणात् कथं "किञ्चिद्भेदोऽपि नेष्यते" इत्युक्तम् ? इत्यत्र—

"अहमेको न मे कश्चित् नाहमन्यस्य कस्यचित् ।
न तं पश्यामि यस्याहं न तं पश्यामि यो मम ॥"[2]

इति देवीकालोत्तरवचनानुसारेण शिवलिङ्गैक्यस्य प्रसिद्धशिवाद्वैतं पञ्चभिः सूत्रैः प्रतिपादयति—

---

[1] आकाशवत् सर्वत्रव्याप्तत्वे सति अत्यन्त सूक्ष्मतापत्त्या तिरोधानं खलु सहजमिति अभिप्रेत्य एवं व्याख्या ।

[2] तथा च भेदादर्शनमेव प्रकृतविवक्षितमितिभावः ।

पशुत्वं च पतित्वं च मायामोहविकल्पितम् ।
तस्मिन् प्रलयमापन्ने कः पशुः को नु वा पतिः ? ॥

904 [शिवाद्वैतभावनायाः भवौषधत्वम्]

घोरसंसारसर्पस्य भेदवल्मीकशायिनः ।
बाधकं परमाद्वैतभावना परमौषधम् ॥

905 [भवतारणोपायः]

भेदबुद्धिसमुत्पन्नमहासंसारसागरम् ।
अद्वैतबुद्धिपोतेन समुत्तरति देशिकः ॥

---

स्पष्टम् ॥

अथ अस्य संसारस्य भेदवल्मीकनिष्ठसर्परूपत्वात् किमस्यौषधम् ? इत्यत्राह—

भेदवल्मीकशायिनः—जडाजडभेदः, जीवजडभेदः, जीवेश्वरभेदः, जीवजीवभेदः, जडेश्वरभेदः इत्येवंरूपपञ्चविधभेदविशिष्टवल्मीकस्थितस्य घोरसंसारसर्पस्य जननमरणादिभयङ्करस्य संसारसर्पस्य बाधकं औषधं परमाद्वैतभावना जडचेतनैक्यभावना इत्यर्थः ।

ननु अस्य संसारस्य भेदबुद्धिसमुत्पन्नमहासागरत्वात्, इयं केनोपायेन को वा तरति ? इत्यत्राह—

देशिकः शिवलिङ्गैक्य.[1] इत्यर्थः ॥ शिष्टं स्पष्टम् ॥

---

[1] शिवलिङ्गैक्यभावनामापन्नः इत्यर्थः ।

906 [संसारनाशोपायः]

अज्ञानतिमिरोद्रिक्ता कामरक्षः क्रियाकरी ।
संसारकालरात्रिस्तु नश्येदद्वैतभानुना ॥

तस्मादद्वैतभावस्य सदृशो नास्ति योगिनाम् ।
उपायो घोरसंसारमहातापनिवृत्तये ॥

907 अद्वैतसुखस्य अविलभ्यत्वाभाव:]

अद्वैतभावनाजातं क्षणमात्रेऽपि यत् सुखम् ।[2]
तत् सुखं कोटिवर्षेण प्राप्यते नैव भोगिभिः ॥

---

ननु इयं संसृतिः कामरक्षःक्रियाकरी कालरात्रिर्भवतीति, सा केन नश्यतीत्यत्राह—

अज्ञानतिमिरोद्रिक्ता अज्ञानलक्षणगाढान्धकारेणोत्पन्ना सती, कामरक्षः क्रियाकरी कामलक्षणराक्षसकृत्यं कुर्वती, संसारकालरात्रिः अद्वैतभानुना[1] शिवाद्वैतसूर्येण नश्यतीत्यर्थः ॥ शिष्टं स्पष्टम् ॥

अथ शिवाद्वैतातिशयं उक्त्वा सूत्रद्वयेन ऐक्यस्थलं समापयति—

स्पष्टम् ॥

---

[1] अद्वैतभावनात्मकेनेति भावः ।

[2] योगिभिः प्राप्यते इति शेषः ।

908 [मुक्तिस्वरूपम् ]

चित्तवृत्तिसमालीनजगतः[1] शिवयोगिनः ।
शिवानन्दपरिस्फूर्तिः मुक्तिरित्यभिधीयते ॥

(41) इति ऐक्यस्थलम् (6-1)

---

(42) अथ ऐक्यस्थले आचारसम्पत्तिस्थलम् (6-1)

---

भोगिभिः राज्यभोगिभिरित्यर्थः ॥ शिष्टं स्पष्टम् ॥

909 [आचारसम्पत्तिस्थलनिरूपणम् ]

अथ—

"यथा रविः सर्वरसान् प्रभुङ्क्ते हुताशनश्चापि हि सर्वभक्षकः ।
तथैव योगी विषयान् प्रभुङ्क्ते न लिंप्यते कर्म शुभाशुभैश्च ॥"

इति शिवरहस्यवचनानुसारेण लिङ्गैक्यस्य[2] सदाचारसम्पत्तिं द्वादशसूत्रैः प्रतिपादयति —

---

[1] चित्तवृत्त्या सम्यक् लीनं जगत् यस्येति बहुव्रीहिः ।
[2] भावनया ऐक्यमापन्नस्येति भावः ।

910 [जीवन्मुक्तस्य सूतकाद्यभावः]

शिवैक्यभावनापन्नशिवत्वो[1] देहवानपि ।
[2]देशिको हि न लिप्येत स्वाचारैः सूतकादिभिः ॥

911 [तत्र हेतुः]

शिवाद्वैतपरिज्ञाने स्थिते सति मनस्विनाम् ।[3]
कर्मणा किं नु भाव्यं स्यात् अकृतेन कृतेन वा ? ॥

912 [तस्य कर्मलेपाभावः]

शम्भोरेकत्वभावेन सर्वत्र समदर्शनः ।
कुर्वन्नपि महाकर्म न तत्फलमवाप्नुयात् ॥[4]

---

शिवैक्यभावनया लब्धशिवत्ववान् देशिकः शिवलिङ्गैक्यः देहवानपि जीवन्मुक्तः सन् सूतकादिभिः सूतकप्रभृतिभिः स्वाचारैः स्वेच्छाचारैः न लिप्येत इत्यर्थः ।

कस्मात् ? इत्यत्राह—

मनस्विनां लिङ्गैक्यनिष्ठचित्तवृत्तीनां शिवाद्वैतज्ञाने स्थिरे सति, अकृतेन कर्मणा दुष्कर्मणा कृतेन सत्कर्मणा वा किं नु भाव्यं स्यात् ? न किञ्चिदपि स्यादित्यर्थः ॥

तत् कुतः ? इत्यत्राह—

सर्वत्र समदर्शनः लोष्टाश्मकाञ्चनादिषु सर्वत्र समदर्शनः शिवलिङ्गैक्यः

---

1 शिवेन सह अनन्यः अहं इति भावनया येन शिवत्वं प्राप्तं तादृशः इत्यर्थः ।

2 देशिकः—शिवभावं दिशतीति-गुरुः ।

3 मनस्विनां....धीराणाम्

4 कर्मलेपः न भवतीत्यर्थः ।

913 [लिङ्गैक्येषु भेदाभावः]

सुकृती दुष्कृती वाऽपि[1] ब्राह्मणो वाऽन्त्यजोऽपि वा ।
शिवैकभावयुक्तानां सदृशो भवति ध्रुवम् ॥

9 4 [अस्य वर्णादिधर्मत्यागे हेतुः]

वर्णाश्रमसदाचारैः ज्ञानिनां किं प्रयोजनम् ?
लौकिकस्तु सदाचारः फलाभावे विभाव्यते ॥

---

शम्भोरेकत्वभावेन ऐक्यभावेन महाकर्म पुण्यपापरूपंमहाकर्म कुर्वन्नपि तत्फलं नाप्नुयात् । सर्वस्यापि शिवमयत्वेन दर्शनात्, तल्लेप नास्तीति भावः ॥

शिवैकभावयुक्तानां सर्वत्र शिवाभेदज्ञानयुक्तानां शिवलिङ्गैक्यानां सुकृती पुण्यात्मा वा दुष्कृती पापात्मा वा, ब्राह्मणः अन्त्यजो वा श्वपचो वाः सदृशः समानः भवति इति ध्रुवं निश्चयः ॥[2]

ननु शिवज्ञानिनामपि वर्णाश्रमप्राप्तधर्माः कथं त्यजनीयाः ? इत्यत्राह—

वर्णाश्रमप्राप्तैः ब्राह्मणादिवर्ण-ब्रह्मचर्याद्याश्रमप्राप्तैः सदाचारैः ज्ञानिनां शिवज्ञानिनां किं प्रयोजनम् ? न किञ्चित् प्रयोजनमित्यर्थः । कुतः

---

[1] चापि (ख)
[2] ध्रुवशब्दस्य सम्भावनार्थकत्वं नेति भावः ।

915 [अस्य देहयात्रायाः केवलं लौकिकत्वम्]

निर्दग्धकर्मबीजस्य निर्मलज्ञानवह्निना ।
देहिवद्भासमानस्य देहयात्रा तु[1] लौकिकी ॥

इत्यत्राह—लौकिकस्तु सदाचारः वर्णाश्रमगतनित्यनैमित्तिकसदाचारः फलाभावेऽपि भाव्यते विधीयते इत्यर्थः ॥

ननु ज्ञानिनामपि शरीरसम्बन्धस्य विद्यमानत्वात् कथं ते परित्यजनीयाः ? अकरणे प्रत्यवायश्रवणात् इत्यत्राह—

निर्मलशिवसंविद्वह्निना पुनरुत्पत्तिशङ्काशून्यत्वेन नितरां अतिशयेन दग्धपुण्यपापलक्षणकर्मबीजवतः शिवज्ञानिनः प्रत्यवायसम्बन्धो नास्त्येव । दग्धपटन्यायेन शरीरीव भासमानस्य तस्य देहयात्रा तु करचरणसंचालनादि व्यवहृतिस्तु लौकिकी विदेहकैवल्यपर्यन्तं अनुवर्तते इति अस्थिरेत्यर्थः ॥

अथ—

916 [अस्य कर्मलेपाभावे प्रमाणम्]

"तस्य तावदेव चिरं यावन्न विमोक्ष्ये ।"[2]
"अथ तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम् ।"

1 देहयात्रा च-(क)
2 'अथ सम्पत्स्ये' इति शेषः ।

शिवज्ञानसमापन्नस्थिरवैराग्यलक्षणः ।
[1]स्वकर्मणा न लिप्येत पद्मपत्रमिवाम्भसा ॥

917 [एतत्कृतानां सर्वकर्मणामपि शिवपूजारूपत्वम् ]

गच्छन् तिष्ठन् स्वपन् वाऽपि जाग्रन् वाऽपि महामतिः ।
शिवज्ञानसमायोगात् शिवपूजापरः सदा ॥

---

"यथा पुष्करपलाशमापो न श्लिष्यन्ते,
एवं विदि [2]हि पापं कर्म न श्लिष्यते ।
" स उत्तमः पुरुषः स तत्र पर्येति "

इति छान्दोग्यश्रुत्यनुसारेणाह—

शिवज्ञानलब्धदृढवैराग्यचिह्नः शिवलिङ्गैक्यः स्वकर्मणा स्वेच्छाकर्मणा अम्भसा जलेन पद्मपत्रमिव न लिप्येत इत्यर्थः ॥

अथ—

" यथा वायुः सुशीघ्रोऽपि
मुक्त्वाऽऽकाशं न गच्छति ।"

इति निश्वासकारिकानुसारेण शिवलिङ्गनिष्ठस्य सर्वाऽपि क्रिया शिवलिङ्गपूजारूपेति पञ्चभिः सूत्रैः प्रतिपादयति—

महामतिः शिवलिङ्गैक्यः गच्छन् गमनसमये, तिष्ठन् स्थितिसमये, स्वपन् निद्रासमये, जाग्रन् विषयदर्शनसमये, सदा निरन्तरं शिवज्ञान-

---

[1] स्वस्य अवश्यप्राप्तेन अनिवार्येण कर्मणेत्यर्थः ।
[2] विदि=ज्ञानिनि ।

918 [अस्य सर्वत्र शिवभानम्]

यद्यत् पश्यति सामोदं[1] वस्तु लोकेषु देशिकः ।
शिवदर्शनसम्पत्तिः तत्र तत्र महात्मनः ॥

---

समायोगात् शिवानुसन्धानसम्बन्धात् शिवपूजापरः लिङ्गनिष्ठः इत्यर्थः ॥

ननु विषयदर्शनसमये कथं शिवानुसन्धानम् ? इत्यत्राह—

देशिकः शिवलिङ्गैक्यः लोकेषु यद्यद्वस्तु घटपटादिकं सामोदं प्रीतियुक्तं सत् पश्यति, तत्र तत्र तस्मिंस्तस्मिन् वस्तुनि महात्मनः शिवलिङ्गैक्यंशिवदर्शनसम्पत्तिः शिवालोकनसम्पत्तिः भवेत्, शिवातिरेकेण पदार्थान्तराभावात् चिन्मयत्वबुद्धिः भवेत् इत्यर्थः ॥

919 [तस्य शिवध्यानस्तोत्रपूजाक्रमाः]

अथ—

"आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं
पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः ।
सञ्चारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरः
यद्यत्कर्म करोमि तत्तदखिलं शम्भो ! तवाराधनम् ॥"

---

[1] 'आमोदो मुखवासना' इति कोशानुसारेण अन्यपरोऽप्ययं शब्दः प्रकृते प्रीतिपरः ।

920

यद्यच्चिन्तयते योगी मनसा शुद्धभावनः ।
तत्तच्छिवमयत्वेन[1] शिवध्यानमुदाहृतम् ॥

921

यत्किञ्चित् भाषितं लोके [2]स्वेच्छया शिवयोगिना ।
शिवस्तोत्रमिदं सर्वं यस्मात् सर्वात्मकः शिवः ॥

[922 निगमनम् ]

या या चेष्टा[3] समुत्पन्ना जायते शिवयोगिनाम् ।
सा सा पूजा महेशस्य सर्वदा तद्गतात्मनाम् ॥

(42) इति निर्देशस्थलम् (6-2)

—— o— —

---

इति अभियुक्तवचनानुसारेण त्रिकरणशुद्धशिवलिङ्गपूजोपचारं त्रिभिः सूत्रैः प्रतिपादयन् आचारसम्पत्तिस्थलं समापयति—

शुद्धभावनः निर्मलभावनावानित्यर्थः । ॥ शिष्टं स्पष्टम् ॥

स्पष्टम् ॥

शिवयोगिनां शिवलिङ्गैक्यानां या या चेष्टा कायक्रिया जायते तद्गतात्मनां शिवलिङ्गे तादात्म्येन प्रविष्टस्वरूपवतां तेषां सा सा क्रिया सर्वदा महेशस्य शिवलिङ्गस्य पूजा इत्यर्थः ॥

———

[1] मयं हीति –(ख)
[2] आत्मेच्छयेत्यर्थः, नतु तत्प्रकृतीच्छयेति ।
[3] सत्यप्रकाशानुगुणेति यावत् ।

## (43) अथ ऐक्यस्थले एकभाजनस्थलम् (6–3)

924 [एकभाजनपदार्थः]

विश्वं शिवमयं चेति सदा भावयतो धिया ।[1]
शिवैकभाजनात्मत्वात् एकभाजनमुच्यते ॥

925 [एकभाजनफलम्]

स्वस्य सर्वस्य लोकस्य शिवस्याद्वैतदर्शनात् ।[2]
एकभाजनयोगेन प्रसादैक्यमतिर्भवेत् ॥

---

अथ —

923 [एकभाजनस्थलनिरूपणम्]

"परेऽव्यये सर्व एकीभवन्ति"

इति मुण्डकोपनिषद्वचनानुसारेण सर्वाचारसम्पत्तिमतः शिवलिङ्गैक्यस्य एकभाजनस्थलं पञ्चभिः सूत्रैः प्रतिपादयति—

लिङ्गैक्यस्य शिवैक्यभाजनात्मत्वात् शिवैकाश्रयत्वात् एकभाजनस्थलमुच्यते इत्यर्थः ॥

ननु किमनेन भवति? इत्यत्राह—

स्वस्य स्वात्मनः सर्वस्य लोकस्य समस्तजनस्य अद्वैतदर्शनात् 'अहम्' इति चिदैक्यदर्शनात् एकभाजनयोगेन एककूटत्वेन प्रसादैक्यमतिः

---

[1] नेयं केवलं भावनामात्रम् । किन्तु विषयतत्त्वानुगुणं इति भाव्यम् ।

[2] शिवस्य चेति भावः ।

926 [तेषां शिवः जगच्च]

शिवे विश्वमिदं सर्वं शिवः सर्वत्र भासते ।
आधाराधेयभावेन शिवस्य जगतः स्थितिः ॥

9-7. [एकभाजनवतां मायिके फलाभावः]

चिदेकभाजनं यस्य चित्तवृत्तेः शिवात्मकम् ।
नान्यत्तस्य किमेतेन मायामूलेन वस्तुना ॥

---

शिवप्रसाद एव स्वप्रसादः, स्वप्रसाद एव शिवप्रसादः, स एव स्वातिरिक्त इव भासमानस्य शिवभक्तस्य प्रसादः इति प्रसादैक्यमतिर्भवेत् इति चरमूर्ति पादोदकप्रसादावपि शिवस्य स्वस्य च योग्यौ इति भावः ॥

ननु शिवस्य[1] विश्वस्यैकरूपत्वे तयोः स्थितिः कथम्? इत्यत्राह—

'शिवे विश्वम्', 'विश्वस्मिन् शिवः' इति बीजाङ्कुरन्यायेन आधाराधेयभावेन सम्बन्धेन सामरस्येन शिवस्य जगतः[2] स्थितिः इत्यर्थः ।

एवं चिदेकभाजनतां प्राप्तस्य मायिकभेदेन प्रयोजनं नास्तीत्याह—

यस्य लिङ्गैक्यस्य चित्तवृत्तेः मनोव्यापारस्य चित् मनोव्यापाररूप

[1] विश्वस्य चैक (ख)
[2] जगतश्चेत्यर्थः ।

928 [विश्वस्य शिवात्मकत्वोपपत्तिः]

चित्प्रकाशयते विश्वं तद्विना नास्ति वस्तु हि ।
चिदेकवस्तुचित्तानां किं मायापरिकल्पितैः ॥

929 [निगमनम्]

वृत्तिशून्ये स्वहृदये शिवलीने निराकुले ।
यः सदा वर्तते योगी स मुक्तो नात्र संशयः ॥

---

ज्ञप्तिरेव शिवात्मकं एकभाजनं शिवस्वरूपैकभाजनं तस्य मायामूलेन माया-मूलकेन एतेन भेदेन किम् किंप्रयोजनम्? न किञ्चित् प्रयोजनमित्यर्थः ॥[1]

ननु इदं विश्वं कथं शिवात्मकम्? इत्यत्राह—

विश्वं घटाद्युपलक्षितनिखिलप्रपञ्चं चित् प्रकाशयते, तत् विना चित्प्रकाशं विना वस्तु घटादिवस्तु नास्ति । विषयसत्त्वोपगमे "संविदेव भगवती शरणम्" इति प्राभाकाराः अपि मन्यन्ते । अतः–यद्यदधीनतया भासते तत्तदात्मकं जलतरङ्गादिवत्–इति चिदेकनिष्ठचित्तानां मायापरिकल्पितैः प्रापञ्चिकवेद्यपदार्थैः[2] किं प्रयोजनम्? इत्यर्थः ॥

अथ एकभाजनस्थलं समापयति –

यः शिवयोगी वृत्तिशून्ये व्यापारशून्ये निराकुले क्षोभरहिते

---

[1] मिति यावत् (ख)

[2] वेद्यत्वेन भासमानैरिति भावः ।

## (43) इति एकभाजनस्थलम् (6-3)

---

## (44) अथ ऐक्यस्थले सहभोजनस्थलम् (6-4)

---

शिवलीने शिवलिङ्गैक्यभूते स्वहृदये सदा वर्तते[1] सः मुक्तः जीवन्मुक्तः इत्यर्थः। अत्र सन्देहो नास्तीति भावः ॥

---

अथ—

930 [सहभोजनस्थलनिरूपणम्]

"अग्राह्यमग्राह्येण वायुं वायव्येन सोमं सौम्येन ग्रसति स्वेन तेजसा। तस्मादुपसंहर्त्रे महाग्रासाय वै नमोनमः ॥"

इति [2]अथर्वश्रुत्यनुसारेण एकभाजनस्थलनिष्ठस्य सहभोजनस्थलं दशभिः सूत्रैः प्रतिपादयति—

---

[1] तन्मयीभूतः इत्यर्थः। स्वाप्नादिवृत्तिवत्।

[2] आथर्वणश्रुत्य (ग)

931 [सहभोजनपदार्थः]

गुरोः शिवस्य शिष्यस्य स्वस्वरूपतया[1] स्मृतिः ।
सहभोजनमाख्यातं सर्वग्रासात्मभावतः ॥

932

शिवं विश्वं गुरुं साक्षात् योजयेन्नित्यमात्मनि ।
एकत्वेन चिदाकारे तदिदं सहभोजनम् ॥

---

श्रीगुरोः शिवलिङ्गस्य शिष्यस्य च स्वस्वरूपतया स्वात्माभेदेन अस्मत्प्रत्ययानतिरिक्तत्वेन स्मृतिः, सर्वग्रासात्मभावतः

"घटो मया ज्ञातः"
"पटो मया ज्ञातः"
"चैत्रो मया ज्ञातः"
"मैत्रो मया ज्ञातः"

इति विश्वभेदग्रसनमेव स्वरूपत्वात् सहभोजनं अनुभूतपदार्थस्य पुनः स्वात्मविश्रान्तत्वेन परामर्शनलक्षणं सहभोजनं इत्यर्थः ॥

अथ निष्कर्षमाह—

साक्षात् चिदाकारे आत्मनि शिवं गुरुं च एकत्वेन एकरूपत्वेन नित्यं संयोजयेत् । संयोजनं नाम अस्मद्रूपानतिरिक्तत्वेन परामर्शनं यदस्ति तदिदं सहभोजनम् । अत्र गुरुशिवयोः अस्मद्रूपानतिरिक्तत्वात्

---

[1] स्वस्वरूपमिति-- (ख)

933

अयं शिवो गुरुश्चैष: जगदेच्चराचरम् ।
अहं चेति मतिर्यस्य नास्त्यसौ विश्वभोजकः ॥[1]

934

अहं भृत्य· शिवः स्वामी शिष्योऽहं गुरुरेव वै ।
इति यस्य मतिर्नास्ति स चाद्वैतपदे स्थितः ॥

---

स्वात्मैक्येन संयोजनं सम्भवति । इदंरूपतया भासमानस्य जडस्य कथं आत्मैक्यसंयोजनं संभवति ? इति नाशङ्कनीयम् । तस्यापि उक्तरीत्या आत्मविश्रान्तत्वात् । अन्यथा स्मृतिः न स्यात् । संसारस्यापि सविषयत्वेनैव आत्मसमवेतत्वात्

अथ पुनरपि निष्कर्षमाह—

" अयं शिवः " " एषः गुरुः स्वामी " "एतत् स्थावर-जङ्गमात्मकं विश्वम्, अहं च " इति यस्य बुद्धिः भेदबुद्धिः नास्ति, सोऽसौ शिवलिङ्गैक्यः विश्वभोजकः जगद्भेदभक्षकः इत्यर्थः ॥

अथ इतोऽपि निष्कर्षमाह—

" शिवः स्वामी, अहं भृत्यः " " एषः गुरुः अहं शिष्यः "

---

[1] विश्वभोजनः (ग)

935 [सहभोजनसम्पन्नस्य विश्वहोमित्वम् ]

परोहन्तामये स्वात्मपावके विश्वभास्वति ।
इदन्ता हव्यहोमेन विश्वहोमीति कथ्यते ॥

936 [पराहन्तास्वरूपम् ]

अहं शिवो गुरुश्चाहं अहं विश्वं चराचरम् ।
यया विज्ञायते सम्यक् पूर्णाहन्तेति सा स्मृता ॥

---

इति यस्य मतिः भेदबुद्धिः नास्ति, स च शिवलिङ्गैक्यः अद्वैतपदे विश्वभेदग्रासात्मकशिवाद्वैतस्थाने स्थितः तिष्ठतीत्यर्थः ॥

अथैवंविधसहभोजनसम्पन्न एव विश्वहोमी इति कथ्यते इत्याह—

विश्वप्रकाशके उत्कृष्टमूलाहङ्कारमये स्वात्माग्नौ[1] इदन्तारूपहवनद्रव्यहोमेन विश्वहोमी इति कथ्यते इत्यर्थः ॥

ननु काऽसौ पराहन्ता ? इत्यत्राह—

"शिवोऽहम्" "गुरुरहं च" "चराचरं विश्वमहम्" इति यया चित्या[2] सम्यक् विज्ञायते ।

---

[1] स्वात्मचैतन्यरूपे अग्नौ इत्यर्थः ।

[2] चितिः=संवित्=ज्ञानम् ।

937 [ज्ञानयज्ञदीक्षितस्वरूपम् ]

आधारवह्नौ चिद्रूपे भेदजातं जगद्धविः ।
जुहोति ज्ञानयज्वा यः स ज्ञेयो विश्वहव्यभुक् ॥[1]

---

" अत्र प्रत्यवमर्शात्माऽसौ चितिः स्वरसवाहिनी ।
परा वाग्या आद्यन्तप्रत्याहृतवर्णगणा सत्यहन्ता सा ॥"

इति पञ्चाशिकाशास्त्रस्थित्या देशकालाद्याकारकृतसङ्कोचराहित्येन तद्वाचक सकलमातृकार्णक्रोडीकारलक्षणप्रत्याहृताकारहकारसमेलनात्मकतदन्तर्गतवेद्य-संस्कारलक्षणबिन्दुस्पन्दस्फुरितपरशक्तिशिवात्मकत्वेन स्थूलप्रपञ्चोत्पत्तेः प्राक् तत्कारणत्वेन अण्डरसन्यायेन सामान्यतः ' अहम् ' इति, पश्चात् अन्यव्यामिश्रं अस्वतन्त्रं भेदशक्यावभासनं प्रतिबिम्बमिति तल्लक्षणयोगसाम्येन प्रतिबिम्बगत्या विश्वमयत्वेन स्वातन्त्र्येण भासमाना पूर्णाहन्ता स्मृता इत्यर्थः ॥[2]

अथ उक्तलक्षणविश्वहोम्यैत्र ज्ञानयज्ञदीक्षितः इत्याह—

चिद्रूपे ज्ञानस्वरूपे आधारवह्नौ भेदजातं मायाकल्पितं जगद्धविः विश्वहविः यः जुहोति, सः विश्वहव्यभुक् इति ज्ञेयः ज्ञातुं योग्य इत्यर्थः ॥

---

[1] गीतायामपि " यज्ञायाचरतःकर्म समग्रं प्रविलीयते " इत्याद्युक्तम् ।
[2] अत्र उक्ताः सर्वा अपि प्रक्रियाः तन्त्रार्णवे सुस्पष्टतया प्रतिपादिताः ।

938 [ज्ञानाग्नौविश्वलयक्रमः]

चिदाकारे पराकाशे परमानन्दभास्वति ।
विलीनचित्तवृत्तीनां का वा विश्वक्रमस्थितिः ॥१॥

939 [सहभोजनसम्पन्नस्य मुक्तिस्वरूपम् ]

निरस्तविश्वसम्बाधे निष्कलङ्के चिदम्बरे ।
भावयेल्लीनमात्मानं सामरस्यस्वभावतः ॥

940

सैषा विद्या पराज्ञेया सच्चानन्दप्रकाशिनी ।
मुक्तिरित्युच्यते सद्भिः जगन्मोहनिवर्तिनी ॥

---

ननु प्रत्यक्षवह्नौ तद्व्यतिरिक्तकाष्ठादौ निक्षिप्ते सति तन्नाशो दृश्यते, ज्ञानाग्नौ निक्षिप्तजगतः नाशः कथम् ? इत्यत्राह—

चिदाकारे पराकाशे ऊर्ध्वहृत्कमलकर्णिकाविवरे परमानन्दभास्वति नित्यानन्दमयमहालिङ्गाख्यभानौ विलीनचित्तवृत्तीनां लयीभूतमनोव्यापारवतां लिङ्गैक्यानां विश्वक्रमस्थितिः[1] विश्वव्यापारवर्तनं का वा ? काऽपि नास्तीत्यर्थः ॥

अथ तस्य सहभोजनसम्पन्नस्य लिङ्गैक्यस्य मुक्तिस्वरूपं सूत्रद्वयेन कथयति—

---

1 'क्रमु पादविक्षेपे' इत्यर्थकः क्रमशब्दः व्यापारवृत्तौ पर्यवस्यतीति भावः।

941 [स्थलनिगमनम्]

भक्तादिधामार्पितधर्मयोगात् प्राप्तैकभावः परमाद्भुतेन ।
शिवेन चिद्व्योममयेन साक्षात् मोक्षश्रियो भाजनतामुपैति ॥

इति श्रीमत्षट्स्थलब्रह्मिणा शिवयोगिनाम्ना
रेणुकाचार्येण विरचिते सिद्धान्त-
शिखामणौ शिवलिङ्गैक्यस्य
चतुर्विधस्थलप्रसंगो नाम चतुर्दशः परिच्छेदः
समाप्तः

---

निवारितजननमरणादिक्लेशे दोषरहिते चिदाकाशस्वरूपे महालिङ्गे अङ्गशब्दवाच्यं[1] आत्मानं स्वरूपहानिवृद्धिव्यतिरेकेण सजातीयसमानसमरसभावेन लीनं स्थिरसिद्धिमन्तं भावयेत् । सैषा सच्चिदानन्दस्वरूपप्रकाशिनी परा विद्येति ज्ञातुं योग्या जगन्मोहनिवर्तिनी विश्वभेदभ्रान्तिनिवर्तिनी परा मुक्तिरिति सत्पुरुषैः उच्यते इत्यर्थः ॥

अथ अयं शिवलिङ्गैक्य एव मोक्षलक्ष्मीनिवासस्थानभूतः इत्युक्त्वा सहभोजनस्थलं समापयति—

चिद्व्योममयेन ऊर्ध्वहृत्कमल[2]मध्यस्थितचिदाकाशस्वरूपेण परमाद्भुतेन

---

[1] श्रुतावपि 'अङ्गान्यन्या देवताः' इति शिवातिरिक्तसर्वशक्तीनामपि अङ्गरूपत्वं प्रतिपादितम् ।

[2] मध्यस्थ-(ख)

(14) इति सहभोजनस्थलम् (6-4)
इति ऐक्यस्थलं षष्ठं समाप्तम्

---

इति अङ्गस्थलनिरूपणात्मकः
पूर्वभागः
समाप्तः ॥

---

---

परमाश्चर्यरूपेण शिवेन शिवलिङ्गेन स्वरूपहानिवृद्धिव्यतिरेकेण[1] समान-समरसत्वेन लब्धैकत्ववान् शिवलिङ्गैक्यः भक्तादिधामार्पितधर्मयोगात् भक्तादिस्थलगतसदाचारसम्बन्धात् प्रत्यक्षमोक्षलक्ष्म्याः भाजनतां आश्रयत्वं उपैति प्राप्नोति इत्यर्थः ॥

---

इति पदवाक्यप्रमाणपारावार
धुरीणश्रीमरितोण्टदार्येण विरचितायां
तत्त्वप्रदीपिकाख्यायां सिद्धान्तशिखा
मणिव्याख्यायां चतुर्दशः
परिच्छेदः समाप्तः ॥

---

1 व्यतिरेकः परित्यागः ।

॥ श्री शिवाय नमः ॥

अथ लिङ्गस्थलनिरूपणात्मकः उत्तरभागः

---

# सिद्धान्तशिखामणौ

## पञ्चदशः परिच्छेदः

### लिङ्गस्थले भक्तस्थलगतनवविधलिङ्गप्रसङ्गः

### तत्र लिङ्गस्थलम्

---

942 [लिङ्गस्थलनिरूपणारम्भः]

षट्स्थलोक्तसदाचारसम्पन्नस्य यथाक्रमम् ।
लिङ्गस्थलानि कथ्यन्ते जीवन्मुक्तिपराणि च ॥[1]

---

अथ भक्तादिशिवलिङ्गैक्यान्तषट्स्थलोक्तपिण्डादिसहभोजनान्तचतुश्चत्वारिंशदवान्तरस्थलनिरूपितसदाचारसम्पन्नस्य वर्णाश्रमादिसङ्कल्पविकल्पशून्यत्वेन [2]प्राकृताचारनिवृत्त्या सहभोजनसम्पन्नत्वात् लिङ्गरूपत्वेन तदाचरणीयलिङ्गाचारस्थलानि निरूपयति श्रीरेणुकः—

अङ्गषट्स्थलोक्त सदाचारसम्पन्नस्य शिवलिङ्गैक्यस्य क्रमेण जीवन्मुक्तिपराणि लिङ्गषट्स्थलानि कथ्यन्ते इत्यर्थः ॥

---

[1] पराण्यपि—(ख)

[2] प्राकृत—प्रकृतिमात्रसम्बन्धीत्यर्थः ।

943 [लिङ्गस्थलजिज्ञासा]

अगस्त्य उवाच—

भक्ताद्यैक्यावसानानि [1]षडुक्तानि स्थलानि च।
लिङ्गस्थलानि कानीह? कथ्यन्ते कति वा पुनः?॥

944 [लिङ्गस्थलकथनं प्रतिप्रतिज्ञा]

श्रीरेणुक उवाच—

[2]गुर्वादिज्ञानशून्यान्ताः भक्तादिस्थलसंश्रिताः।
स्थलभेदाः प्रकीर्त्यन्ते पञ्चाशत् सप्त चाधुना॥

(7) लिङ्गस्थले भक्तस्थलम्।

—०—

---

अथ अगस्त्यप्रश्नः—

अगस्त्य उवाच—इति।

स्पष्टम्॥

श्रीरेणुक उवाच—

भक्ताद्यैक्यान्ताङ्गषट्स्थलसंश्रिताः दीक्षागुर्वादिवृत्तिज्ञानशून्यान्ताः सप्तोत्तरपञ्चाशल्लिङ्गस्थलभेदाः अधुना कथ्यन्ते इत्यर्थः॥

---

अथ भक्तस्थलगतलिङ्गस्थलभेदान् सूत्रत्रयेण कथयति—

---

1 षट्स्थलानि उक्तानीत्यन्वयः।

2 अत्र गुरुपदं दीक्षागुरुपरमिति व्याख्या।

945 तत्र भक्तस्थलनिरूपणम्

अदौ नवस्थलानीह भक्तस्थलसमाश्रयात् ।
कथ्यन्ते गुणसारेण नामान्येषां पृथक् श‍ृणु ॥

946 [एतद्भक्तस्थलावान्तरभेदाः]

दीक्षागुरुस्थलं पूर्वं ततः शिक्षागुरुस्थलम् ।
प्रज्ञागुरुस्थलं चाथ क्रियालिङ्गस्थलं ततः ॥

947

भावलिङ्गस्थलं चाथ ज्ञानलिङ्गस्थलं ततः ।
स्वयं परं चरं चेति तेषां लक्षणमुच्यते ॥

---

इह लिङ्गषट्स्थले भक्तस्थलसमाश्रयात् आदौ नव स्थलानि[1] गुणसारेण श्रेष्ठत्वेन, एषां नवस्थलानां नामानि पृथक् पृथक् कथ्यन्ते । श‍ृणु, इत्यर्थः ॥

अथ तानि उद्दिशति—

स्पष्टम् ॥ [(१) दीक्षागुरुस्थलम् ।
(२) शिक्षागुरुस्थलम् ।
(३) प्रज्ञा गुरुस्थलम् ।
(४) क्रियालिङ्गस्थलम् ।
(५) भावलिङ्गस्थलम् ।
(६) ज्ञानलिङ्गस्थलम् ।
(७) स्वयं स्थलम् ।
(८) परस्थलम् ।
(९) चरस्थलम् ॥ इति]

---

[1] एषां स्थलानां श्रेष्ठत्वे भक्तस्थलसमाश्रयणमेव हेतुरिति भावः ।

## (45) भक्तस्थले दीक्षागुरुस्थलम् (7-1)

949

दीयते परमं ज्ञानं क्षीयते पाशबन्धनम् ।
यथा दीक्षेति सा तस्यां गुरुः दीक्षागुरुः स्मृतः ॥

948 [तत्र दीक्षागुरुस्थलनिरूपणम्]

अथ—

"दीयते च यया ज्ञानं क्षीयते च मलत्रयम् ।
सा दीक्षा संज्ञिता तस्यां गुरुः दीक्षागुरुर्मतः ॥"

इति वातुलोत्तरवचनानुसारेण शिवलिङ्गैक्यः[1] एव दीक्षागुरुरिति कथयति–

यथा परमज्ञानं उत्कृष्टशिवज्ञानं "दा दाने" इति धातुगत्या दीयते[2]; पाशबन्धनं मलमायादिपाशबन्धनं, "क्षि क्षये" इति धातुगत्या क्षीयते च; सा दीक्षेति मता संमता। तस्यां चित्क्रियालक्षणदीक्षायां गुरुः "गृ निगरणे" इति धातुगत्या[3] उपदेशकृत् शिवलिङ्गैक्यः दीक्षागुरुः इत्यर्थः ॥

950 [सद्गुरुस्वरूपम्]

अथ गुरुस्वरूपं विशदयति—

1 ऐक्यमापन्नः इति यावत् ।
2 आत्मनि परब्रह्मज्ञानस्वरूपयोग्यता सम्पाद्यते इत्यर्थः ।
3 ज्ञानप्रतिबन्धकं सर्वमपि तमः निगिरतीति भावः ।

गुणातीतं गुकारं च रूपातीतं रुकारकम् ।
गुणातीतमरूपं च यो दद्यात् सः गुरुः स्मृतः ॥

951 [आचार्यस्वरूपम्]

आचिनोति च शास्त्रार्थान् आचारे स्थापयत्यलम् ।[2]
स्वयमाचरते यस्मात् आचार्यस्तेन चोच्यते ॥

---

गुकारं प्राकृतगुणातीतं, रुकारं अशुद्धमायारूपातीतम् । गुणातीतं अरूपं च मण्डलत्रयात्मकगुणत्रयं ज्योतिर्मयबैन्दवकलाशून्यचिन्मयवस्तु यः ददाति[1] उपदिशति सः गुरुः स्मृतः गुरुरिति स्मृतः इत्यर्थः ॥

अथ एतत्प्रसङ्गात् आचार्यस्वरूपं च विशदयति—

शास्त्रार्थान् वीरशैवशास्त्ररहस्यार्थान् प्रकटीकृत्य कथयति, आचारे वीरशैवाचारे शिष्यान् अलं आधिक्येन स्थापयति नियमयति, स्वयं च वीरशैवाचारे आचरते, तेन हि तेन कारणेन—

"आश्चर्यो वक्ता कुशलोऽस्य लब्धा"

इति कठवल्लीश्रुत्यनुसारेण आचार्य इत्युच्यते इत्यर्थः ॥

---

1 इदं सर्वं तन्त्रग्रन्थेषु व्याख्यातम् ।
2 अलं = यावदावश्यकमित्यर्थः ।

952 [देशिकस्वरूपम्]

षडध्वातीतयोगेन यतते यस्तु देशिकः ।
मायाब्धितारणोपायहेतुः विश्वगुरुः शिवः ॥

953 [जगद्गुरुत्वप्राप्तिहेतुः]

अखण्डं येन चैतन्यं व्यज्यते सर्ववस्तुषु ।
आत्मयोगप्रभावेन स गुरुः विश्वभासकः ॥[2]

---

अथ देशिकशब्दनिर्वचनं कृत्वा शिवलिङ्गैक्य एव जगद्गुरुरिति सूत्रद्वयेनोक्त दीक्षागुरुस्थलं समापयति —

"ज्ञानान्मुक्तिं दिशति यः सः देशिक इति स्मृतः ॥"

इति कामिकवाक्यप्रसिद्धः यः देशिकः षडध्वातीतयोगेन —

"अध्वनामध्वपते श्रेष्ठस्याध्वनः पारमशीय"

इति श्रुतिप्रसिद्ध वर्णपदादि षडध्वातीतयोगेन यतते उद्योगवान्[1] आस्ते, सः शिवः शिवलिङ्गैक्यः मायाब्धितारणोपायहेतुभूतजगद्गुरुः इत्यर्थः ॥

अथ कथमयं जगद्गुरुः ? इत्यत्राह—

सर्ववस्तुषु नीलपीतादिसकलवस्तुषु आत्मयोगप्रभावेन स्वानुभवबलात्

---

1 उन्नतस्थानयोगवानित्यर्थः ।

2 तथा च जगतः गुरुः इति नार्थः किन्तु जगत्तत्त्वप्रतिभासकः गुरुः इत्यर्थः इति भावः ।

## (45) इति दीक्षागुरुस्थलम् (7-1)

---

## (46) अथ भक्तस्थले शिक्षागुरुस्थलम् (7-2)

---

अखण्डं सच्चिदानन्दात्मकं चैतन्यं येन व्यज्यते नीलपीतादिप्रतिनियत पदार्थावभासनकालेऽपि "अहम्" इति अखण्डचैतन्यं अनुवर्तते एव। अन्यथा तद्वैचदर्शनं न स्यात् इति स्फुटीक्रियते, सः गुरुः विश्वभासकः= विश्वप्रकाशकः इत्यर्थः ॥

---

अथ—

954 [शिक्षागुरुस्थलनिरूपणम्]

"बोध्यबोधकभावेन ज्ञानद्वारेण शास्यते ।
शिष्यो हि येन गुरुणा स शिक्षागुरुच्यते ॥"

इति वातुलोक्तवचनानुसारेण शिक्षागुरुस्थलं निरूपयति—

---

[1] अन्यथा व्यवसायसामान्यस्य अनुव्यवसायहेतुत्वं न स्यादिति भावः ।

955 [शिक्षागुरुस्वरूपम्]

दीक्षागुरुरसौ शिक्षाहेतुः शिष्यस्य बोधकः ।
प्रश्नोत्तरप्रवक्ता च शिक्षागुरुरितीर्यते ॥[1]

956 [अत्राचार्यस्वरूपम्]

संस.र तिमिरोन्माथिशरच्चन्द्रमरीचयः ।
वाचो यस्य प्रवर्तन्ते तं आचार्यं प्रचक्षते ॥

---

अयं शिवसिद्धान्तबोधकः परतत्त्वप्रकाशकः इत्यर्थः ।

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ॥"

इति वैयाकरणोक्तेः स्फुटं देशिकोपदेशस्फुटीभूतं एतत् शिवयोगज्ञानं बोध्यम् इति येन गुरुणा शिष्यः समाख्यातः बोधकः सन् नियुज्यते नियम्यते सः शिक्षागुरुः इत्यर्थः ॥

अथ—

"आचार्यः पूर्वरूपम् ।
अन्तेवास्युत्तररूपम् ।
विद्या सन्धिः ।"
"आचार्योऽन्तेवासिनमनुशास्ति ।"

इत्यादि श्रुत्यनुसारेण द्वैविध्येन तत्स्वरूपं वर्णयति—

यस्य वाचः उपदेशवाक्यानि संसारतिमिरविनाशने शरच्चन्द्रमरीचय

---

1 'गुरोस्तु मौनं व्याख्यानं' इतिवत् नायं मौनेन व्याख्याता, किन्तु स्फुट-प्रवचनेनेति भावः ।

957

ददाति यः पतिज्ञानं जगन्मायानिवर्तकम् ।
अद्वैतवासनोपायं तं आचार्यवरं विदुः ॥[2]

958 [ श्रेष्ठगुरुस्वरूपम् ]

पूर्वपक्षं समादाय जगद्भेदविकल्पनम् ।
अद्वैत कृतसिद्धान्तः गुरुरेष गुणाधिकः ॥

---

इवं [1]प्रवर्तन्ते, तं आचार्यं सन्तं प्रचक्षते कथयन्ति ॥

यः जगन्मायानिवर्तकं प्रापञ्चिकभेद भ्रान्तिनिवर्तकं पतिज्ञानं—

"पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम् ।"

इति नारायणोपनिषत्प्रसिद्ध स्वात्माभिन्नशिवज्ञानं ददाति प्रकाशयति, तं आचार्यवरं आचार्यश्रेष्ठं सन्तं विदुः जानन्तीत्यर्थः ॥

अथ शिवाद्वैतज्ञानसम्पन्नः सन् शिष्यसन्देहवारकं एव गुरुश्रेष्ठः इति सूत्रद्वयेनाह—

जगद्भेदविकल्पनं प्रापञ्चिकभेदद्वैविध्यविशिष्टं पूर्वपक्षं समादाय अङ्गीकृत्य अद्वैतकृतसिद्धान्तवान् एष गुरुः शिक्षागुरुरेव गुणाधिकः श्रेष्ठः इत्यर्थः ॥

---

1 तथाच अस्य वस्तुनिष्ठज्ञानजनकवाक्यवक्तृत्वं अपेक्षितमिति भावः ।
2 'आचिनोति हि शास्त्राणि आचारे स्थापयत्यपि' इत्याद्यपितल्लक्षणं अन्यत्र प्रसिद्धम् ।

959

सन्देहवनसन्दोहसमुच्छेदकुठारिका ।
यत्सूक्तिधारा विमला स गुरूणां शिखामणिः ॥

960 [भवतारकगुरुस्वरूपम् ]

यत्सूक्तिदर्पणाभोगे निर्मले दृश्यते सदा ।
मोक्षश्रीः बिम्बरूपेण स गुरुः भवतारकः ॥

961 [ज्ञानप्रदातृश्रीगुरुस्वरूपम् ]

शिष्याणां हृदयालेख्यं प्रद्योतयति यः स्वयम् ।
ज्ञानदीपिकयाऽनेन गुरुणा कः समो भवेत् ? ॥

---

विमला निर्मला यत्सूक्तिधारा यस्य गुरोः उपदेशवाक्यधारा सन्देहवनसन्दोहसमुच्छेदकुठारिका संशयारण्यसमुच्छेदपरशुः सः गुरूणां शिखामणिः श्रेष्ठः इत्यर्थः ॥[1]

अथ इममर्थमेव विशेषयति सूत्रद्वयेन—

निर्मले यस्योपदेशोक्तिदर्पणमण्डले मोक्षलक्ष्मीः बिम्बरूपेण प्रतिबिम्बरूपेणेत्यर्थः दृश्यते प्रकाशते सः गुरुः भवतारकः संसारार्णवतारकः इत्यर्थः ।

अथ प्रकारान्तरेणाह—

---

[1] शब्दस्य शब्दान्तरस्वरूपार्थनिष्ठत्वेकस्यापि सन्देहस्य परिहाराभावाद् एवमुक्तम् ।

962 [एतादृशगुरोः दुर्लभत्वम् ]

परमाद्वैतविज्ञानपरमौषधिदानतः ।
संसाररोगनिर्माथी देशिकः केन लभ्यते ? ॥

---

(46) इति शिक्षागुरुस्थलम्

---

य: श्रीगुरुः शिष्याणां हृदयालेख्यं हृत्कमलस्थनिजरूपचित्रं[1] ज्ञानदीपिकया ज्ञानदीपेन प्रद्योतयति प्रकाशयति, अनेन गुरुणा शिक्षागुरुणा कः भवेत् ? न कोऽपि समः इत्यर्थः ॥

अथ एतादृशगुरुः अस्ति वा ? इत्यत्र "अस्ति, दुर्लभः" इत्युक्त्वा शिक्षागुरुस्थलं समापयति ॥

शिवकारुण्यरहितेन केनापि[2] न लभ्यते इत्यर्थः ॥

---

[1] तत्त्वभावनारूपमिति यावत् ।
[2] साधारणजनेनेत्यर्थः । अन्यथा शास्त्रवैयर्थ्यात् ।

## (47) भक्तस्थले ज्ञानगुरुस्थलम् 7-3

964 [ज्ञानगुरुस्वरूपम् ]

उपदेष्टोपदेशानां संशयच्छेदकारकः ।
सम्यग् ज्ञानप्रदः साक्षात् एषः ज्ञानगुरुः स्मृतः ॥

---

963 [ज्ञानगुरुस्थलनिरूपणम् ]

अथ—

"शिवरूपानुसन्धायि ज्ञानं येनोपदिश्यते ।
मुमुक्षोः मोक्षसिद्ध्यर्थं सः ज्ञानगुरुरुच्यते ॥"

इति वातुलोत्तरवचनानुसारेण ज्ञानगुरुस्थलं निरूपयति—

उपदेशानां[1] रहस्यार्थानां उपदेष्टा उपदेशकृत् संशयच्छेदकारकः शिष्यसन्देहवारकः[2] एषः शिक्षागुरुरेव सम्यक् साक्षात् ज्ञानप्रदः प्रत्यक्षीभूतशिवज्ञानप्रदः सन् ज्ञानगुरुः इति स्मृतः इत्यर्थः ॥

965

ननु शिवज्ञानं कीदृशम् ? तत् कथं प्रत्यक्षीकरोति ? इत्यत्राह—

---

[1] उपदेश्यानामिति यावत् ।

[2] प्रायशः अप्रत्यक्षे वस्तुनि ऐन्द्रियिकप्रत्यक्षानुभवजीविनः संशयस्य सहजत्वादिति भावः ।

निरस्त विश्वसम्भेदनिर्विकारं चिदम्बरम् ।
साक्षात्करोति यो युक्त्या सः ज्ञानगुरुरुच्यते ॥

966 [शिवज्ञानवैभवम् ]

कलङ्कवानसौ चन्द्रः क्षयवृद्धिपरिप्लुतः ।
निष्कलङ्कस्थितौज्ञानचन्द्रमाः निर्विकारवान् ॥

---

निरस्तविश्वसम्भेद—

" न किञ्चिदवेदिषम् "[1]

इति शून्यप्रतीतिबलात् निराकृतविश्वभेदं विकारहीनं चिदाकाशं चिद्व्योम युक्त्या स्फुटतरभासमाननीलसुखादिप्रमात्रन्वेषणद्वारा पारमार्थिकप्रमातृलाभः इह उपदिश्यते इति शिवाद्वैतशास्त्रोक्त स्वानुभवयुक्त्या[2] यः प्रत्यक्षीकरोति सः ज्ञानगुरुः इत्यर्थः ॥

अथ शिवज्ञानं प्रस्तौति सूत्रद्वयेन—

क्षयवृद्धिपरिप्लुतः क्षयवृद्धिपीड्यमानः असौ चन्द्रः कलङ्कवान्ः निर्विकारवान् विकाररहितः ज्ञानचन्द्रमाः चिच्चन्द्रः निष्कलङ्कस्थितः कलङ्करहितः सन् तिष्ठति[3] इत्यर्थः ॥

---

[1] भौतिकं दैनन्दिनप्रात्यक्षिकवस्तु न किञ्चिदित्यर्थः ।
[2] अवस्थाभेदे इत्यर्थः ।
[3] ज्ञानिनां हृदये इत्यर्थः ।

967

पार्श्वस्थतिमिरं हन्ति प्रदीपो मणिनिर्मितः ।
सर्वगामि तमो हन्ति बोधदीपो निरङ्कुशः ॥

968 [शिवज्ञानप्रदातृश्रीगुरुमहिमा]

सर्वार्थसाधकज्ञानविशेषादेशतत्परः ।
ज्ञानाचार्यः समस्तानां अनुग्रहकरः शिवः ॥[2]

969 [अस्य गुरोः चन्द्रत्वरूपणम्]

कटाक्षचन्द्रमा यस्य ज्ञानसागरवर्धनः ।
संसारतिमिरच्छेदी स गुरुः ज्ञानपारगः ॥

---

मणिनिर्मितः रत्ननिर्मितः दीपः पार्श्वस्थान्धकारं निवारयति। निरङ्कुशः अनर्गलः बोधदीपः चित्प्रदीपः सर्वगामितमः [1]सर्वत्र विद्यमानं तमः निवारयतीत्यर्थः ॥

अथ शिवज्ञानोपदेशतत्परं श्रीगुरुं सूत्रद्वयेन प्रस्तौति—

भोगमोक्षलक्षणसर्वप्रयोजनसाधकशिवज्ञानविशेषोपदेशासक्तः ज्ञानगुरुरेव समस्तानां मुमुक्षूणां अनुग्रहकरः साक्षात् शिवः इत्यर्थः ॥

यस्य आचार्यस्य कटाक्षचन्द्रमाः शिवज्ञानोदधिवर्धनः संसार-

---

[1] सर्वत्र हृदये मनसि चेत्यर्थः ।

[2] उत्तरश्लोकस्थः गुरुशब्दः अत्राप्यन्वेति ।

470 [अस्यगुरोः सूर्यस्वरूपणम् ]

बहिस्तिमिरविच्छेत्ता भानुरेष प्रकीर्तितः ।
बहिरन्तस्तमश्छेदी विभुः देशिकभास्करः ॥

971 [शिवज्ञानस्वरूपम् ]

कटाक्षलेशमात्रेण विना ध्यानादिकल्पनम् ।
शिवत्वं भावयेद्यत्र स वेदः शाम्भवो मतः ॥

---

तिमिरच्छेदी सः श्रीगुरुः ज्ञानपारगः परापरज्ञानपारङ्गतः इत्यर्थः ॥

अथ तमेव गुरुं भानुत्वेन वर्णयन् ततोऽप्याधिक्यं प्रतिपादयति—

एष भानुः बहिस्तिमिरविच्छेत्ता बाह्यान्धकारनिवारकः । विभुः चिद्व्यापकः देशिकभास्करः ज्ञानाचार्यसूर्यः बहिरन्तस्तमश्छेदी[1] "नायं शिवः" इति विषयगतं अज्ञानम् "नाहं शिवः" इति अन्तर्गताज्ञानं च भित्ति इति प्रकीर्तितः ॥

अथ शिवावेदकं शिवज्ञानं सूचयित्वा ज्ञानगुरुस्थलं सूत्रद्वयेन समापयति—

ध्यानधारणादिसङ्कल्पं विना श्रीगुरोः कृपापाङ्गदर्शनमात्रेण शिवत्वं

---

[1] यदावा अयं गुरुः अन्तस्तमश्छेदी तदैव बाह्यं यत्तमः वस्तुषु तत्त्वसम्बन्धाप्रकाशः तस्य नाशोभवतीति भावः ।

972 [श्रीगुरोः ज्ञानसागरत्वम् ]

शिववेदकरे ज्ञाने दत्ते येन सुनिर्मले ।
जीवन्मुक्तो भवेत् शिष्यः स गुरुः ज्ञानसागरः ॥

---

(47) इति ज्ञानगुरुस्थलम् (7–3)

(48) अथ भक्तस्थले क्रियालिङ्गस्थलम् (6–1)

---

भावयेत् स्फुटं भवेत् स वेदः शाम्भवः इति मतः संमतः इत्यर्थः ॥[1]

येन श्रीगुरुणा शिववेदकरे स्वात्मशिवतास्फुटीकरणप्रवीणे निर्मले शिवज्ञाने दत्तेसति[2] शिष्यो जीवन्नपि मुक्तः स्यात् स गुरुः शिवज्ञानसागरः इत्यर्थः ॥

973 [क्रियालिङ्गस्थलनिरूपणम् ]

अथ—

"इष्टमूर्जं[3] तपसाऽनुयच्छति"

इत्याथर्वणीश्रुतिः । एतद्विवरणरूपेण—

---

[1] अत एव वेदस्य ब्रह्मपदेनापि व्यपदेशः इति भावः ।
[2] उपदिष्टे सतीति यावत् ।
[3] इषमूर्जं (ख)

974 [क्रियालिङ्गस्वरूपम्]

गुरोर्विज्ञानयोगेन क्रिया यत्र विलीयते ।
तत् क्रियालिङ्गमाख्यातं सर्वैरागमपारगैः ॥

---

"सकलं दृक्कलाग्राह्यं इष्टलिङ्गस्थलं महत् ।
इष्टावाप्तिकरं साक्षात् अनिष्टपरिहारकम् ॥

इष्टमूर्जं[1] स्वभक्तानां अनुयच्छति सर्वदा ।
इष्टलिङ्गमिति प्राह तस्मात् आथर्वणी श्रुतिः ॥"[2]

इति वातुलतन्त्रवचनेन ज्ञानगुरूपदिष्टक्रिया यत्र लयं गच्छति तत् क्रियालिङ्गस्थलम् इति सप्तभिः सूत्रैः[3] प्रतिपादयति—

गुरोः ज्ञानगुरोः विज्ञानयोगेन विशेषज्ञानयोगेन क्रिया यस्मिन् अधिकरणे विलीयते तत् क्रियालिङ्गम् क्रियार्थं इष्टलिङ्गम् इति आगमपारगैः शिवसिद्धान्तपारङ्गतैः सर्वैः वीरशैवाचार्यैः प्रोक्तं इत्यर्थः ॥

975

ननु किंतत्स्वरूपम् ? इत्यत्राह—

---

[1] इषमूर्जं (ख)

[2] आथर्वणश्रुतिः (ग)

[3] श्लोकैरित्यर्थः ।

परानन्दचिदाकारं परब्रह्मैव केवलम् ।
लिङ्गं सद्रूपतापन्नं लक्ष्यते विश्वसिद्धये ॥

976 [इष्टलिङ्गपूजाजन्यसिद्धिस्वरूपम् ]

लिङ्गमेव परंज्योतिः भवति ब्रह्म केवलम् ।
तस्मात् तत्पूजनादेव सर्वकर्मफलोदयः ॥

977 [लिङ्गपूजायाः श्रेष्ठ्यम् ]

परित्यज्य क्रियाः सर्वाः लिङ्गपूजैकतत्पराः ।
वर्तन्ते योगिनः सर्वे तस्मात् लिङ्गं विशिष्यते ॥

---

नित्यानन्दस्वरूपं सत् अन्तर्मुखज्ञानस्वरूपं सत् अस्तितारूपं गतं केवलं परब्रह्मैव [1]विश्वसिद्धये समस्तसत्क्रियासिद्ध्यर्थं लिङ्गं इष्टलिङ्गमिति लक्ष्यते इत्यर्थः ॥

अथ सा सिद्धिः कथं भवति ? इत्यत्राह—

परंज्योतिस्स्वरूपं केवलं परब्रह्मैव क्रियार्थलिङ्गम् । तस्मात् तत्पूजनादेव सर्वकर्मफलोदयः सकलसत्कर्मफलाविर्भावः भवति जायते इत्यर्थः ॥

तस्मात् लिङ्गमेव श्रेष्ठमित्याह—

सर्वे योगिनः सनकादिसमस्तयोगिनः सर्वाः क्रियाः

---

1 ‘ विश्वमशेषं कृत्स्नं ’ इत्यमरः ।

978 [क्रियालिङ्गव्याप्तिः]

यज्ञादयः क्रियास्सर्वाः लिङ्गपूजांशसंमिताः ।[2]
इति यत् पूज्यते सिद्धैः तत् क्रियालिङ्गमुच्यते ॥

979 [लिङ्गपूजायाः सिद्धताहेतुत्वम् ]

किं यज्ञैरग्निहोत्राद्यैः ? किं तपोभिश्च दुश्चरैः ?
लिङ्गार्चनरतिर्यस्य स सिद्धः सर्वकर्मसु ॥

---

समस्तयोगादिक्रियाः परित्यज्य इष्टलिङ्गपूजैकतत्पराः सन्तो वर्तन्ते । तस्मात् लिङ्गं क्रियालिङ्गं विशिष्यते[1] इत्यर्थः ॥

ननु सनकादीनां यज्ञादिक्रियापरित्यागः किंनिबन्धनः ? इत्यत्राह—

यज्ञादयः क्रियाः सर्वाः लिङ्गपूजालेशभाजिनः इति मत्वा सनकादिभिः सिद्धैः यल्लिङ्गं पूज्यते, तस्मात् क्रियालिङ्गं सकलक्रियार्थ-लिङ्गमित्युच्यते इत्यर्थः ॥

तस्मात् लिङ्गपूजासम्पन्नस्य काऽपि क्रिया माऽस्तु [3]इत्याह—

सर्वकर्मसु सिद्धः सकलकर्मविषये सिद्धिमान् इत्यर्थः । शिष्टं स्पष्टम् ॥

---

[1] सर्वोत्तमं भवतीत्यर्थः ।
[2] पूजांशसंहिताः । (घ)
[3] लिङ्गेनैव सकलक्रियार्थसिद्धेः इति भावः ।

980 [लिङ्गपूजामहिमा]

ब्रह्मविष्ण्वादयः सर्वे विबुधाः लिङ्गमाश्रिताः ।
सिद्धाः स्वस्वपदे भान्ति जगत्तन्त्राधिकारिणः ॥[1]

— —

(48) इति क्रियालिङ्गस्थलम् (7–4)

(49) अथ भक्तस्थले भावलिङ्गस्थलम् (7-5)

अथ किमुत ब्रह्मादयोऽपि इष्टलिङ्गपूजामहिम्नैव जगन्निर्माणादि-क्रियासिद्धिमन्तः सन्तः स्वस्वस्थानेषु लसन्ति इत्युक्त्वा क्रियालिङ्गस्थलं समापयति—

सिद्धाः प्रसिद्धाश्च इत्यर्थः । जगत्तन्त्राधिकारिणः जगन्निर्माणादि-क्रियाधिकारिणः इत्यर्थः । शिष्टं स्पष्टम् ॥

981 [भावलिङ्गस्थलनिरूपणम्]

अथ—

" भावग्राह्यमनीलाख्यं [2]भावभावकरं परम् ।
कल्पसर्गकरं देवं ये विदुस्ते जहुस्तनुम् ॥

---

[1] तन्त्रपदं तन्यते त्रायते इति व्युत्पत्त्या निर्माणपरमिति भावः ।

[2] शून्यसम्पादनकरमिति यावत् ।

982 [भावलिङ्गपदार्थः]

क्रिया यथा लयं याति तथा भावोऽपि लीयते ।
यत्र तद्देशिकैरुक्तं भावलिङ्गमिति स्फुटम् ॥

983 [भावलिङ्गवैशिष्ट्यम्]

भावेन गृह्यते देवः भगवान् परमः शिवः ।
किं तेन क्रियते तस्य नित्यपूर्णो हि संस्मृतः ॥

---

इति श्वेताश्वतरश्रुत्यनुसारेण—

"निष्कलं भावलिङ्गं स्यात् भावग्राह्यं परात्परम् ॥"

इति वातुलतन्त्रवचनानुसारेण च, क्रियेव[1] भावोऽपि यत्र लयं गच्छति, तत् भावलयकारणीभूतप्राणलिङ्गमिति भावलिङ्गस्थलं निरूपयति—

यथा क्रियालयस्थानं क्रियालिङ्गम्, तथा भावलयस्थानं भावलिङ्गम्, भावलयकारणीभूतं प्राणलिङ्गम् इति देशिकैः [2]स्फुटं उक्तमित्यर्थः ॥

अथ अनयोः किं विशिष्टम्? इत्यत्र भावलिङ्गं सूत्रद्वयेन विशेषयति—

भगवान् षड्गुणैश्वर्यसम्पन्नः परमेश्वरः भावेन गृह्यते निर्मलान्तःकरण-

---

[1] क्रियैव । (ख)
[2] आचार्यैः इत्यर्थः ।

29

984

[1]अखण्डपरमानन्दबोधरूपः परः शिवः ।
भक्तानामुपचारेण भावयोगात् प्रसीदति ॥

985 [भावलिङ्गस्य श्रेष्ठत्वे हेतुः]

मृच्छिलाविहिताल्लिङ्गात् भावलिंङ्ग विशिष्यते ।
निरस्तसर्वदोषत्वात् ज्ञानमार्गप्रवेशनात् ॥

---

वृत्त्या प्रकाश्यते इति, तेन बाह्यक्रियालयेन किम्? किं प्रयोजनम्? न किञ्चित् प्रयोजनमित्यर्थः । कुतः? इत्यत्राह—सः परमेश्वरः हि यस्मात् कारणात् नित्यपूर्णः नित्यतृप्तः इति स्मृतः, तस्मात् कारणात् क्रियापूजनेन प्रयोजनं नास्तीत्यर्थः ।

अपरिच्छिन्नपरमानन्दचिद्रूपः परमेश्वरः शिवभक्तानां भक्तिपूर्वक-मानसोपचारेण भावयोगात् मनस्सन्निवेशात्[2] प्रसीदति प्रसन्नो भवतीति भावलिङ्ग प्रशस्तमित्यर्थः ॥

तस्मात् भावलिङ्गमेव प्रशस्तमिति कण्ठोक्त्यैवाह—

मृच्छिलादिनिर्मितात् लिङ्गात् भावलिङ्ग भावलयकारणीभूतप्राण-लिंङ्ग विशिष्यते । विशिष्ट भवति । कुतः? इत्यत्राह—निरस्त

---

1 अखण्डपदं आकाशवत् परिच्छेदाभावपरम् ।
2 तत्रैव मनोलयादिति भावः ।

986 [भावलिङ्गिपदार्थः]

विहाय बाह्यलिङ्गानि चिल्लिङ्गं मनसि स्मरन् ।
पूजयेत् भावपुष्पैर्यः भावलिङ्गीति कथ्यते ॥

987 [शिवयोगिनःस्वरूपम् ]

मूलाधारेऽथवा चित्ते भ्रूमध्ये वा सुनिर्मलम् ।
दीपाकारं यजन् लिङ्गं भावद्रव्यैः स योगवान् ॥

---

सर्वदोषत्वात् छेदनभेदनादिदोषरहितत्वात् ज्ञानमार्गप्रवेशनात् इति ॥

अथ भावलिङ्गिनं कथयति —

यः मृच्छिलादिनिर्मितबाह्यलिङ्गानि परित्यज्य, तत्—

" प्राणेष्वन्तर्मनसो लिङ्गमाहुः "

इति आथर्वणश्रुतिप्रसिद्धचिन्मयप्राणलिङ्गं मनसि हृत्कमले स्मरन् सन् भावपुष्पैः भावकल्पिताहिंसाद्यष्टपुष्पैः पूजयेत् , सः भावलिङ्गीति [1]भावगोचरीभूतप्राणलिङ्गवान् इति कथ्यते इत्यर्थः ॥

अथ तत्प्राणलिङ्गपूजक एव शिवयोगी इति कथयति—

मूलाधारे मूलकमले अथवा चित्ते मध्यहृदये भ्रूमध्ये ऊर्ध्वहृदये वा

---

[1] मनसा कल्पितं तत् लिङ्गं इति केचित् , तन्न युक्तम् , वस्तुतः तस्मिन् स्थाने ज्योतिर्मयं तत् वर्तते एव, तस्यैव दर्शनं विहितमिति अभिज्ञाः ।

988 [शिवयोगिनो निष्ठा]

स्वानुभूतिप्रमाणेन ज्योतिर्लिङ्गेन संयुतः ।
शिलामृद्दारुसम्भूतं न लिङ्गं पूजयत्यसौ

दीपाकारं—

" हृदयकमलमध्ये दीपवद्वेदसारं प्रणवमयमतर्क्यं योगिभिर्ध्यानगम्यम् ।"

इति योगशास्त्रप्रसिद्धदीपोपमं अत्यन्तनिर्मलं लिङ्गं प्राणलिङ्गं[1] भावद्रव्यैः पूर्वोक्तभावपुष्पैः यः पूजयेत्, सः योगवान् शिवयोगवान् इत्यर्थः ॥

अथ भावपूजामेव विशेषयित्वा शिवयोगी क्रियालिङ्गनिष्ठो नेति कथयति—

असौ शिवयोगी स्वानुभूतिप्रमाणेन " अहमस्मि " इति अकर्मकस्वानुभवप्रमाणेन ज्योतिर्लिङ्गेन चिन्मयप्राणलिङ्गेन संयुक्तः सन् पाषाणमृत्काष्ठनिर्मितं लिङ्गं न पूजयेत् नार्चयतीत्यर्थः ॥

989 [भावलिङ्गस्थलनिगमनम् ]

अथ भावसिद्धज्योतिर्लिङ्गपूजां विशिष्टीकृत्य[2] भावलिङ्गस्थलं समापयति —

---

[1] वस्तुतः तस्मिन् स्थाने वर्तमानम् ।
[2] तस्योत्तमोत्तमतां उपपाद्येत्यर्थः ।

क्रियारूपा तु या पूजा सा ज्ञेया स्वल्पसंविदाम् ।
अन्तरा भावपूजा तु शिवस्य ज्ञानिनां मता ॥

(49) इति भावलिङ्गस्थलम् (7-5)

(50) अथ भक्तस्थले ज्ञानलिङ्गस्थलम् (7-6)

—०—

शिवस्य शिवलिङ्गस्य क्रियारूपा तु या पूजा कर्मकाण्डप्रसिद्धक्रिया-स्वरूपिणी या पूजाऽस्ति, सा स्वल्पसंविदां[1] अज्ञानिनामेव मता संमता सती ज्ञेया । अन्तरा [2]भावपूजा तु ज्ञानकाण्डप्रसिद्धान्तःपूजा तु ज्ञानिनां परिपूर्णशिवज्ञानिनां मता संमता ॥

990 [ज्ञानलिङ्गस्थलनिरूपणम् ]

अथ—

" अचिन्त्यं चाप्रमेयं च व्यक्ताव्यक्तं परं च यत् ।
सूक्ष्मात् सूक्ष्मतरं ज्ञानं तन्मे मनः शिवसङ्कल्पमस्तु ॥"

इति श्रुत्यनुसारेण,

---

[1] ' चित् संवित् ' इति संवित्पदं ज्ञानपरम् । तथाच ज्ञानस्य अपूर्णत्वे तत् ज्ञानं अज्ञानपर्यायमेवेति भावः ।

[2] भावसामान्यस्य अन्तःपदार्थत्वात् अन्तःपूजेति व्याख्या ।

991 [ज्ञानलिङ्गपदार्थः]

तद्भावज्ञापकज्ञानं लयं यत्र समश्नुते ।
तद् ज्ञानलिङ्गमाख्यातं शिवतत्त्वार्थकोविदः ॥

992

त्रिमूर्तिभेदनिर्मुक्तं त्रिगुणातीतवैभवम् ।
ब्रह्म यद् बोध्यते तत्तु ज्ञानलिङ्गमुदाहृतम् ॥

---

"परात्परं तु यत् प्रोक्तं तृप्तिलिङ्गं तदुच्यते ।
भावनातीतमव्यक्तं परं ब्रह्म शिवाभिधम् ॥"

इति प्रवृत्तवातुलोत्तरवचनानुसारेण च, भावलिङ्गप्रकाशकज्ञानलयस्थानं तृप्तिलिङ्गापरपर्यायज्ञानलिङ्गस्थलं निरूपयति—

[1]तद्भावज्ञापकज्ञानं तद्भावलिङ्गप्रकाशकज्ञानं यत्र लयं गच्छति तत् ज्ञानलिङ्गं ज्ञानाश्रयीभूततृप्तिलिङ्गमिति शिवतत्त्वरहस्यार्थवेदिभिः वीरशैवैः[2] आख्यातमित्यर्थः ॥

अथ तदेव विशदयति—

ब्रह्मविष्णुरुद्रलक्षणमूर्तित्रयभेदरहितं सत्त्वरजस्तमोरूपगुणत्रयोत्तीर्ण-तुर्यतुर्यातीतसम्पत्तिमत् ब्रह्म बोध्यते श्रुतिगुरुस्वानुभवैः प्रकाश्यते ।

---

1 अत्र सर्वत्र भावपदं भावलिङ्गरूपार्थकं पारिभाषिकं पदम् ।
2 प्रथमे अध्याये वीरशैवपदव्याख्या अत्यन्तविस्तरेण कृता ।

993

स्थूले क्रियासमापत्तिः सूक्ष्मे भावस्य सम्भवः ।
स्थूलसूक्ष्मपदातीते ज्ञानमेव परात्मनि ॥

994 [उपासनार्थापेक्षितस्थूलसूक्ष्मरूपाणि]

कल्पितानि हि रूपाणि स्थूलानि परमात्मनः ।
सूक्ष्माण्यपि च तैः किं वा परबोधं समाचरेत् ॥"

---

तत् ज्ञानलिङ्ग ज्ञानस्याश्रयीभूततृप्तिलिङ्गमित्युच्यते[1] इत्यर्थः ॥

अथ तत् ज्ञानलिङ्ग सूत्रद्वयेन विशेषयति—

स्थूले स्थूलरूपेष्टलिङ्गे क्रियारूपपूजासम्पत्तिः सूक्ष्मे प्राणलिङ्गे भावोद्भवः निर्मलत्वमित्यर्थः । स्थूलसूक्ष्मपदातीते परमात्मनि तृप्तिलिङ्ग-रूपपरमात्मनि ज्ञानमेव ।

ननु उपासनार्थं स्थूलसूक्ष्मरूपाणि शिवस्य अवश्यमपेक्षणीयानि इत्यत्राह—

परमात्मनः स्थूलसूक्ष्मरूपाणां मायाकल्पितत्वेन केवलमुमुक्षूणां तैः प्रयोजनाभावात् परबोधं परब्रह्ममयतृप्तिलिङ्गमेव समाचरेत्[2] उत्कृष्टत्वेन जानीयादित्यर्थः

995 [ज्ञानलिङ्गिनः परं स्वरूपम्]

अथ उत्कृष्टपरबोधाभिज्ञ एव ज्ञानलिङ्गीति कथयति—

---

1 तृप्तिलिङ्गपदं तद्रूपपरमात्मपरमिति अग्रे उच्यते ।
2 आङ्पूर्वकचरधातोः ज्ञानार्थकत्वं च तन्त्रार्णवे बहुवारं व्यक्तीकृतम् ।

परात्परं तु यद् ब्रह्म परमानन्दलक्षणम् ।
शिवाख्यं ज्ञायते येन[1] ज्ञानलिङ्गीति कथ्यते ॥

996 [स्थलनिगमनम् ]

बाह्यक्रियां परित्यज्य चिन्तामपि च मानसीम् ।
अखण्डज्ञानरूपत्वं यो भजेन्मुक्त एव सः ॥

(50) इति ज्ञानलिङ्गस्थलम् (7-6)

परात्परं विश्वापेक्षया परं उत्कृष्टशक्ति तत्त्वं तदाश्रयत्वात् ततोऽप्युत्कृष्टं परमानन्दलक्षणं शिवाख्यं यत् परब्रह्म[2] तत् येन ज्ञायते सः ज्ञानलिङ्गीति भाव्यते इत्यर्थः ॥

अथ ज्ञानलिङ्ग्येव परमुक्तः[3] इत्युक्त्वा ज्ञानलिङ्गस्थलं समापयति—

यः बाह्यक्रियां इष्टलिङ्गसम्बन्धिनीं बाह्यक्रियापूजां मानसीं चिन्तामपि च प्राणलिङ्गसम्बन्धिनीं आन्तरध्यानपूजां च परित्यज्य [4]अखण्डज्ञानरूपत्वं प्राप्य परिपूर्णतृप्तिलिङ्गं भजेत् सः मुक्तः इत्यर्थः ॥

---

[1] ज्ञायते तेन (ख)
[2] परं ब्रह्म (ख)
[3] परः परमश्चासौ मुक्तः इत्यर्थः ।
[4] नात्र बुद्धिपूर्वकत्यागो विवक्षितः, किन्तु तस्यां अवस्थायां स्वतः त्यागो भवतीति आगमैः उच्यते ।

## (51) अथ भक्तस्थले स्वयंस्थलम् (7-7)

### 997 [स्वपदार्थः]

तद्भावज्ञापकज्ञानं यत्र ज्ञाने लयं व्रजेत् ।
तद्वानेष समाख्यातः स्वाभिधानो मनीषिभिः ॥

---

### 998 [स्वयंस्थलनिरूपणम्]

अथ—

"परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते ।
"स उत्तमः पुरुषः तत्र पर्येति ।"

इति छान्दोग्यश्रुतेः,

"प्राणलिङ्गपरिज्ञानानन्दः स शिवलाञ्छनः ।
बाह्यकर्मपरित्यागी स स्वयंलिङ्गमुच्यते ॥[1]

इति वातुलोत्तरवचनाच्च ज्ञानलिङ्ग्येव स्वयंस्थलसम्पन्नः इति निरूपयंति—

तद्भावज्ञापकज्ञानलयस्थानवान् एषः ज्ञानलिङ्गी स्वाभिधानः इति मनीषिभिः शिवज्ञानिभिः [2]समाख्यातः इत्यर्थः ।

---

[1] सः स्वयं लिङ्गस्वरूपः इत्यर्थः ।

[2] वस्तुतः शिवज्ञान्येव मनीषी इति भावः ।

999 [स्वस्वरूपस्य मुनिश्रेष्ठत्वम्]

[1]स्वच्छन्दाचारसन्तुष्टः ज्योतिर्लिङ्गपरायणः ।
आत्मस्थसकलाकारः स्वाभिधो मुनिसत्तमः ॥

1000

निर्ममो निरहङ्कारः निरस्तक्लेशपञ्चकः ।
भिक्षाशी समबुद्धिश्च मुक्तप्रायो मुनिर्भवेत् ॥

1001

यदृच्छालाभसन्तुष्टः भस्मनिष्ठो जितेन्द्रियः ।
समवृत्तिः भवेद्योगी भिक्षुके वा नृपेऽथवा ॥[2]

---

अथ तदाचारं प्रकाशयति सूत्रचतुष्टयेन—

ज्योतिर्लिङ्गपरायणः बाह्यलिङ्गवैमुख्येन चिल्लिङ्गनिष्ठः स्वैराचारसन्तुष्टः शिवात्मनि सकलाकार विद्यमान वान् मुनिश्रेष्ठ एव स्वयंलिङ्गाभिधानवान् इत्यर्थः ॥

विषयेषु ममताशून्यः शरीरादिषु "अहम्" इत्यभिमानशून्यः अविद्यादिपञ्चक्लेशरहितः भिक्षान्नभोक्ता लोष्टाश्मकाञ्चनेषु समबुद्धिमान् मुनिः स्वयंलिङ्गाभिधानवान् यतिः मुक्तप्रायः परमुक्तसदृशः स्यात् चरमं देहत्वात् इति ॥

---

1 अत्र स्वच्छन्दपदस्य आत्मच्छन्दपरत्वे विषयौचित्यम् । आत्मनि स्वमित्यपि कोशः ।

2 भिक्षुके नृपे वा समवृत्तिः इत्यन्वयः ।

1002

पश्यन् सर्वाणि भूतानि संसारस्थानि सर्वशः ।
स्मयमानः परानन्दे लीनात्मा वर्तते सुधीः ॥

1003 [स्वस्वरूपनिष्ठकर्तव्यानि]

ध्यानं शैवं तथा ज्ञानं[1] भिक्षा चैकान्तशीलता ।
यतेः चत्वारि कर्माणि न पञ्चममिहेष्यते ॥

(51) इति स्वयंस्थलम् (7-7)

—o—

---

स्पष्टम् ।

सुधीः शोभनबुद्धिमान् स्वयंलिङ्गयतिः सर्वशः सर्वत्र संसारस्थानि संसारचक्रस्थितानि सर्वाणि भूतानि पश्यन् स्मयमानः सन् विस्मयवान् सन्[2] परानन्दे परमानन्दमयमहालिङ्गे लीनात्मा लयं गतः सन् वर्तते इत्यर्थः ॥

अथ तस्य यतीश्वरस्य नित्यकर्म उक्त्वा स्वयंस्थलं समापयति—

शिवज्ञानं शिवाधिक्यज्ञानं शिवध्यानं भिक्षाहारः एकान्तशीलत्वं यतेः स्वयंलिङ्गशिवयोगिनः एतानि चत्वारि कर्माणि । पञ्चमकर्म नेच्छाविषयीक्रियते ॥

---

[1] स्मयविस्मयशब्दयोः भिन्नार्थकत्वेऽपि प्रकृते समानार्थकत्वमेवेति भावः ।
[2] शैवमिति ज्ञानध्यानोभयान्वयि ।

## (52) अथ भक्तस्थले चरस्थलम् (7-8)

### 1005 [चरशब्दार्थः]

[1]स्वरूपज्ञानसम्पन्नः ध्वस्ताहंममताकृतिः ।
स्वयमेव स्वयं भूत्वा चरतीति चराभिधः ॥

---

### 1004 [चरस्थलनिरूपणम् ]

अथ—

"आत्मरतिः आत्मक्रीडः आत्ममिथुनं आत्मानन्दः, स स्वराड्भवति । तस्य सर्वेषु लोकेषु कामचारो भवति ।"

इति छान्दोग्यश्रुतेः,

"अहंममत्वशून्यात्मा निजबोधैकरूपदृक ।
स्वयमेव स्वयं भूत्वा चरतीति चरः स्मृतः ॥"

इति वातुलोत्तरवचनाच्च सः स्वयंलिङ्गसम्पन्न एव स्वयंभूत्वा[2] सञ्चरतीति चरलिङ्गस्थलरूपः इति कथयति—

स्वयंलिङ्गी इति शेषः । निरस्ताहङ्कारममकारवान् स्वस्वरूप-

---

[1] स्वयं शिवस्वरूपो भूत्वेत्यर्थः ।
[2] तदीयज्ञानमेव लिङ्गात्मकमिति भावः ।

1006 [चरलिङ्गस्याचाराः]

कामक्रोधादिनिर्मुक्तः[1] शान्तिदान्तिसमन्वितः ।[2]
समबुद्ध्या चरेद्योगी सर्वत्र शिवबुद्धिमान् ॥

1007

इदं मुख्यं इदं हीनमिति[3] चिन्तां अकल्पयन् ।
सर्वत्र सञ्चरेद्योगी सर्वं ब्रह्मेति भावयन् ॥

1008

यः सन्मानेषु संप्रीतिं नावमानेषु च व्यथाम् ।
कुर्वाणः सञ्चरेद्योगी[4] कूटस्थे स्वात्मनि स्थितः ॥

---

ज्ञानसम्पन्नः स्वयंलिङ्गी स्वयमेव स्वयंभूत्वा चरतीति चरलिङ्गाभिधानवान् इत्यर्थः ।

अथ तस्य चरलिङ्गस्याचारं पञ्चभिः सूत्रैः प्रतिपादयति—

स्पष्टम् ॥

योगी शिवयोगीत्यर्थः । शिष्टं स्पष्टम् ॥

कूटस्थे स्वात्मनि तुर्यसाक्षिकप्रत्यगात्मलक्षणनिजरूपे विद्यमानः शिवयोगी सन्मानेषु संप्रीतिं अवमानेषु दुःखं च न कुर्वाणः अकुर्वाणः सन् सञ्चरेत् ॥

---

[1] निःशेषेण मुक्तः ।
[2] शान्तिदान्ती=शमदमौ=अन्तर्बहिरिन्द्रियजयौ ।
[3] हीनं=असुख्यं अधर्मं वा ।
[4] न कुर्वाणः इत्यन्वयः ।

1009

अप्राकृतैर्गुणैः स्वीयैः सर्वं विस्मापयन् जनम् ।
अद्वैतपरमानन्दमुदितो देहिवच्चरेत् ॥

1010

न प्रपञ्चे निजे देहे न धर्मे न च दुष्कृते ।
गतवैषम्यधीः धीरः यतिश्चरति देहिवत् ॥

1011 [निगमनम्]

प्राकृतैश्वर्यसम्पत्तिपराङ्मुखमनःस्थितिः ।
चिदानन्दनिजात्मस्थः मोदते मुनिपुङ्गवः ॥

---

(52). इति चरस्थलम् (7-8)

---

शिवाद्वैतोद्भूतपरमानन्दसन्तोषितः शिवयोगी अप्राकृतैः[1] लोकोत्तरैः स्वकीयैः गुणैः सर्वजनं विस्मययुक्तं सन्तं कुर्वन् सन् शरीरी इव चरेत् चरतीत्यर्थः ॥

गतवैषम्यधीः विधिनिषेधादिषु विगतविषमबुद्धिः धीरः स्थिरचित्तः यतिः शिवयोगी निजे देहे सति देहिवत् प्राकृतवत् प्रपञ्चे न चरति, धर्मे पुण्यकृत्ये पापकृत्येऽपि न चरतीत्यर्थः ॥[2]

अथ चरलिङ्गस्थलं समापयति —

प्रकृतितत्त्वसमुद्भूतब्रह्मविष्ण्वाद्यैश्वर्यसम्पत्तिविमुखीभूतचित्तवृत्तिः यतिश्रेष्ठः चिदानन्दस्वरूपनिष्ठः सन् मोदते सुखमनुभवन्नास्ते इत्यर्थः ॥

---

[1] ग्राम्यजनेषु अदृष्टैः ।

[2] तत्तत् नानुतिष्ठतीत्यर्थः ।

1012 [परस्थलनिरूपणम् ]

(53) अथ भक्तस्थले परस्थलम् (7-9)

———

1013 [परशब्दार्थः ]

स्वयमेव स्वयं भूत्वा चरतः स्वस्वरूपतः ।[2]
परं नास्तीति बोधस्य परत्वमभिधीयते ॥

---

अथ—

"तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म सम्पद्यते परम् ।"

इति अमृतबिन्दुश्रुतेः,

"स्वयं स्वयत्वमासाद्य[1] चरतो न परः स्मृतः ।
असौ ततोऽतीतवर्णाश्रमत्वेन परः स्मृतः ॥"

इति वातुलोत्तरवचनाच्च स्वरूपसिद्धत्वेन चरतः तस्य शिवयोगीश्वरस्य परं नास्ति इति ज्ञानस्य परलिङ्गस्थलं सप्तभिः सूत्रैः प्रतिपादयति—

स्वयमेव स्वयंभूत्वा चरतः तस्य शिवयोगिनः स्वस्वरूपतः परं नास्ति इति ज्ञानस्य परलिङ्गत्वं अभिधीयते इत्यर्थः ॥

1014 [परलिङ्गिनः आचाराः]

अथ तस्य वर्तनाप्रकारमाह—

---

1 प्रकृत्यतीतधर्मवान् इति यावत् ।

2 व्यवहारकालेऽपि प्रकृतिवशतां अनापन्नः इत्यर्थः ।

1015 [तद्गतः आनन्दविशेषः]

स्वतन्त्रः सर्वकृत्येषु स्वं परत्वेन भावितः ।
[1]तृणीकुर्वन् जगज्जालं वर्तते शिवयोगिराट् ॥

1016 [आनन्देऽस्मिन् उत्कृष्टत्वम् ]

वर्णाश्रमसमाचारमार्गनिष्ठापराङ्मुखः ।
सर्वोत्कृष्टं स्वमात्मानं पश्यन् योगी तु मोदते ॥

1017 [तस्यब्रह्मसाम्यम् ]

विश्वातीतं परं ब्रह्म शिवाख्यं चित्स्वरूपकम् ।
तदेवाहमिति ज्ञानी सर्वोत्कृष्टः सं उच्यते ॥

---

स्वं परत्वेन विश्वाधिकत्वेन भावितः परामृष्टः शिवयोगिराट् शिवयोगीश्वरः सर्वकृत्येषु स्वतन्त्रः सन् जगज्जालं जगत्समूहं तृणीकुर्वन् सन् वर्तते इत्यर्थः ॥

अथ सः कथं मोदते ? इत्यत्राह—

योगी शिवयोगीत्यर्थः । शिष्टं स्पष्टम् ॥

अथ किमिदं सर्वोत्कृष्टत्वम् ? इत्यत्राह—

स्पष्टम् ॥

ननु ब्रह्मस्वरूपत्वे ब्रह्मवत् मुक्तः एव स्यात्—इत्यत्राह—

---

[1] तदीयाकर्षणशक्त्यविषयो भूत्वेत्यर्थः ।

[2] वर्णाश्रमसमाचाराणां भौतिकधर्मविशेषनिमित्तत्वात् ।

1018 [तस्य जीवन्मुक्तत्वम्]

अचलं ध्रुवमात्मानं अनुपश्यन् निरन्तरम् ।
निरस्तविश्वविभ्रान्तिः जीवन्मुक्तो भवेन्मुनिः ॥

1019 [तस्य अज्ञमोचकत्वम्]

ब्रह्माद्याः किं नु कुर्वन्ति देवताः कर्ममार्गगाः ।
कर्मातीतपदस्थस्य[3] स्वयं ब्रह्मस्वरूपिणः ॥

---

अचलं अचञ्चलं ध्रुवं नित्यं[1] आत्मानं स्वस्वरूपं निरन्तरं [2]अखण्डितत्वेन अनुपश्यन् मुनिः शिवयोगी निरस्तविश्वविभ्रान्तिः निराकृतप्रापञ्चिकभ्रान्तिमान् सन् जीवन्मुक्तः आहारव्यवहारादिना जीवन्नपि पुनः जन्मान्तराभावात् मुक्तः इत्यर्थः ॥

ननु वर्णाश्रमागतसमाचारपरित्यागेन कर्मदेवताः कुपिताः भवन्ति इति, कथं जीवन्मुक्तः ? इत्यत्राह—

स्वयं स्वयमेव ब्रह्मस्वरूपिणः ब्रह्मस्वरूपवान् सन् कर्मातीतपदस्थस्य पुण्यपापादिकर्मकाण्डोत्तीर्णस्थानगतस्य शिवयोगिनः कर्ममार्गगाः ब्रह्मविष्ण्वाद्याः देवताः किं नु कुर्वन्ति ? न किमपि कर्तुं अकुशलाः इत्यर्थः ॥

पुनरयं शिवयोग्येव अज्ञान् विमोचयतीत्याह—

---

1 ध्रुवं-कूटस्थमिति भावः ।
2 देशकालादिभिरिति शेषः ।
3 अत्र पदपदं स्थानपरमिति भावः ।

1020 [परस्थलनिगमनम् ]

[1]स्वेच्छया सञ्चरेद्योगी विमुञ्चन् देहमानिताम् ।
दर्शनैः स्पर्शनैः सर्वान् अज्ञानपि विमोचयेत् ॥

नित्ये निर्मलभावने निरुपमे निर्धूतविश्वभ्रमे,
तत्त्वानन्दशिवात्मके परशिवे साम्यं गतः संयमी ।
प्रध्वस्ताश्रमवर्णधर्मनिगलः[2] स्वच्छन्दसञ्चारवान्
देहीवाद्भुतवैभवो विजयते जीवन्मुक्तः सुधीः ॥

---

देहमानितां देहाभिमानं विमुञ्चन् शिवयोगी स्वेच्छया सञ्चरन्नपि स्वैराचारसम्पन्नः अपि दर्शनस्पर्शनाभ्यां सर्वान् अज्ञान् प्राकृतजनान् विमोचयेत् मुक्तान् कुर्यात् इत्यर्थः ॥

अथ—

"निरञ्जनः परमं साम्यमुपैति दिव्यम्"

इति श्रुतेः परलिङ्गरूपशिवयोगीश्वर एव शिवभावसम्पन्नत्वात् जीवन्मुक्तः इत्युक्त्वा परस्थलं समापयति—

---

1 अत्रापि स्वपदं आत्म-परमात्मपरं । अन्यथा लोकविरोधात् ।

2 निगलः—बन्धनसाधनीभूता शृङ्खला ।

इति श्रीमत् षट्स्थलब्रह्मिणा शिवयोगि
नाम्ना रेणुकाचार्येण विरचिते
सिद्धान्तशिखामणौ
लिङ्गस्थले भक्तस्थलगत नव-
विधलिङ्गप्रसङ्गो नाम पञ्चदशः
परिच्छेदः समाप्तः ।

---

(53) इति परस्थलम् (7–9)
इति लिङ्गस्थलगतभक्तस्थलं सप्तमं समाप्तम् ॥

---

नित्ये निर्मलस्वरूपे उपमातीते[1] निरस्तसमस्तदोषे सच्चिदानन्दात्मके परशिवे ज्ञातृत्वकर्तृत्वयोगात् साम्यं गतः, प्रध्वस्तचतुर्वर्णचतुराश्रमधर्मशृङ्खलः[2] स्वच्छन्दाचारवान् स्वेच्छाचारवान् जीवन्मुक्तः सुधीः परलिङ्गरूपशिवयोगी देहीव देहवानपि अद्भुतवैभवः सन्[3] आश्चर्यभूतमहत्त्वसम्पत्तिमान् सन् विजयते सर्वोत्कर्षेण वर्तते इत्यर्थः ॥

इति श्रीमत्पदवाक्यप्रमाणपारावार
धुरीण श्रीमरितोण्टदार्येण विरचितायां
तत्त्वप्रदीपिकाख्यायां सिद्धान्त
शिखामणिव्याख्यायां
पञ्चदशः परिच्छेदः समाप्तः ॥

---

1 तत्सदृशवस्त्वन्तराभावादेवमुक्तम् ।
2 तदवस्थायां अतिक्रमानर्हत्वात् शृङ्खलात्वम् ।
3 आश्चर्यविषयत्वमुच्यते अनेन ।

॥ श्री शिवाय नमः ॥

# सिद्धान्तशिखामणौ

## षोडशः परिच्छेदः

### माहेश्वरस्थलाश्रितनवलिङ्गप्रसङ्गः ॥

———

### (8) अथलिङ्गस्थले माहेश्वरस्थलम्

———

1021 [माहेश्वरस्थलनिरूपणम्]

अगस्त्य उवाच--

स्थलानां नवकं प्रोक्तं भक्तस्थलसमाश्रयम् ।
माहेश्वरस्थले सिद्धं स्थलभेदं वदस्व मे ॥

1022 [माहेश्वरस्थलावान्तरभेदः]

रेणुक उवाच--

माहेश्वरस्थले सन्ति स्थलानि नव तापस ![1]
क्रियामयस्थलं पूर्वं ततो भावागमस्थलम् ।

1023

ज्ञानागमस्थलं चाथ सकायस्थलमीरितम् ॥

---

श्री शिवाय नमः

———

अथ अगस्त्यप्रश्नः—

अगस्त्य उवाच—इति ॥

स्पष्टम् ॥

श्रीरेणुकः प्रत्युत्तरं वक्ति—

रेणुक उवाच—इति ।

---

[1] तापसेति अगस्त्यं प्रति सम्बोधनम् ।

1024

ततोऽकायस्थलं प्रोक्तं
परकायस्थलं ततः ।
धर्माचारस्थलं चाथ
भावाचारस्थलं ततः ॥
ज्ञानाचारस्थलं चेति
क्रमादेषां भिदोच्यते ॥

---

स्पष्टम् ॥

[१. क्रियागमस्थलम् ।
२. भावागमस्थलम् ।
३. ज्ञानागमस्थलम् ।
४. सकायस्थलम् ।
५. अकायस्थलम् ।
६. परकायस्थलम् ।
७. धर्माचारस्थलम् ।
८. भावाचारस्थलम् ।
९. ज्ञानाचारस्थलम् ।

इति ॥]

## (54) माहेश्वरस्थले क्रियागमस्थलम् (8-1)

1026 [क्रियागमशब्दार्थः]

शिवो हि परमः साक्षात् पूजा तस्य क्रियोच्यते ।
तत्पराः आगमाः यस्मात् तदुक्तोऽयं क्रियागमः ॥

---

1025 [तत्र क्रियागमस्थलनिरूपणम् ]

अथ—

" यान्यनवद्यानि [1]कर्माणि .
तानि सेवितव्यानि ।
नो इतराणि ॥"

इति श्रुतेः,

"अल्पक्रिया बहुफलं वीरशैवं महेश्वरि !"

इति वातुलतन्त्रवचनाच्च पूर्वोक्तपरस्थलसम्पन्नः शिवयोगीश्वर एव शिवः। तस्य पूजैव क्रिया। तत्परागम एव क्रियागमः इति क्रियागमस्थलं निरूपयति—

परमः पूर्वोक्तपरलिङ्गशिवयोगीश्वर एव साक्षात् शिवः हि प्रत्यक्षीभूतः शिवः। तस्य पूजा क्रिया उच्यते क्रियेत्युच्यते इत्यर्थः। आगमाः यस्मात् कारणात् तत्पराः क्रियाप्रधानाः तत् तस्मात् कारणात् अयं क्रियागमः इत्युच्यते इत्यर्थः ॥

---

[1] अनवद्यानि—मुक्तिमार्गाविरोधीनि ।

1027 [अस्याः पूजाक्रियायाः महत्त्वम्]

प्रकाशते यथा नाग्निः अरण्यां मथनं विना ।
क्रियां विना तथाऽन्तस्स्थः न प्रकाशो भवेच्छिवः ॥

1028 [पूजाकरणप्रकारः]

न यथा विधिलोपः स्यात् यथा देवः प्रसीदति ।
यथाऽऽगमः प्रमाणं स्यात् तथा कर्म समाचरेत् ॥

---

अथ तत्पूजाक्रियामेव पञ्चभिः सूत्रैः[1] विशेषयति--

अरण्यां दारुपात्रे वह्निः यथा मन्थनं विना न प्रकाशते, तथा पूजाक्रियां विना[2] अन्तःस्थः लिङ्गमध्यस्थः शिवः प्रकाशो न भवेत् इत्यर्थः ॥

अथ सा पूजा कथं कर्तव्या? इत्यत्राह--

विधिलोपः इतिकर्तव्यतालक्षणनियमलोपः इत्यर्थः । विधेर्लोपे शिवो न प्रसीदति । तथा आगमस्य अप्रामाण्यं प्राप्नुयात् । तस्मात् यथा विधेर्लोपो न भवति तथा पूजा कर्तव्या इत्यर्थः ॥

1029 [पूजाकरणहेतुः]

ननु शिवपूजा किमर्थं कर्तव्या? इत्यत्राह--

---

[1] अयं ग्रन्थकारः कारिका एव सूत्र पदेन निर्दिशतीति पूर्वमेवोक्तम् ।
[2] भक्तियुतां पूजां विना इत्यर्थः । विभागे पूजायाः अनन्वयात् ।

1030 [पूजाप्रकारज्ञानोपायः]

विधिः शिवनियोगोऽयं तस्मात् विहितकर्मणि ।
शिवाराधनबुद्ध्यैव निरतः स्यात् विचक्षणः ॥

1031 [पूजाफलम्]

गुरोरादेशमासाद्य[1] पूजयेत् परमेश्वरम् ।
पूजिते परमेशाने पूजिताः सर्वदेवताः ॥
सदा शिवार्चनोपायसामग्रीव्यग्रमानसः ।
शिवयोगरतो योगी मुच्यते नात्र संशयः ॥

---

विहितकर्मणि शास्त्रोक्तकर्मणि अयं विधिः "शिवपूजा कर्तव्या" इति विधिः शिवनियोगः शिवाज्ञारूपः[2] तस्मात् विचक्षणः प्रवीणः शिवाराधनबुद्धौ निरतः आसक्तः स्यात् । अन्यथा शिवाज्ञालङ्घने नरकं व्रजेत् इत्यर्थः ॥

अथ शिवपूजाप्रकारः कथं ज्ञातव्यः । इत्यत्राह—

गुरूपदिष्टप्रकारेण शिवलिङ्गं पूजयेत् । तस्मिन् पूजिते सर्वे देवाः पूजिताः स्युः । शिवलिङ्गस्य सर्वदेवमयत्वेन सर्वेदेवा प्रसन्नाः स्युः इत्यर्थः ।

ननु शिवपूजनस्य किं फलम् ? इत्यत्राह—

---

[1] नितरां युनक्त्यनेनेति नियोगपदस्य विध्यर्थकत्वौचित्यात् ।
[2] उपदेशः क्रमनिर्देशश्च आदेशपदेन सूच्येते ।

1032 [ज्ञानस्य पूजासाहचर्यावश्यकता]

अन्धपङ्गुवदन्योन्यसापेक्षे ज्ञानकर्मणोः ।
फलोत्पत्तौ विरक्तस्य तस्मात् तद्द्वयमाचरेत् ॥

---

सर्वदा शिवलिङ्गपूजासाधनसामग्रीसम्पादनरूपशिवयोगनिष्ठः शिवयोगी मलमायादिपाशमुक्तः भवति । अस्मिन् अर्थे संशयो नास्तीति भावः ।

ननु —

"ज्ञानादेव[1] तु कैवल्यम्"

इत्यादिवचनैः ज्ञानस्यैव मोक्षसाधनत्वं प्रतीयते, न कर्मणः इत्याशङ्क्य –

"न क्रियारहितं ज्ञानं
न ज्ञानरहिता क्रिया ।
अपश्यन् अन्धको दग्धोऽ
गच्छन् पङ्गुश्च दह्यते ॥"

इति शिवरहस्यवचनानुसारेण समाधत्ते —

ज्ञानकर्मणोः ज्ञानक्रिययोः अन्धपङ्गुवत् अन्योन्यसापेक्षे सति तद्द्वयं ज्ञानक्रियाद्वयं तस्मात् फलोत्पत्तौ परापरमुक्तिरूपफलोत्पत्तौ विरक्तः आचरेत्[2] इत्यर्थः ॥

---

[1] ज्ञानादेव हि—(क)
[2] शास्त्रविहितानि कर्माणि कुर्यात् इत्यर्थः ।

1033 [कर्मणामावश्यकता]

ज्ञाने सिद्धेऽपि विदुषां कर्मापि विनियुज्यते ।
फलाभिसन्धिरहितं तस्मात् कर्म न सन्त्यजेत् ।।

1034 [आचारस्यावश्यकता]

आचार एव सर्वेषां [3]अलङ्काराय कल्प्यते[4] ।
आचारहीनः पुरुषः लोके भवति निन्दितः ।।

---

ननु [2]सिद्धज्ञानिनां कर्मणा प्रयोजनं नास्ति–इत्यत्राह—
" न कर्मणा "[2]
इति श्रुतेः काम्यकर्मपरत्वात् विदुषां ज्ञाने सिद्धेऽपि वेदान्ते अग्निहोत्रवत् फलापेक्षारहितं कर्म विधीयते एव । तत्तदाश्रमविहितकर्मपरित्यागे पातित्यात् ।

"ज्ञानं प्रधानं न तु कर्महीनं
कर्म प्रधानं न तु चिद्विहीनम् ।
तस्मात् द्वयोरेव भवेत् प्रसिद्धिः
न ह्येकपक्षो विहगः प्रयाति ।।

इसि अभियुक्तोक्तेश्च निष्कामकर्मानुष्ठानं न सन्त्यजेत् इत्यर्थः ।।

अथ आचारस्य आधिक्यं प्रतिपादयति—

स्पष्टम् ।।

---

[1] सिद्धाः आत्मज्ञानसम्पन्नाः ।

[2] "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" इति पूर्णं वाक्यम् ।

[3] अलङ्कारो नाम सर्वकार्यसमर्थतासम्पादनम् ।

[4] कल्पते (ख)

1035 [निगमनम्]

ज्ञानेनाचारयुक्तेन प्रसीदति महेश्वरः ।
तस्मात् आचारवान् ज्ञानी भवेदादेहपातनम् ॥

---

(5.) इति क्रियागमस्थलम् (8-1)

(5.) अथ माहेश्वरस्थले भावागमस्थलम् (8-2)

---

तस्मात् सत्कर्माचरणवान्[1] भवेत् इत्युक्त्वा क्रियागमस्थलं समापयति—

स्पष्टम् ॥

1036 [भावागमस्थलनिरूपणम्]

अथ—

"यं [2]यथोपासते तदेव भवति ।"

"यद्भावं तद्भवति ।"

"यथाकारि तथाचारी तथा भवति ।"

इति बृहदारण्यकश्रुतेः,

"शिवभावानुसन्धानात् शिवो भावे प्रकाशते ।"[3]

---

[1] तथा च पूर्वं उक्तं कर्मपदं सर्वत्र सत्कर्माचरणपरमिति भावः ।
[2] तं यथोपासते (क)
[3] भावैः प्रकाश्यते (ख)

1037 [भावागमपदार्थः]

भावचिह्नानि विदुषः यानि सन्ति विरागिणः ।
तानि भावागमत्वेन वर्तन्ते सर्वदेहिनाम् ॥

1038 [भाववैशिष्ट्यम्]

शिवोऽहमिति भावोऽपि शिवतापत्तिकारणम् ।
न ज्ञानमात्रं नाचारः भावयुक्तः शिवो भवेत् ॥

---

इति योगजागमस्थितेश्च, निष्कामकर्मानुष्ठानवतः विरक्तस्य भावचिह्नमेव भावागमस्थलं इति निरूपयति—

विरागिणः असत्क्रियाफलविरक्तस्य[1] विदुषः ज्ञानिनः शिवयोगिनः यानि भावचिह्नानि सन्ति तानि सर्वदेहिनां प्राकृतानां भावागमत्वेन वर्तन्ते इत्यर्थः ॥

अथ पूर्वोक्तज्ञानाचारापेक्षया भाव एव विशिष्टः इति सूत्रद्वयेन कथयति—

"शिवोऽहम्" इति भावः[2] शिवत्वप्राप्तिकारणम् । ज्ञानमात्रं न=शिवतापत्तिकारणं न भवतीत्यर्थः । आचारः केवलसत्क्रियाचारोऽपि न=शिवत्वप्राप्तिकारणं न । किन्तु भावयुक्तः "शिवोऽहम्" इति भावेन संयुक्तः एव शिवः शिवस्वरूपो भवति इत्यर्थः ॥

1039 [ज्ञानभावयोर्भेदः]

ननु ज्ञानभावयोः को भेदः ? इत्यत्राह—

---

[1] यत्किञ्चित् कर्तव्यं चेत् कर्म, तत् फलापेक्षां विना स्वधर्मत्वेन यः करोति सः इति भावः ।

[2] शिवतादात्म्यभावनेति भावः ।

ज्ञानं वस्तुपरिच्छेदः ध्यानं तद्भावकारणम् ।
तस्मात् ज्ञाने महादेवे ध्यानयुक्तो भवेत् सुधीः ॥

1040 [भावनाविधि.]

अन्तर्बहिश्च सर्वत्र[2] परिपूर्णं महेश्वरम् ।
भावयेत् परमानन्दलब्धये पण्डितोत्तमः ॥

1041 [भावशून्यपूजावैफल्यम् ]

अर्थहीना यथा वाणी पतिहीना यथा सती ।
श्रुतिहीना यथा बुद्धिः भावहीना तथा क्रिया ॥

---

वस्तुपरिच्छेदः "' इदमेतादृशम् '' इति वस्तुस्वरूपनिर्णायकम् ज्ञानम् । तद्भावकारणं निर्णीतस्य वस्तुनो भावस्य धर्मलाभस्य कारणं ध्यानम् ' तदेवाहम् '' इति मननम्[1] । तस्मात् शिवे ज्ञाते सति सुधीः सुज्ञानी ध्यानयुक्तः भावेन संयुक्तः भवेत् स्यात् इत्यर्थः ॥

अथ कथं भावयेत् ? इत्यत्राह—

अन्तर्बहिश्च शरीरान्तर्बहिश्चेत्यर्थः । शिष्टं स्पष्टम् ।

अथ सा क्रिया पूजा भावरहिता चेत् वृथेति[3] सदृष्टान्तं सूत्रद्वयेनाह—

---

1 ध्येयेनसाकं स्वस्य अभिन्नतानुसन्धानमिति भावः ।
2 सर्वेषु (ख)
3 ' इति ' इति नास्ति (ग)

1042

चक्षुर्हीनो यथा रूपं न किञ्चिद्वीक्षितुं क्षमः ।
भावहीनस्तथा योगी न शिवं द्रष्टुमीश्वरः ॥[2]

1043

[3]भावशुद्धेन मनसा पूजयेत् परमेष्ठिनम् ।
भावहीनां न गृह्णाति पूजां सुमहतीमपि ॥

1044 [भावस्य महत्त्वम्]

नैरन्तर्येण सम्पन्ने भावे ध्यातुं शिवं प्रति ।
तद्भावो जायते यद्वत् क्रिमेः कीटस्य चिन्तनात् ॥

---

श्रुतिहीना[1] वेदश्रुतिसंमतिरहिता । बुद्धिः ज्ञानमित्यर्थः । ईश्वरः समर्थः इत्यर्थः । शिष्टं स्पष्टम् ॥

भावशुद्धेन ध्यानशुद्धेनेत्यर्थः । सः परमेश्वरः इत्यर्थः शिष्टं स्पष्टम् ॥

अथ—

"भ्रमद्भ्रमरचिन्तायां[4] कीटोऽपि भ्रमरायते ।
शिवचिन्तासमाक्रान्तः शिवरूपी भवेत् ध्रुवम् ॥"

इति वीरागमवचनानुसारेण भावमहत्त्वं प्रकाशयति—

---

[1] वेदरूपश्रुतिवाक्याननुगुणेति भावः ।
[2] शिवं द्रष्टुमनीश्वरः (ख)
[3] भावपदं ध्यानपरमिति ज्ञेयम् ।
[4] माता भ्रमरी यान् कीटान् स्वशिशूनां आहारार्थं स्वनीडे निक्षिपति तत्र तस्याः भ्रमर्याः चिन्तया—इत्यर्थः ।

1045 [निगमनम्]

निष्कलङ्कं निराकारं परब्रह्म शिवाभिधम् ।
[2]निर्ध्यातुमसमर्थोऽपि तद्विभूतिं विभावयेत् ॥

(55) इति भावागमस्थलम् (8-2)

---

क्रिमेः कीटस्य भ्रमरस्य चिन्तनात् यद्वत् यथा तद्भावः भ्रमरकीटभावः जायते, तथा भावे चित्ते चित्तविशिष्टे शिवं ध्यातुं नैरन्तर्येण सम्पन्ने सति तद्भावः शिवस्वरूप एव जायते शिवं प्रतीयते[1] इत्यर्थः ॥

अथ निष्कलशिवचिन्तने यद्यसमर्थः तद्विभूतिं वा चिन्तयेत् इत्युक्त्वा भावागमस्थलं समापयति––.

तद्विभूतिं सर्वज्ञत्वादि महदैश्वर्यमित्यर्थः । शिष्टं स्पष्टम् ॥

[1] शिवं सम्यक् स्वज्ञानविषयीकरोति इति व्याख्यार्थः ।
[2] निरवशेषं परिपूर्णतया ध्यातुमिति भावः ।

## (56) माहेश्वरस्थले ज्ञानागमस्थलम् (8-3)

1047 [ज्ञानागमपदार्थः]

परस्य ज्ञानचिह्नानि यानि सन्ति शरीरिणाम् ।
तानि ज्ञानागमत्वेन प्रवर्तन्ते विमुक्तये ॥

---

1046 [ज्ञानागमस्थलनिरूपणम् ]

अथ--

" ज्ञानी विज्ञानतत्परः "

इति अमृतबिन्दुश्रुतेः,

" ज्ञानमेतत् शैवसंस्थम् "

इति पतिपरातन्त्रवचनाच्च तद्भावागमसम्पन्नस्य परयोगिनः[1] ज्ञानचिह्नमेव ज्ञानागमस्थलमिति प्रतिपादयति--

परस्य भावागमसम्पन्नस्य परमशिवयोगिनः ज्ञानचिह्नान्येव प्राकृतानां विमुक्तये सद्गतये ज्ञानागमत्वेन प्रवर्तन्ते इत्यर्थः ॥

1048 [ज्ञानमहिमा]

अथ--

"यथेह कर्मचितो लोकःक्षीयते
एवमेवामुत्र[2] पुण्यचितो लोकः क्षीयते ॥"
"ज्ञात्वा देवं मृत्युपाशान् छिनत्ति ।"

---

[1] परमयोगिनः (ख)

[2] स्वर्गादिलोकेष्वपि इत्यर्थः ।

भावेन किं फलं पुंसां कर्मणा वा किमिष्यते ।[1]
भावकर्मसमायुक्तं ज्ञानमेव विमुक्तिदम् ॥

1049 [केवलकर्मणां त्याज्यता]

केवलं कर्ममात्रेण जन्मकोटिशतैरपि ।
नात्मनां जायते मुक्तिः ज्ञानं मुक्तेर्हि कारणम् ॥[2]

---

इति श्रुत्यनुसारेण पूर्वोक्तकेवलभावकर्मभ्यां फलं नास्तीत्युक्त्वा, ज्ञानमेव पञ्चभिः सूत्रैः विशेषयति—

"अहं ब्रह्मास्मि"

इति अपरोक्षज्ञानं ज्ञानमित्यर्थः । शिष्टं स्पष्टम् ॥

हि इति ।

"न कर्मणा"

इति, "तरति शोकमात्मवित्"

इत्यादिबहुश्रुत्यादिप्रसिद्धोऽयमर्थः इत्यर्थः । शिष्टं स्पष्टम् ॥

अथ—कर्मणा मुक्तिर्नास्ति इत्येतावदेव न, किन्तु—कर्मज्ञानहीनं चेत् पुनः संसारकारणमपि इत्याह—

---

1 किमिष्टं वस्तु सम्पाद्यते इति भावः ।
2 ज्ञानं हि इत्यन्वयः ।

1050 [ज्ञानहीनकर्मणः बन्धहेतुत्वम् ]

ज्ञानहीनं सदा कर्म[1] पुंसां संसारकारणम् ।
तदेव ज्ञानयोगेन संसारविनिवर्तकम् ॥

1051 [तत्र हेतुनिरूपणम् ]

फलं क्रियावतां पुंसां स्वर्गाद्यं नश्वरं यतः ।
तस्मात् स्थायिफलप्राप्त्यै ज्ञानमेव समभ्यसेत् ॥

1052 [ज्ञानाभ्यासक्रमः ]

शास्त्राभ्यासादियत्नेन सद्गुरोरुपदेशतः ।
ज्ञानमेव समभ्यस्येत् किमन्येन प्रयोजनम् ॥

---

ज्ञानेति–स्पष्टम् ॥

अथ ज्ञानहीनं कर्म कथं पुनः संसारकारणम् ? इत्यत्राह—

"ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ॥"

इत्यादिवचनबलात् केवलक्रियानिष्ठानां[1] पुंसां स्वर्गाद्यं फलं नश्वरं नाशशीलं, तस्मात् स्थायिमोक्षफलप्राप्त्यै ज्ञानमेव सम्यक् अभ्यसेत् इत्यर्थः ॥

ननु तत् ज्ञानं कथं अभ्यसनीयम् ? इत्यत्राह—

शास्त्राभ्यासादियत्नेन निगमागमशिरःसिद्धवीरशैवशास्त्राभ्यासादि-प्रयत्नेन सद्गुरोः उपदेशतः अनुग्रहात् ज्ञानमेव शिवज्ञानमेव समभ्यसेत्

---

[1] ज्ञानहीनं कर्मजालं (ख)

[2] केवलयागादिकर्मासक्तानामिति यावत् ।

1053 [तादृशज्ञानस्य महत्त्वम् ]

ज्ञानं परशिवाद्वैतपरिपाकविनिश्चयः ।
येन संसारसम्बन्धविनिवृत्तिर्भवेत् सताम् ॥

1054

शिवात्मकमिदं सर्वं शिवादन्यन्न विद्यते ।
शिवोऽहमिति या बुद्धिः तदेव ज्ञानमुत्तमम् ॥

1055

अन्धो यथा पुरस्थानि[2] वस्तूनि च न पश्यति ।
ज्ञानहीनस्तथा देही नात्मस्थं वीक्षते शिवम् ॥

---

सम्यगभ्यासं कुर्यात् । अन्येन पाशव[1] हविर्भक्षणोपयुक्तपूर्वमीमांसादिशास्त्रेण किं प्रयोजनम् ? न किञ्चित् प्रयोजनमित्यर्थः ॥

अथ तद्ज्ञानमहत्त्वं सूत्रद्वयेन प्रकाशयति—

परब्रह्मलिङ्गादन्यत् नास्तीति परिपक्वनिश्चय एव ज्ञानम् । येन ज्ञानेन सतां संसारबाधानिवृत्तिः भवेत् इति ॥

अथ तदेव विशदयति—

स्पष्टम् ॥

अथ तद्ज्ञानमहत्त्वं पुनः सूत्रद्वयेन प्रकाशयति—

---

[1] पाशवं=गोमांसादि ।

[2] स्वपुरोभागे एव वर्तमानानीत्यर्थः ।

1056 [शिवदर्शनस्य ज्ञानफलत्वम् ]

शिवस्य दर्शनात् पुंसां जन्मरोगनिवर्तनम् ।
[1]शिवदर्शनमप्याहुः सुलभं ज्ञानचक्षुषाम् ॥

1057 [निगमनम् ]

दीपं विना यथा गेहे नान्धकारो निवर्तते ।
ज्ञानं विना तथा चित्ते मोहोऽपि न निवर्तते ॥

—o—

(56) इति ज्ञानागमस्थलम् (8-5)

---

स्पष्टम् ॥

ननु शिवदर्शनेन किम् ? इत्यत्राह—

अत्र स्यात् इति शेषः । जन्मरोगनिवर्तनं स्यादिति सम्बन्धः । शिष्टं स्पष्टम् ॥

तस्मात् ज्ञानेन विना अज्ञाननिवृत्तिः नास्तीत्युक्त्वा ज्ञानागमस्थलं समापयति—

ज्ञानं विना शिवज्ञानं विनेत्यर्थः । मोहः अज्ञानम् । शिष्टं स्पष्टम् ।;

---

[1] चिन्मयमूर्तेः शिवस्य दर्शनमित्यर्थः ।

## (57) अथ माहेश्वरस्थले सकायस्थलम् (8-4)

1059 [सकायपदार्थः]

परस्य या तनुर्ज्ञेया देहकर्माभिमानिनः ।
तदा सकायो लोकोऽयं[1] तदात्मत्वनिरूपणात् ॥

---

1058 [सकायस्थलनिरूपणम् ]

अथ —

" शरीरमाद्यं खलु धर्मसाधनम् "

इति वचनानुसारेण तच्छिवज्ञानसम्पन्नस्य योगिनः शरीरस्य क्रियाभाव-ज्ञानकारणत्वेन आत्मत्वनिरूपणात् अयं लोकः सकायः इति षड्भिः सूत्रैः सकायस्थलं प्रतिपादयति—

अदेहकर्माभिमानिनः —

" स्थूलोऽहम् "

" अहं करोमि "

इति [2]लौकिकवत् देहकर्माभिमानशून्यस्य परस्य पूर्वोक्तज्ञानसम्पन्नस्य योगिनः परैः ज्ञेया या तनुः अस्ति, तया तन्वा तदात्मत्वनिरूपणात् तच्छरीरस्य आत्मत्वनिरूपणात् । अयं लोकः सकायः इति कायेन सहितः इत्यर्थः ॥

---

[1] लोकोऽसौ (ख)
[2] लौकिकव्यवहारसिद्धवस्तुवत् इत्यर्थः ।

1060 [कायापेक्षायां हेतुः]

कायं विना समस्तानां न क्रिया न च भावना ।
न ज्ञानं यत्ततो योगी कायवानेव संचरेत् ॥

1961

शिवैकज्ञानयुक्तस्य योगिनोऽपि महात्मनः ।
काययोगेन सिद्ध्यन्ति[2] भोगमोक्षादयः सदा ॥

1062

काष्ठं विना यथा वह्निः जायते न प्रकाशवान् ।
मूर्तिं विना तथा योगी नात्मतत्त्वप्रकाशवान् ॥

---

ननु देहाभिमानशून्यस्य परयोगिनः कायापेक्षा किमर्थम् ? इत्यत्राह-यत् यस्मात् कारणात् समस्तानां च कायं विना[1] क्रियाध्यान-शून्यत्वात् शिवयोगी कायवानेव सञ्चरेत् इति ॥

ननु अस्य योगिनः शिवज्ञानसम्पन्नत्वात् किमिति कायापेक्षा ? इत्यत्राह—

मोक्षस्य ज्ञानमूलत्वात्, ज्ञानस्य च कायमूलत्वात् इति भावः ॥

अत्र दृष्टान्तमाह—

स्पष्टम् ॥

पुनश्च दृष्टान्तमाह—

स्पष्टम् ॥

---

1 देहसम्बन्धं विनेत्यर्थः ।

2 कर्मणां ध्यानस्य वा बहिरन्तरिन्द्रियसापेक्षत्वात् इन्द्रियाणां च शरीरा-नधिष्ठितानां सत्ताप्रच्युतेरिति भावः ।

1063

मूर्त्यात्मनैव देवस्य यथा पूज्यत्वकल्पना ।
तथा देहात्मनैवास्य पूज्यत्वं परयोगिनः ॥

1064 [शिवस्यापि कायापेक्षाकथनम्]

निष्कलोऽपि महादेवः परिपूर्णः सदाशिवः ।
जगत्सृष्ट्यादिसंसिद्ध्यै मूर्तिमानेव भासते ॥[1]

1065 [कायपरिग्रहवैभवम्]

ब्रह्माद्याः देवताः सर्वाः मुनयोऽपि मुमुक्षवः ।
[2]कायवन्तो हि कुर्वन्ति तपः सर्वार्थसाधकम् ॥

---

किमुत शिवोऽपि मूर्त्यात्मनैव सृष्ट्यादीन् करोतीत्याह--

स्पष्टम् ॥

अथ ब्रह्मादिदिव्यज्ञानिनोऽपि कायवन्तः एवेत्याह--

1066 [निगमनम्]

स्पष्टम् ॥

अथ--

"वैराग्येण [3]वपुस्त्यागः नैव कार्य[4] मनीषिभिः ॥"

इति देवीकालोत्तरवचनानुसारेण शरीरस्य सकलसिद्धिमूलत्वात् न तत्परित्यागो युक्तः इत्युक्त्वा सकायस्थलं समापयति--

---

[1] भक्तानां ध्यानार्थं तथा तन्नित्यसङ्कल्पादिति भावः ।
[2] देहधारिणः इत्यर्थः ।
[3] कालुष्याश्रये शरीरे रागं विहायेत्यर्थः ।
[4] कार्यः इति स्यात् ।

तपो हि मूलं सर्वासां सिद्धीनां यज्जगल्लये ।
तपस्तत्कायमूलं हि तस्मात् कायं न सन्त्यजेत् ॥

(57) इति सकायस्थलम् (8-4)

(58) अथ माहेश्वरस्थले अकायस्थलम् (8-5)

1068 [अकायपदार्थः]

औपचारिकदेहित्वात् जगदात्मत्वभावनात् ।
मायासम्बन्धराहित्यात् अकायो हि परः स्मृतः ॥[2]

---

1067 [अकायस्थलनिरूपणम्]

अथ—

"अच्छायमशरीरम्"

इति श्रुतेः, परयोगिनश्च औपचारिकदेहत्वात् अकायः इति[1] पञ्चभिः सूत्रैः प्रतिपादयति—

परः उक्तलक्षणसकायः परयोगी औपचारिकदेहित्वात् देहाभिमानशून्यत्वात् जगदात्मत्वभावनात्—

---

[1] इतीममर्थमित्यर्थः ।

2 सकायत्वाकायत्वप्रयोगौ नेन्द्रियाधीनौ, किन्तु भावाधीनाविति भावः ।

1069 [अकायस्य देहकृतविकाराभावः]

परस्य देहयोगेऽपि न देहाश्रयविक्रिया ।
शिवस्येव यतः तस्मात् अकायोऽयं प्रकीर्तितः ॥

"स्वशक्तिप्रचयो विश्वम्"

इति शिवसूत्रस्थितेः, सर्वं विश्वं शिवस्वभावभूतचित्क्रियाशक्तिमयं, तद्विषयत्वात् । अन्यथा तद्बाह्यत्वेन अप्रमेयकार्यं स्यात् इति चिन्तनात् मायासम्बन्धराहित्यात् । अत एव अन्योन्याभावलक्षणभेद[1]बुद्धिराहित्यात् अकायः इति स्मृतः । हि प्रसिद्धः इत्यर्थः ॥

ननु अस्य देहाभिमानशून्यत्वेन अकायत्वेऽपि देहसम्बन्धस्य विद्यमानत्वात् तत्कृतविकारः अस्ति किम् ? इत्यत्राह—

शिवस्य देहयोगेऽपि यथा शरीरप्रयुक्तकामादिविकारो नास्ति, तथा प्रयोगिनः शिवतुल्यत्वात् देहप्रयुक्तविकारः नास्तीत्यर्थः ॥

1070 [अकायस्य सकायत्वेन भाने हेतुः]

ननु अकायस्य[2]सकायत्वेन भासनं किंप्रयुक्तम् ? इत्यत्राह—

[1] अन्योन्याभावरूपो यो भेदः तार्किकाभिमतः तद्बुद्धीत्यर्थः ।

[2] अकायस्यापि । (ख)

पुरलिङ्गे[1] विलीनस्य परमानन्दचिन्मये ।
कुतो देहेन सम्बन्धः देहिवद्भासनं भ्रमः ॥

1071 [अकायस्य देहसम्बन्धेऽपि दोषाभावः]

देहाभिमानहीनस्य शिवभावे स्थितात्मनः ।
जगदेतत् शरीरं स्यात् देहेनैकेन का व्यथा ॥

1072 [अस्य दुःखासम्बन्धोपपादनम् ]

शिवज्ञानैकनिष्ठस्य नाहङ्कारभवभ्रमः ।
नचेन्द्रियभवं दुःखं त्यक्तदेहाभिमानिनः ॥

---

द्रष्टॄणां भ्रमः इत्यर्थः ॥[2] शिष्टं स्पष्टम् ॥

अथ देहसम्बन्धे सत्यपि तेन बाधकं नास्तीत्याह—

देहाभिमानशून्यत्वेन शिवभावे स्थितस्वरूपवतः एतत्परयोगिनः शिववत् विश्वं शरीरं स्यादिति एकेन [3]शरीरेण का व्यथा? काऽपीत्यर्थः ॥

अथ शिववत् स्वातन्त्र्याभावात् दुःखं कस्मान्नास्ति? इत्यत्राह....

शिवाहम्भावनिष्ठस्य परिच्छिन्नशरीराहङ्कारशून्यत्वात् "नाहमीश्वरः"

---

1 देहरूपपुरमूले लिङ्गे इत्यर्थः ।

2 धर्मधर्मिणोरभेदभ्रान्तिनिमित्तः भ्रमः इति भावः ।

3 अनेन (ख)

1073 [निगमनम्]

न मनुष्यो न देवोऽहं न यक्षो नैव राक्षसः ।
शिवोऽहमिति यो बुद्ध्यात्[1] तस्य किं देहकर्मणा ॥[2]

(58) इति अकायस्थलम् (8-5)

(59) अथ माहेश्वरस्थले परकायस्थलम् (8-6)

---

इति तत्कृतभ्रान्तियजन्यं दुःखं च नास्ति इत्यर्थः ॥

अथ उक्तार्थमेव स्फुटीकृत्य अकायस्थलं समापयति —

तस्य कायस्य शारीरकर्मणा किम् ? किं प्रयोजनम् ? न किमपीत्यर्थः ॥ शिष्टं स्पष्टम् ॥

1074 [परकायस्थलनिरूपणम्]

अथ—

"स एवैतत् परमं ब्रह्म धाम"

इति मुण्डकश्रुतेः अकायपरयोगी प्रकृतिमायतीतः इति परब्रह्मशरीरत्वात् परकायः इति पञ्चभिः सूत्रैः प्रतिपादयति—

---

[1] जानीयादित्यर्थः ।

[2] दैहिकैः कर्मभिरित्यर्थः ।

1075 [परकायपदार्थः]

वशीकृतत्वात् प्रकृतेः मायामार्गातिवर्तनात् ।
परकायोऽयमाख्यातः सत्यज्ञानसुखात्मकः ॥

1076 [योगिनः परकायत्वोपपत्तिः]

परब्रह्मवपुर्यस्य प्रबोधानन्दभासुरम् ।
प्राकृतेन शरीरेण किमेतेनास्य जायते ॥

---

अयं अकायः शिवयोगी प्रकृतेर्वशीकृतत्वात् , वशीकृतेः, माया-मार्गोल्लङ्घनात सत्यज्ञानसुखात्मकः सच्चिदानन्दस्वरूपवान् परकायः इत्याख्यातः[1] इत्यर्थः ॥

नन्वेवं परकायत्वे कथितेऽपि स्थूलशरीरस्य विद्यमानत्वात् कथं अधुनैव परकायत्वम् ? इत्यत्राह—

चिदानन्दाभ्यां प्रकाशमानं परब्रह्म यस्य वपुः शरीरं जायते, अस्य परकायस्य प्राकृतेन शरीरेण किम् ? अन्योन्यभेदाभावबुद्धिरूपमाया-मार्गोल्लङ्घनेन तत्कार्यरूपप्रकृतितत्त्वस्य वशीकरणात् सागरतरङ्गन्यायेन स्वाधीनीकरणात् प्रकृतिसम्भवेन शरीरेण किं बाधकम् ? न किमपि बाधकमित्यर्थः ॥[2]

---

[1] कायधर्मानधीनः कायातीतः इति भावः ।

[2] अस्य कायस्य एतद्बन्धनहेतुत्वं नास्तीति भावः ।

1077 [परकायस्य ज्ञानप्रतिबन्धाभावः]

सम्यग् ज्ञानाग्निसन्दग्धजन्मबीजकलेबरः ।
शिवतत्त्वावलम्बी यः परकायः स उच्यते ॥

1078 [इन्द्रियव्यापाराणां ज्ञानाबाधकत्वम् ]

इन्द्रियाणि मनोवृत्तिवासनाः[1] कर्मसम्भवाः ।
यत्र यान्ति लयं तेन सकायोऽयं परात्मना ॥[2]

---

ननु तथापि शरीरमेव प्रतिबन्धकम् इत्यत्राह—

सम्यग् ज्ञानाग्निना दृढतरशिवाद्वैतज्ञानाग्निना सन्दग्ध पुनरुत्पत्तिशङ्का यथा न भवति तथा सम्यक् दग्धम् , जन्मैव बीजं यस्य तादृशः कलेबरः भवान्तरकारणीभूतसूक्ष्मशरीरः यस्य सः तथाविधः शिवतत्त्वावलम्बी परशिवस्वरूपवान् यः अस्ति सः परकायः इत्युच्यते इत्यर्थः । जन्मरोगप्रवर्तकस्य सूक्ष्मशरीरस्य नष्टत्वात् स्थूलशरीरे सत्यपि बाधकं नास्तीति भावः ॥

ननु शरीरस्य विद्यमानत्वेन इन्द्रियव्यापारानुवृत्तेः, बाधकमेव इत्यत्राह—

कर्मसम्भवाः कर्मपाशसम्भूताः मनोवृत्तिवासनाः इन्द्रियार्थवासनाः इन्द्रियाणि च दशेन्द्रियव्यापाराः यत्र लयं यान्ति, तेन परमात्मना

---

[1] मनोवृत्तिर्वासना (ख)
[2] परशब्दः परमपरः ।

1079 [शरीरस्य ब्रह्ममयत्वोपपत्तिः]

पराहन्तामनुप्राप्य पश्येद्विश्वं चिदात्मकम् ।
सदेहोऽतिभ्रमस्तस्य निश्चिता हि शिवात्मता ॥

1080 [परकायस्य परममुक्तत्वम्]

स्वस्वरूपं चिदाकारं ज्योतिः साक्षात् विचिन्तयन् ।
देहवानपि निर्देहः[2] जीवन्मुक्तो हि साधकः ॥

---

परब्रह्मणा अयं एषः परकायः सकायः कायेन सहितः सन् वर्तते। एतत्कायस्यापि ब्रह्ममयत्वात् इति भावः ॥

ननु शरीरस्य कथं ब्रह्ममयत्वम्, इत्यत्राह—

[1]पराहन्तां "परब्रह्म-परशिव-परमात्मपर्यायपरतत्त्वमेव स्वयमिति भावं अनुप्राप्य विश्वं सकलजगज्जालं चिदात्मकं परब्रह्मस्वभावभूतचित्क्रि-यान्तर्गतत्वात् तन्मयम् इति यः पश्यति, तस्य सदेहः देहेन सहवर्तमानत्वं अतिभ्रमः पश्यतां प्राकृतानां भ्रमः। निश्चिता हि शिवात्मना, किन्तु तस्य शरीरस्य शिवात्मता निश्चिता, शक्तिमयत्वात् इति ॥

तर्हि स परकायः शिववदकायः सन् परममुक्त एव स्यात् इत्यत्राह—

---

[1] परस्मिन् अहंता, अहमि परंतांचइति भावः ।

[2] देहकार्याणां बन्धकानाम भावात् ।

1081

देहस्तिष्ठतु वा यातु योगिनः स्वात्मबोधिनः ।
जीवन्मुक्तिर्भवेत्सद्यः[2] चिदानन्दप्रकाशिनी ॥

1082 [निगमनम्]

आत्मज्ञानावसानं हि संसारपरिपीडनम् ।
सूर्योदयेऽपि किंलोकः तिमिरेणोपरुद्ध्यते ॥

देहाभिमाननिर्मुक्तः कलातीतपदाश्रयः ।
कथं याति परिच्छेदं शरीरेषु महाबुधः ॥

---

स्वस्वरूपं साक्षाच्चिदाकारं ज्योतिरिति चिन्तयन् साधकः देहवानपि पुनर्देहान्तराभावात्[1] निर्देहः जीवन्मुक्तः इति हि । प्रसिद्धमित्यर्थः ॥

तदेवोपपादयति—

स्पष्टम् ॥

अत्र दृष्टान्तमाह—

उपरुध्यते व्याप्यते इत्यर्थः । शिष्टं स्पष्टम् ॥

अथ परकायस्थलं समापयति—

---

[1] ज्योतिस्स्वरूपातिरिक्तस्य बन्धकस्य देहान्तरस्य अभावादिति भावः ।

[2] देहस्य याने तदनन्तरं जीवन्मुक्तिव्यवहारो नास्ति । परं तु 'तिष्ठतु-यातु' इत्यनन्तरं इति विभावयन् इति भावः ।

## (59) इति परकायस्थलम् (8–6)

## (60) अथ माहेश्वरस्थले धर्माचारस्थलम् (8–7)

1084 [धर्मस्वरूपम्]

तस्यैव परकायस्य[2] [3]समाचारो य इष्यते ।
स धर्मः सर्वलोकानाम् उपकाराय कल्प्यते[4]

शरीरकलाभिमानशून्यः सन् शरीरस्य पाञ्चभौतिकत्वात् तत्कारणीभूतनिवृत्त्यादिकलातीतपरब्रह्मपदाश्रितः[1] महाबुधः परमज्ञानी परकायः शरीरेषु परिच्छेदं परिमितत्वं कथं केन प्रकारेण याति? न केनापि यातीत्यर्थः ।

1083 [धर्माचारस्थलनिरूपणम्]

अथ—

"यद्वेदविद्याधिगमः स्वधर्मस्यानुचरणम् स्वाश्रमेष्विवानुकरणम् स्वधर्म एव, संवर्धन्ते स्तम्बशाखेवेतराणि । अनेन ऊर्ध्वभाग् भवति" ।

इति मैत्रेयश्रुतेः तस्य परकायस्य आचार एव सर्वजनानां धर्माचारः इति धर्माचारस्थलं प्रतिपादयति—

तस्य परकायस्य शिवयोगिनः यः आचारः इच्छाविषयीक्रियते

---

1 शैवतन्त्रग्रन्थेषु यथा विवृतं तेन प्रकारेणेत्यर्थः ।
2 तेषां च परकायानां (ग)
3 समीचीनः व्यवहारः इत्यर्थः ।
4 कल्पते (ग)

1085 [तदाचरणीयाः धर्माः]

अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दया क्षमा ।
दानं पूजा जपो ध्यानं [1]इति धर्मस्य सङ्ग्रहः ॥

1086 [तत्कृतधर्माचारप्रयोजनम् ]

शिवेन विहितो यस्मात् आगमैर्धर्मसङ्ग्रहः ।
तस्मात् तमाचरन् विद्वान् तत्प्रसादाय कल्प्यते ॥

---

सः धर्मस्सन् समस्तजनानां उपकाराय कल्प्यते इत्यर्थः ॥

अथ तद्धर्माचारं सूत्रत्रयेण कथयति--

दानं सहजदानम् । पूजा शिवलिङ्गपूजा । ध्यानं शिवलिङ्ग-चिन्तनम् । जपः शिवपञ्चाक्षराभ्यासः इत्यर्थः ॥ शिष्टं स्पष्टम् ॥

ननु इदं धर्माचरणं किमर्थं कर्तव्यम् ? इत्यत्राह—

आगमैः शिवेन धर्मसमूहो विहितः इति विधेय एव । तस्मात् धर्माचारवान् शिवप्रसादाय[2] समर्थो भवति । अन्यथा शिवप्रसादशून्यः सन् नरकं व्रजेत् इत्यर्थः ॥

---

[1] दृश (ग)

[2] शिवप्रसन्नतासम्पादनायेत्यर्थः ।

1087 [धर्माचरणप्रकारः]

अधर्मं न स्पृशेत् किञ्चित् विहितं धर्ममाचरेत् ।
तं च कामविनिर्मुक्तं तमपि ज्ञानपूर्वकम्-॥[1]

1088 [तदीयज्ञानस्वरूपम्]

आत्मवत् सर्वभूतानि सम्पश्येद्योगवित्तमः ।
जगदेकात्मताभावात् निग्रहादिविरोधतः ॥

---

ननु स धर्मः कथं कर्तव्यः ? इत्यत्राह—

विहितं अहिंसादिरूपमित्यर्थः ॥ शिष्टं स्पष्टम् ॥

अथ तत् ज्ञानं कीदृशम् ? इत्यत्राह—

"मातृवत् परदाराणि[2] परद्रव्याणि लोष्टवत् ।
आत्मवत् सर्वभूतानि यः पश्यति स पश्यति ॥"

इति श्रुत्यनुसारेण सूत्रद्वयेनाह—

योगवित्तमः योगीश्वरः जगदेकात्मताभावात् जगतः प्रकाशैकरूपत्वचिन्तनात् निग्रहादिविरोधतः निग्रहानुग्रहयोरवकाशाभावात् सर्वभूतानि आत्मवत् स्वात्मवत् संपश्येत् अपक्षपातेन पश्येत् इत्यर्थः ॥

---

[1] ज्ञानपूरकम् (ख)

[2] परद रांश्च इति स्यात् । 'दाराः पुंसि च भूम्न्येव' इत्यमरः ।

1089 [तादृशज्ञानफलम् ]

एक एव शिवः साक्षात् जगदेतदिति स्फुटम् ।
पश्यतः किं न जायेत ममकारो हि विभ्रमः ॥

1090 [धर्ममार्गस्य अपरित्यागविधि ]

धर्म एव समस्तानां यतः संसिद्धिकारणम् ।
निःस्पृहोऽपि महायोगी धर्ममार्गं च न त्यजेत् ॥

1091 [ज्ञानिक्रियमाणधर्माचरणोपयोगः]

ज्ञानामृतेन तृप्तोऽपि योगी धर्मं न संत्यजेत् ।
आचारं महतां दृष्ट्वा प्रवर्तन्ते हि लौकिकाः ॥[1]

---

एवं पश्यतः ममकारो नैवेत्याह—

" शिव एक एव एतज्जगत् " इति स्फुटं साक्षात् पश्यतः किं न जायेत? सर्वं स्यादेव तस्मिन् जगति ममकारः प्रतिनियतमस्तु ममेत्यभिमानः विभ्रमः नास्तीत्यर्थः ॥

अथ तद्धर्माचारं विरक्तोऽपि न त्यजेत् इत्याह—

संसिद्धिकारणं भोगमोक्षकारणं इत्यर्थः । शिष्टं स्पष्टम् ।

ननु ज्ञानिनां किं धर्माचरणेन? इत्यत्राह—

---

[1] अयमेवार्थः भगद्गीतायां—'न बुद्धिभेदं जनयेत्' इत्यादिना उक्तः ।

1092 [सदाचारस्य शिवप्रीतिहेतुता]

[1]सदाचारप्रियः शम्भुः सदाचारेण पूज्यते ।
सदाचारं विना तस्य प्रसादो नैव जायते ॥

(60) इति धर्माचारस्थलम् (8–7)

(61) अथ माहेश्वरस्थले भावाचारस्थलम् (8–8)

---

ज्ञानामृतेन शिवज्ञानामृतेन तृप्तोऽपि महायोगी लोकहितार्थं धर्माचारं न [1]परित्यजेत् इत्यर्थः ॥

अथ कारणान्तरमप्याह—

ज्ञानिनोऽपि शिवप्रसादसिद्ध्यर्थं अहिंसादिधर्माचरणं आवश्यकमिति भावः ॥

1093 [भावाचारस्थलनिरूपणम्]

अथ—

" ज्योतीरूपं शिवं पूर्णं विश्वतेजोनिवर्तकम् ।
आशयं भासयन्तं च भावयंस्तन्मयो भवेत् ॥"

---

1 नैव (ख)

2 सज्जनपरिगृहीतेषु आचारेषु प्रियः इत्यर्थः ।

1094 [भावपदार्थः]

भाव एवास्य सर्वेषां भावाचारः[1] प्रकीर्तितः ।
भावो मानसचेष्टात्मा परिपूर्णशिवाश्रयः ॥

1095 [भावपूर्णकर्मणः प्राशस्त्यम् ]

भावनाविहितं कर्म पावनादपि पावनम् ।
तस्माद्भावनया युक्तं [3]परधर्मं समाचरेत् ॥

---

इति कामिकवचनानुसारेण धर्माचारसम्पन्नस्य शिवयोगिनः भाव एव सर्वेषां भावाचारः इत्युपपादयति—

अस्य धर्माचारसम्पन्नस्य शिवयोगिनः भावः एव सर्वेषां प्राकृतानां भावाचारः इति परिकीर्तितः । भावो नाम कः ? इत्यत्राह—मानसेति । मनोव्यापाररूपः सन् परिपूर्णशिवाश्रयः अन्तर्बहिश्च पूर्णशिव[2] एव आश्रयः यस्य, तादृशस्तु विशेषेण भावः इत्यर्थः ॥

अथ भावयुक्तकर्म सूत्रद्वयेन विशेषयति—

स्पष्टम् ॥

ननु भावेन किम् ? इत्यत्राह—

---

[1] भावः इत्यस्य भावरूपा मानसी क्रिया इत्यर्थः इति भावः ।
[2] पूर्णः शिवः (ख)
[3] देवकार्यमिति यावत् ।

1096 [भावोपयोगः]

भावेन हि मनश्शुद्धिः भावशुद्धिश्च कर्मणा ।
इति संचिन्त्य मनसा योगी भावं न सन्त्यजेत् ॥

1097 [भाववैशिष्ट्यम्]

शिवभावनया सर्वं नित्यनैमित्तिकादिकम् ।
कुर्वन्नपि महायोगी गुणदोषैर्नबाध्यते ॥

1098 [योगिनां भावपूर्णकर्माचरणौचित्यम्]

अन्तः प्रकाशमानस्य संवित्सूर्यस्य सन्ततम् ।
भावेन यदुपस्थानं तत् सन्ध्यावन्दनं विदुः ॥

---

स्पष्टम् ॥

ननु भावेन कर्मसिद्धिश्चेत् प्रतिबन्धकं स्यात् इत्यत्राह—

"शिव एव कर्ता" इति शिवभावनया कुर्वन् योगी गुणदोषैः नलिप्यते [1]इत्यर्थः । शिष्टं स्पष्टम् ॥

ननु परयोगीश्वरस्य नित्यनैमित्तिककर्म सङ्गाभावात् कथं तदाचरणं अङ्गीकृतम् ? इत्यत्राह—

अन्तः ऊर्ध्वं हृत्कमले निरन्तरं भासमानस्य चिदादित्यस्य [2]भावेन यत् उपस्थानं अनुवर्तनं तत् सन्ध्यावन्दनं इति वीरशैवाचार्याः जानन्ति इत्यर्थः ॥

---

1 लेपस्यैव बाधाहेतुत्वात् एवमुक्तम् ।
2 ज्ञानरूपस्य सूर्यस्येत्यर्थः ।

1099 [तस्य होमकर्मावश्यकता]

आत्मज्योतिषि सर्वेषां विषयाणां समर्पणम् ।[1]
अन्तर्मुखेन भावेन होमकर्मेति गीयते ॥

1100 [भावस्य कर्मसङ्गराहित्यहेतुता]

भावयेत् सर्वकर्माणि नित्यनैमित्तिकावि च ।
शिवप्रीतिकराण्येव [2]सङ्गराहित्यसिद्धये ॥

---

तर्हि होमोऽप्यावश्यकः इति, सः कीदृशः ? इत्यत्राह—

आत्मज्योतिषि चिदग्नौ अन्तर्मुखेन भावेन अबहिर्मुखेन भावेन सर्वेषां विषयाणां यत् समर्पणम् सागरतरङ्गन्यायेन लयचिन्तनं तदेकलोली भावचिन्तनं यदस्ति तत् होमकर्म इति गीयते कथ्यते इत्यर्थः ॥

एवं नित्यनैमित्तिककर्माणि भावयन् सङ्गरहितः स्यात् इत्याह—

संसारबन्धनिवृत्त्यर्थं नित्यनैमित्तिकानि सर्वाणि कर्माणि शिवप्रीतिकराण्येवेति भावयेदित्यर्थः ॥

1101 [तदुपपत्तिः]

ननु कर्मणः सङ्गहेतुत्वात् कथं सङ्गराहित्यं स्यात् ? इत्यत्राह—

---

[1] तल्लगनं यथा भवेत् तथा करणम् ।
[2] सङ्गः = लेपः ।

शिवे निवेश्य सकलं कार्याकार्यं विवेकतः ।[1]
वर्तते यो महाभागः स सङ्गरहितो भवेत् ॥

1102 [तत्र शिवदर्शनस्यस्थानम् ]

आत्मानमखिलं वस्तु शिवमानन्दचिन्मयम् ।
एकभावेन सततं सम्पश्यन्नेव पश्यति ॥

(61) इति भावाचारस्थलम् (8-8)

---

विवेकतः कर्ता कारयिता कर्म तत्फलं च शिव एवेति त्रिवेकतः कार्याकार्यं कर्तुं योग्यं अयोग्यं च शिवे निवेश्य समर्प्य यो महाभागः महापुरुषः वर्तते सः सङ्गरहितः भवसङ्गरहितः इत्यर्थः ॥

ननु भावसङ्गराहित्यं शिवदर्शनेन विना न सम्भवतीत्यत्राह—

आत्मानं स्वात्मानं अखिलं वस्तु सर्वं विश्वं आनन्दचिन्मयं परशिवं च एकभावेन एकत्वेन सततं पश्यन्नेव चिद्रूपत्वात् शिवजीवैक्यं शिवस्वभावसूत चित्क्रियाव्याप्तत्वात् तदवाह्यत्वेन "सर्वं विश्वं शिवात्मक" मिति पश्यन्नेव पश्यति शिवं पश्यतीत्यर्थः ॥[2]

---

[1] कार्याकार्यविवेकतः (क)

[2] शिवात्मको भवतीति यावत् ।

## (62) अथ माहेश्वरस्थले ज्ञानाचारस्थलम् (8-9)

—o—

1104 [ज्ञानाचारपदार्थः]

अस्य ज्ञानसमाचारः[1] योगिनः सर्वदेहिनाम् ।
ज्ञानाचारो यदुक्तोऽयं ज्ञानाचारः स कथ्यते ॥

1105 [ज्ञानस्वरूपम्]

शिवाद्वैतपरं ज्ञानं ज्ञानमित्युच्यते बुधैः ।[2]
सिद्धेन वाऽप्यसिद्धेन फलं ज्ञानान्तरेण किम् ?

---

1103 [ज्ञानाचारस्थलनिरूपणम्]

अथ —

"सत्यं ज्ञानमनन्तं ब्रह्म"

इति श्रुतेः तस्य भावाचारसम्पन्नस्य शिवयोगिनः ज्ञानाचार एव सर्वदेहिनां ज्ञानाचारः इति ज्ञानाचारस्थलं प्रतिपादयति—

भावाचारसम्पन्नस्यास्य योगिनः ज्ञानसमाचार एव सर्वदेहिनां ज्ञानाचारः इति यत् यस्मात् कारणात् उक्तः तस्मात् कारणात् सोऽयं ज्ञानाचारः इति कथ्यते—इत्यर्थः ।

अथ तत् ज्ञानाचारमेव लक्षणपूर्वकं सूत्रत्रयेण कथयति —

---

[1] सम्यक् आचरणं समाचारः ।
[2] ज्ञानपदस्य पार्यन्तिकः अयमेवार्थः इति भावः ।

1106 [तदुपपादनम्]

निर्मलं हि शिवज्ञानं निःश्रेयसकरं परम् ।
रागद्वेषादिकलुषं भूयः संसृतिकारणम् ॥

1107 [ज्ञानाचारस्वरूपम्]

परिपूर्णं महाज्ञानं परतत्त्वप्रकाशकम् ।
अवलम्ब्य प्रवृत्तो यः ज्ञानाचारः स उच्यते ॥

---

शिवाद्वैतमेव परं प्रधानं यस्य तादृशं ज्ञानं बुधैः ज्ञानमित्युच्यते। शास्त्रसिद्धेन वा तदसिद्धेन वा ज्ञानान्तरेण भिन्नज्ञानेन किं फलम्? न किमपीत्यर्थः ॥

अथ तत् कथम्? इत्यत्राह—

शिवज्ञानं शिवाद्वैतज्ञानं निर्मलं[1] आणवादिमलसङ्करहितं सन् परं निःश्रेयसकारणं सर्वोत्कृष्टमोक्षप्रदमित्यर्थः । तद्व्यतिरिक्त भेदज्ञानं रागद्वेषादिकलुषं कामक्रोधादिमिश्रं सन् भूयः पुनः पुनः संसृतिकारणं यातायातकारणमिति हि प्रसिद्धमित्यर्थः ॥

एवं ज्ञानस्वरूपं उक्त्वा तदाचारस्वरूपं कथयति—

परतत्त्वप्रकाशकं परिपूर्णं अपरिच्छिन्नं महाज्ञानं शिवाद्वैतज्ञानं

---

[1] आणवादिमलानां उपपादनं पूर्वमेव कृतम् ।

[2] आचारणसामान्यस्य शिवज्ञानविरोधाभावः अत्यावश्यकत्वेन विहितः इति भावः ।

1108 [तादृशज्ञानाचारवतः स्वरूपम्]

निर्विकल्पे परे धाम्नि निष्कले शिवनामनि
ज्ञानेन योजयेत् सर्वं ज्ञानाचारी प्रकीर्तितः ॥

1109 [तस्य कर्मकार्पण्याभावः]

ज्ञानं मुक्तिप्रदं प्राप्य गुरुदृष्टिप्रसादतः ।
कः कुर्यात् कर्मकार्पण्ये[2] वाञ्छां संसारवर्धने ॥

---

अवलम्ब्य धृत्वा यः आचारः सः ज्ञानाचारः इत्युच्यते इत्यर्थः ॥

[1]अथ तद्ज्ञानाचारिणं प्रकाशयति—

निष्कले निरवयवे निर्विकल्पे भेदरहिते शिवनामनि 'शिव' इत्यभिधानवति परे धाम्नि परब्रह्माधारे सर्वं जगज्जालं ज्ञानेन अभेदज्ञानेन यो योजयेत् स 'ज्ञानाचारी' इति कीर्तितः इत्यर्थ ॥

अथ तस्य ज्ञानाचारिणः कर्मकार्पण्यं नास्तीति सूत्रद्वयेन कथयति—

मुक्तिप्रदं परापरमोक्षप्रदं शिवज्ञानं गुरुकृपादृष्टिप्रसन्नतावशात् प्राप्य, संसारवर्धने कर्मकार्पण्ये वाञ्छां इच्छां कः कुर्यात्? न कोऽपि कुर्यादित्यर्थः ॥

---

[1] एवं ज्ञानाचारमुपपाद्य तादृशस्य आचारस्य जीवने समन्वयः प्रदर्श्यते ।

[2] अल्पाल्पफलककर्मसु मनोऽभिलाषः कर्मकार्पण्यम् ।

1110 [तत्र हेतूपपादनम्]

कर्म ज्ञानाग्निना दग्धं न प्ररोहेत् कथंचन ।
यदाहुः संसृतेर्मूलं प्रवाहानुगतं बुधाः ॥

1111 [ज्ञानिनः कर्मबन्धाभावः]

ज्ञानेन हीनः पुरुषः कर्मणा बद्ध्यते सदा ।
ज्ञानिनः कर्मसङ्कल्पाः भवन्ति किल निष्फलाः ॥

---

कुतः ? इत्यत्राह--

यत् कर्म बुधाः संसृतेः मूलं मूलकारणं सत् प्रवाहानुगतं जलप्रवाहन्यायेन अनादित्वेन अतेः अनुगतं सत् आहुः, तत् कर्मबन्धनं शिवज्ञानाग्निना दग्धं सत् कथंचन केनापि प्रकारेण न प्ररोहेत् नाङ्कुरेत् इत्यर्थः ॥[1]

तर्हि कर्मबन्धमं कस्य ? इत्यत्राह--

"यथा पुष्करपलाश आपो न श्लिष्यन्ते एवं विदि पापकर्म न श्लिष्यते । स उत्तमः पुरुषः"

इति छान्दोग्यश्रुतेः ॥

"अद्वैतभक्तियुक्तस्य योगिनः सकलाः क्रियाः ।
सन्ति दग्धपटन्यायात् क्रियामात्रा हि न क्रिया ॥"

---

[1] इदं यथा दग्धस्य बीजस्य अङ्कुरोत्पादनसामर्थ्यं नास्ति तथेति पूर्वोक्तमन्त्रानुसन्धेयम् ।

[ज्ञानाचारस्थलनिगमनम्]

शुद्धाचारे शुद्धभावो विवेकी ज्योतिः पश्यन् सर्वतश्चैवमेकम् ।
ज्ञानध्वस्तप्राकृतात्मप्रपञ्चः जीवन्मुक्तः चेष्टते सर्वयोगी ॥

इति श्रीमत् षट्स्थलब्रह्मिणा शिवयोगि
नाम्ना रेणुकाचार्येण विरचिते
सिद्धान्तशिखामणौ माहे-
श्वरस्थलाश्रित नवलिङ्गप्रसङ्गो नाम
षोडशः परिच्छेदः समाप्तः

---

इति वीरागमोक्तेश्च ज्ञानिनः कर्मपाशो नास्ति इत्यर्थः ॥

अथ ज्ञानाचारस्थलं समापयति—

शुद्धाचारे निर्मलज्ञानाचारे शुद्धभावः निर्मलभाववान् विवेकी एवं [1]प्रतियोगिरहितं शैवं तेजः सर्वतः पश्यन्, ज्ञान[2]ध्वस्तप्राकृतात्मप्रपञ्चः शिवाद्वैतज्ञाननाशितप्रकृतिजन्यदेहप्रपञ्चवान् दिव्ययोगी स्वयंप्रकाशरूपः शिवयोगी जीवन्मुक्तः सन् चेष्टते लोकवत् व्यवहरति इत्यर्थः ॥

---

[1] प्रतियोगिरहितं-असदृशमिति यावत् ।

[2] अत्रत्यज्ञानपदं शिवाद्वैतज्ञानपरमिति भावः ।

(62) इति ज्ञानाचारस्थलम् (8-9)

इति अष्टमं माहेश्वरस्थलं
समाप्तम् ॥ ५ ॥

---

इति श्रीमत्पदवाक्यप्रमाण-
पारावारधुरीणश्रीमरितोण्टदार्येण
विरचितायां तत्त्वप्रदीपिकाख्यायाम्
माहेश्वरस्थलाश्रितनवलिङ्ग-
प्रसङ्गो नाम षोडशः परिच्छेदः समाप्तः ॥

॥ श्री शिवाय नमः ॥

# सिद्धान्तशिखामणौ

## सप्तदशः परिच्छेदः

## प्रसादिस्थलाश्रितनवलिङ्गप्रसङ्गः ॥

---

## (9) अथलिङ्गस्थले नवमं प्रसादिस्थलम्

---

1113 [प्रसादिस्थलनिरूपणम् ]

अगस्त्य उवाच—

स्थलानि तानिचोक्तानि यानि माहेश्वरस्थले ।
वदस्य स्थलभेदं मे प्रसादिस्थलसंश्रितम् ॥

1114 [तदुवान्तरभेदाः]

श्रीरेणुक उवाच—

स्थलभेदाः नव प्रोक्ताः प्रसादिस्थलसंश्रिताः ।
कायानुग्रहणं पूर्वं इन्द्रियानुग्रहं ततः ॥

---

अथ अगस्त्यप्रश्नः—

अगस्त्य उवाच—इति ॥

[1]वदस्व उपदिश इत्यर्थः । शिष्टं स्पष्टम् ॥

श्रीरेणुक उवाच—

---

[1] यथा तद्रहस्यज्ञोऽहं भवामि तथा तत्त्वमुपादयेत्यर्थः ।

1115

प्राणानुग्रहणं पश्चात् ततः कायार्पितं मतम् ।
करणार्पितमाख्यातं ततो भावार्पितं मतम् ॥

1116

शिष्यस्थलं ततः प्रोक्तं शुश्रूषा स्थलमेव च ।
ततः सेव्यस्थलं चैषां क्रमशः शृणु लक्षणम् ॥

(63) अथ प्रसादिस्थले कायानुग्रहस्थलम् (9-1)

---

स्पष्टम् ॥

[१. कायानुग्रहस्थलम् ।
२. इन्द्रियानुग्रहस्थलम् ।
३. प्राणानुग्रहस्थलम् ।
४. कायार्पितस्थलम् ।
५. करणार्पितस्थलम् ।
६. भावार्पितस्थलम् ।
७. शिष्यस्थलम् ।
८. शुश्रूषास्थलम् ।
९. सेव्यस्थलम् । इति ॥]

1117 [कायानुग्रहस्थलनिरूपणम् ]

अथ—

" शुचिः समग्रीवशिरश्शरीरः "

---

इदं साधकानां सुखासनपरिचायकम् ।

1118 [कायानुग्रहपदार्थः]

अनुगृह्णाति यल्लोकान् स्वकायं दर्शयन्नसौ ।[1]
तस्मादेव समाख्यातः कायानुग्रहनामकः ॥

1119 [तदुपपादनम्]

यथा शिवोऽनुगृह्णाति मूर्तिमाविश्य योगिनः ।
तथा योगी शरीरस्थः सर्वानुग्राहको भवेत् ॥

---

इति कैवल्यश्रुतेः सः ज्ञानाचारवान् शिवयोगी स्वरूपशरीरं दर्शयन् अनुगृह्णातीति कायानुग्राहकः इति सूत्रत्रयेण दर्शयति—

असौ ज्ञानाचारसम्पन्नः शिवयोगी यत् यस्मात् कारणात् स्वकायं दर्शयन् सन् लोकान् प्राकृतान् अनुगृह्णाति अनुग्रहं करोति तस्मात् एषः कायानुग्रहनामकः कायानुग्रह इत्यभिधानवान् इति समाख्यातः इत्यर्थः ॥

तत् कथम्? इत्यत्र दृष्टान्तमाह—

शिवः यथा [2]चन्द्रशेखरादिमूर्तिमाविश्य देहिनः प्राणिनः अनुग्रहं करोति । तथा योगी शरीरस्थः सन् शिवदीक्षासंस्कृतदिव्यशरीरस्थः सन् सर्वानुग्राहकः स्यात् इत्यर्थः ॥

1120 [कायानुग्रहस्यासङ्गत्वम्]

अथ सः शिववदसङ्गश्चेत्याह—

---

[1] शिवएव परिगृहीतैवंरूपकायवान्-इत्यर्थः ।
[2] चन्द्रशेखरेत्युपलक्षणम् । वस्तुतः ज्ञानमयीं मूर्तिमिति तात्पर्यम् ।

शिवः शरीरयोगेऽपि यथा सङ्गविवर्जितः ।
तथा योगी शरीरस्थः निःसङ्गो वर्तते सदा ॥[1]

1121 [तस्य शिवसाम्यम्]

शिवभावनया युक्तः स्थिरया निर्विकल्पया ।
शिवो भवति निर्धूतमायावेशपरिप्लवः ॥

1122 [तस्य मायानधीनत्वप्रकारः]

चित्तवृत्तिषु लीनासु शिवे चित्सुखसागरे ।
अविद्याकल्पितं वस्तु नान्यत् पश्यति संयमी ॥

---

सुखदुःखादिसङ्गरहितः इत्यर्थः ॥ शिष्टं स्पष्टम् ॥

एवं शिवयोगिनः शिवसमानत्वमुक्त्वा तस्य मायाप्रपञ्चदर्शनं नास्तीति[2] शिव एवेति पञ्चभिः सूत्रैः दृष्टान्तपूर्वकं उपपादयति—

अत्र शिवयोगीति शेषः । भेदरहितया दृढया शिवोऽहम्भावनया युक्तः, निवारितमायावेशोपप्लवः[3] सन् शिव एव भवतीत्यर्थः ॥

ननु कथं तस्य मायावेशोपप्लवो नास्ति ? इत्यत्राह—

ज्ञानानन्दयोः समुद्रस्थानापन्ने परमशिवे चित्तवृत्तिषु मनोव्यापारेषु

---

1 वस्तुतो जीवन्मुक्तस्य शिवाभेदरूपेण परिवर्तनादिति भावः ।

2 मायाप्रपञ्चस्य अमायिकवस्तुत्वेन दर्शनं नास्तीति भावः ।

3 अन्यथाज्ञानमिति यावत् ।

1123

नेदं रजतमित्युक्ते यथा शुक्तिः प्रकाशते ।
नेदं जगदिति ज्ञाने शिवतत्त्वं प्रकाशते ॥

1124

यथा स्वप्नकृतं वस्तु प्रबोधेनैव शाम्यति ।
तथा शिवस्य विज्ञाने संसारं नैव पश्यति ॥

1125

अज्ञानमेव सर्वेषां संसारभ्रमकारणम् ।
तन्निवृत्तौ कथं भूयः संसारभ्रमदर्शनम् ॥

---

लयं गतेषु सत्सु शिवयोगी मायाकल्पितवस्त्वन्तरं[1] न पश्यतीत्यर्थः ।

अत्र दृष्टान्तमाह—

उक्ते ज्ञात इत्यर्थः[2] । शिष्टं स्पष्टम् ॥

अथ पुनर्दृष्टान्तमाह—

एष शिवयोगीत्यर्थः ॥ शिष्टं स्पष्टम् ॥

अथ पुनः दृष्टान्तमाह—

यथा शुक्त्यज्ञानं रजतभ्रान्तिकारणं तथा शिवविषयकमज्ञानं संसारभ्रान्तिकारणं, तन्निवृत्तौ शुक्त्यज्ञाननिवृत्तौ यथा रजतभ्रमो निवर्तते,

---

[1] शिवातिरिक्तस्य सर्वस्यापि मायापरिकल्पितत्वात् सर्वमपि लौकिकं वस्तु इति भावः ।

[2] वाचा उक्तिपर्यन्तं मनसि तथा भाते इत्यर्थः ।

[निगमनम्]

गलिताहङ्कृतिग्रन्थिः क्रीडाकल्पितविग्रहः ।
जीवन्मुक्तश्चरेद्योगी देहवन्निरुपाधिकः ।।

(63) इति कायानुग्रहस्थलम् (9-1)

(64) अथ प्रसादिस्थले इन्द्रियानुग्रहस्थलम् (9-2)

---

तथा शिवविषयकाज्ञाननिवृत्तौ सांसारिक भेदभ्रान्तिदर्शनं नास्तीत्यर्थः। यथा शुक्तिरेव रजतम्[1] तथा शिव एव विश्वम् इत्यर्थः ।।

तस्मात् अयं शिवयोगी जीवन्मुक्तः इति वदन् कायानुग्रहस्थलं समापयति—

निवृत्तपरिच्छिन्नशरीराद्यहङ्कारवान् क्रीडार्थं स्वेच्छापरिकल्पितकलेवरः अत एव निरुपाधिकः प्रतिबन्धरहितः[2] इत्यर्थः । जीवन्मुक्तः सन् देहिवत् देहवानिव लोकानुग्रहार्थं सञ्चरेत् इत्यर्थः ।।

1127 [इन्द्रियानुग्रहस्थलनिरूपणम्]

अथ—

"त्रिरुन्नतं प्राप्य समं शरीरं
हृदोन्द्रियाणि मनसा संनिवेश्य ।"

---

[1] यन्मया "इदं रजतं" इति भ्रान्तं तत् शुक्तिरेवेति भावः ।
[2] आकाशवत् इति भावः ।

1128 [इन्द्रियानुग्रहपदार्थः]

दर्शनात् परकायस्य करणानां विवेकतः ।[2]
इन्द्रियानुग्रहः प्रोक्तः सर्वेषां तत्त्ववेदिभिः ॥

1129 [इन्द्रियस्वाभाविकव्यापारविवरणम्]

इन्द्रियाणां समस्तानां स्वार्थेषु सति सङ्गमे ।
रागो वा जायते द्वेषः तौ योगी परिवर्जयेत् ॥

---

इति श्वेताश्वतरश्रुत्यनुसारेण तस्य कायानुग्रहसम्पन्नस्य शिवयोगिनः इन्द्रियानुग्रहस्थलमिति निरूपयति—

परकायस्य सर्वोत्कृष्टकायानुग्रहसम्पन्नस्य शिवयोगिनः दर्शनात् करणानां इन्द्रियाणां विशेषतः सर्वेषां प्राकृतानां इन्द्रियानुग्रहः इति तत्त्ववेदिभिः तत्त्वज्ञानिभिः प्रोक्तः कथितः इत्यर्थः ॥

अथ तत् कथम्? इत्यत्र तदिन्द्रियव्यापारं पञ्चभिः सूत्रैः प्रतिपादयति—

लोके समस्तानां श्रोत्रादीन्द्रियाणां स्वस्वविषयेषु सम्बन्धे सति रागो वा द्वेषो वा जायते ।[2] योगी शिवयोगी तौ रागद्वेषौ परिवर्जयेत् परित्यजेदित्यर्थः । एवं च योगीन्द्रियव्यापारस्य लोकोत्तरत्वात् अनुग्रहकरत्वमिति भावः ॥

---

[1] विशेषतः इति (क) अयमेव व्याख्यानुगुणः इति भाति ।

[2] सर्वत्र नेदमन्वेति । उदासीनेषु दृष्टेष्वपि तथाविधस्य भावस्य अनुदयात् ।

1130 [इन्द्रियाणां बहिर्वृत्तिनिरसनावश्यकता]

इन्द्रियाणां बहिर्वृत्तिः प्रपञ्चस्य प्रकाशिनी ।
अन्तः शिवे समावेशः निष्प्रपञ्चस्य कारणम् ॥[1]

1131 [अन्तर्वृत्त्युन्मुखत्वावश्यकता फलं च]

क्षणमन्तः शिवं पश्यन् केवलेनैव चेतसा ।
बाह्यार्थानामनुभवं क्षणं कुर्वन् दृगादिभिः ॥

सर्वेन्द्रियनिरूढोऽपि सर्वेन्द्रियविहीनवान् ।
शिवाहितमना योगी शिवं पश्यति नापरम् ॥[2]

---

स्पष्टम् ॥

एवं स्थिते—

अन्तः अन्तर्मुखः सन् केवलेन चेतसा बाह्येन्द्रियसङ्गरहितेन चित्तेन क्षणं शिवं पश्यन् दृगादिभिः चक्षुरादिबाह्येन्द्रियैः बाह्यार्थानां शब्दादि-बाह्यविषयाणां अनुभवं क्षणं कुर्वन् शिवाहितमनाः योगी शिवे निवेशितचित्तः-परयोगी सर्वेन्द्रियनिरूढोऽपि सर्वेन्द्रियासक्तोऽपि सर्वेन्द्रियविहीनवान् सन् शिवं पश्यति अन्तर्बहिश्च शिवमेव पश्यति तदन्यं न पश्यतीति तदिन्द्रिय-विवेचनं अनुग्रहकरमिति भावः ॥

---

1 प्रपञ्चरूपविषयात् अन्तः प्रतिनिवर्तनेन एवं भावात् इति भावः ।

2 चक्षुःपुरोभागे आगतमपि 'अन्यत्र मनाः अभूवं नापश्यम्' इतिवद् 'ति भावः ।

[शिवयोगिनः लोकानुग्रहप्रकाशः]

न जरा, मरणं नास्ति न पिपासा, न च क्षुधा ।
शिवाहितेन्द्रियस्यास्य निर्मानस्य महात्मनः ॥

---

नन्वेवं अन्तर्बहिश्च शिवं पश्यतः शिवयोगिनोऽपि प्राकृतजनवत् जरामरणादिदर्शनात् कथ लोकानुग्राहकत्वम्? इत्यत्राह—

शिवाहितेन्द्रियस्य शिवनिवेशितेन्द्रियव्यापारवतः[1] निर्मानस्य देहाद्यभिमानशून्यस्य महात्मनः महापुरुषस्य अस्य शिवयोगिनः जरामरणं नास्ति, तयोः शरीरधर्मत्वात्; क्षुत्पिपासे च न स्तः, तयोः प्राणधर्मत्वात् इति ।।[2]

1133 [तस्य मनोमारुतनिग्रहविधिः]

अथ—

"सर्वेषु गात्रेषु शिरः प्रधानं
सर्वेन्द्रियाणां नयनं प्रधानम् ।"
"इन्द्रियाणां मनो नाथः
मनोनाथस्तु मारुतः ।।"

इति पुराणवचनानुसारेण सर्वेन्द्रियव्यापारकारणीभूतमनोमारुतनिग्रहं सूत्रत्रयेण प्रकाशयति—

---

1 तमेव निर्मलेन मनसा ध्यायतः इति भावः ।

2 नास्तिकस्याप्येवमेव स्थितिः, परंतु यथावस्थितभावना आस्ति कस्येति विशेषः ।

मनो यत्र प्रवर्तेत तत्र सर्वेन्द्रियस्थितिः ।
शिवे मनसि सल्लीने क्व चेन्द्रियविचारणा ॥

1134

यद्यत् पश्यन् दृशा योगी मनसा चिन्तयत्यपि ।
तत्तत्सर्वं शिवाकारं संविद्रूपं प्रकाशते ॥

1135 [तस्यप्राणनिग्रहप्रकारः]

करणैः सहितं प्राणं मनस्याधाय संयमी ।
योजयेत् स शिवः साक्षात् यत्र नास्ति जगद्भ्रमः ॥

---

यत्र मनस्स्थितिः[1] सर्वेन्द्रियस्थितिः मनसि शिवे सल्लीने[2] सति इन्द्रियविचारणा इन्द्रियव्यापारः क्व नास्तीत्यर्थः ॥

योगी शिवयोगी दृशा यद्यत् पश्यति मनसा चिन्तयति तत्तत् सर्वं चिद्रूपं शिवाकारं सत् प्रकाशते मनुते[3] इत्यर्थः ॥ अनेन अन्तर्बाह्येन्द्रियनिग्रहप्रकारः दर्शितः ॥

करणैः नेत्रादिकरणैः सहितं प्राणं प्राणवायुं मनसि आधाय संस्थाप्य यः संयमी शिवयोगी यत्र ब्रह्मणि योजयेत् नेत्रादिकरणानां मन एव प्राणरूपं मनो वायुरूपं वेगवत्त्वात् । लोके क्वचिल्लक्ष्ये नेत्र

---

1 मगसः भलोचनातरङ्गः ।

2 वस्तुतः लीनेसति ।

3 प्रतिवरत्तु तध्मूलरूपस्मरणस्म एतादृश एवहि परिणाम इति भाव ।

1136 [निगमनम्]

सर्वेन्द्रियप्रवृत्त्या च[1] बहिरन्तः शिवं यजन् ।
[2]स्वच्छन्दचारी सर्वत्र सुखी भवति संयमी ॥

इति लिङ्गस्थलगतभक्तस्थलं सप्तमं समाप्तम् ॥

(64) इति इन्द्रियानुग्रहस्थलम् (9-2)

---

अचञ्चलं चेत् प्राणवायुनिरोधद्वारा मनोलयस्य अनुभूयमानत्वाच्च त्रयाणां ऐक्यात् सामरस्येन संयोजयेत्, सः साक्षात् शिव एव, तस्य जगद्भ्रमः विश्वभेदभ्रान्तिः नास्ति, चित्तवृत्तिः ब्रह्मणि लीना चेत् बाह्येन्द्रियव्यापारो निवर्तते, तदभावात् विश्वभेदभ्रान्तिः नास्तीत्यर्थः ॥[3]

अथ इन्द्रियानुग्रहस्थलं समापयति—

संयमी शिवयोगी सर्वेन्द्रियप्रवृत्त्या च अन्तर्बाह्येन्द्रियप्रवर्तनेन शिवं इष्टप्राणरूपं शिवलिंङ्गं यजन् सर्वत्र स्वेच्छा[4]चारी भूत्वा सुखी भवति सुखमनुभवन् आस्ते इत्यर्थः ॥

—०— —

---

[1] प्रतिवस्तु तत्तन्मूलवस्तुसरणेनैवसाकं भानादिति भावः ।

[2] प्रवृत्त्या वै (ख)

[3] अत्र स्वपदस्य आत्मपरत्वे एव सहजसौन्दर्यम् ।

[4] शिवसङ्कल्पानुसाराचरणवान् इति भावः ।

## (65) अथ प्रसादिस्थले प्राणानुग्रहस्थलम् (9-3)

1138 [प्राणानुग्रहपदार्थः]

शिवस्य परकायस्य यत् तात्पर्यावलोकनम् ।[1]
तत्प्राणानुग्रहः प्रोक्तः सर्वेषां तत्त्वदर्शिभिः ॥

1139 [तदङ्गतात्पर्यावलोकनस्वरूपम् ]

प्राणो यस्य लयं याति शिवे परमकारणे ।
कुतस्तस्येन्द्रियस्फूर्तिः ? कुतः संसारदर्शनम् ॥

---

1137 [प्राणानुग्रहस्थलनिरूपणम् ]

अथ —

"प्राणान् प्रपीड्येह सुयुक्तचेष्टः
क्षीणे प्राणे नासिकयोच्छ्वसीत ॥"

इति श्वेताश्वतरश्रुत्यसारेण इन्द्रियानुग्रहसम्पन्नस्य शिवयोगिनः तात्पर्याव-लोकनमेव[1] सर्वेषां प्राणानुग्रहस्थलं निरूपयति—

परकायस्य इन्द्रियानुग्रहसम्पन्नस्य परब्रह्मकायस्य शिवस्य शिव-योगिनः यत् तात्पर्यावलोकनं प्राणवायुनिरोधेन यत् तात्पर्यावलोकनमस्ति तत् सर्वेषां प्राणानुग्रहः इति तत्त्वदर्शिभिः तत्त्वज्ञानिभिः प्रोक्तः इत्यर्थः ॥

अथ तत् तात्पर्यावलोकनं कीदृशम् इत्यत्राह—

यस्य शिवयोगिनः प्राणः प्राणवायुः परमकारणे शिवे

---

1 लं कनमेवेति (ग)

2 तात्पर्यं तत्परत्वम् ।

1140

करणेषु निवृत्तेषु स्वार्थसङ्गात् प्रयत्नतः ।
तैः समं प्राणमारोप्य स्वान्ते शान्तमतिः स्वयम् ॥

1141

शान्तत्वात् प्राणवृत्तीनां मनः शाम्यति वृत्तिभिः ।
तच्छान्तौ योगिनां किञ्चित् शिवादन्यन्न दृश्यते ॥

---

ब्रह्मादिकारणेशानामपि कारणीभूते परशिवे लयं याति, तस्य शिवयोगिनः इन्द्रियव्यापारः कुतः ? नास्तीत्यर्थः । एवं च [1]निष्प्रपञ्चशिवलिङ्गदर्शन तत्तात्पर्यावलोकनमिति भावः ॥

अथ तत् कथम् ? इत्यत्राह—

केवलकुम्भकेन शिवे प्राणवायौ लयं गते सति, करणेषु चक्षुरादि-करणेषु[2] स्वार्थसङ्गात् शब्दादिस्वविषयसम्बन्धात् प्रयत्नतः स्वयमेव निवृत्तेषु सत्सु स्वान्ते मनसि तैः इन्द्रियैः समं प्राणमारोप्य[3] संयोज्य शान्तमतिः रागद्वेषरहितः स्यात् ॥

---

[1] प्रपञ्चातीतेति यावत् ।
[2] करणेषु = इन्द्रियेषु ।
[3] शिवयोगरहस्यज्ञानां इदं सुलभं स्यात् इति भावः ।

1142 [योगिनो देहधारणप्रकारः]

प्राण एव मनुष्याणां देहधारणकारणम् ।
तदाधारः शिवः प्रोक्तः सर्वकारणकारणम् ॥

1143

निराधारः शिवः साक्षात् प्राणस्तेन प्रतिष्ठितः ।
तदाधारा तनुः ज्ञेया जीवो येनैव चेष्टते ॥

---

एवं स्थिते प्राणवृत्तीनां रेचकपूरकरूपप्राणवृत्तीनां शान्तत्वात् केवलकुम्भकेन निवृत्तत्वात् मनोवृत्तिभिः सङ्कल्पविकल्परूपवृत्तिभिः समं शाम्यति । तच्छान्तौ सत्यां योगिनां शिवादन्यत् न किञ्चिदपि दृश्यते इत्यर्थः ॥[1]

अथ अत्र शङ्कां सूत्रद्वयेनोद्भाव्य तृतीयेन निराकरोति—

तदाधारः प्राणाधार इत्यर्थः ।[2] प्राणेनैव 'जीवः चेष्टते' इति सर्वसम्मतत्वेन शिवे तस्य प्राणस्य लीनत्वात् देहः कथं तिष्ठति ? इति शङ्का । अस्योत्तरम्—

स्पष्टम् ॥

---

1 मनोलयस्यैव योगमार्गप्रधानलक्ष्यत्वादिति भावः ।

2 तदाधारा शिवाधारा इत्यर्थः । (ख)

शिवे प्राणो विलीनोऽपि योगिनो योगमार्गतः ।
स्वशक्तिवासनायोगात् धारयन्त्येव विग्रहम् ।।

1144 [योगिजीवनस्वरूपम्]

स चाभ्यासवशाद्भूयः सर्वतत्त्वातिवर्तिनि ।
निष्कलङ्के निराकारे निरस्ताशेषविप्लवे ॥

1145

चिद्विलासपरिस्फूर्ति परिपूर्णसुखाद्वये ।
शिवे विलीनः सर्वात्मा योगी चलति न क्वचित् ॥

---

योगिनः शिवयोगिनः योगमार्गतः केवलकुम्भकरूपयोगमार्गात् प्राणः शिवे विलीनोऽपि लयं गतोऽपि स्वशक्तिवासनायोगात् निजशक्ति[1] संस्कारबलात् विग्रहं शरीरं धारयत्येवेत्यर्थः ॥

तर्हि सः कथं तिष्ठति ? इत्यत्र सूत्रद्वयेन कथयति—

स च जीवात्माश्रयीभूतप्राणवायुः भूयोऽभ्यासवशात् सर्वतत्त्वातिवर्तिनि भूम्यादिशिवान्ततत्त्वोपरिवर्तिनि निष्कलङ्के जरामरणादिदोषरहिते निराकारे अतएव प्राकृतनीलपीताद्याकाररहिते निरस्ताशेषविक्लबे निरस्त समस्तबाधे ॥[2]

चिद्विलासबाहुल्येन परिपूर्णसुखाद्वये परिपूर्णानन्दस्वरूपेण

---

[1] निजशक्तिरूप (ख)
[2] इदं च 'विलीनः' इत्युत्तरश्लोकान्वयि ।

1146 [योगिनः स्थाणुवद्भानहेतुः]

प्रध्वस्तवासनासङ्गात् प्राणवृत्तिपरिक्षयात् ।
शिवैकभूतसर्वात्मा स्थाणुवद्भाति संयमी ॥

—o—

(65) इति ज्ञानागमस्थलम् (9–3)

---

द्वितीयशून्ये परमशिवे विलीनसर्वात्मा लयीभूतसर्वव्यापारवान् योगी शिवयोगी क्वचित् कुत्रचित् कदाऽपि न चलति नस्पन्दते इत्यर्थः ॥

अथ किमिव न चलति ?[1] इत्यत्राह—

संयमी शिवयोगीश्वरः प्रध्वस्तवासनासङ्गात् विनष्टविषयवासनासम्पर्कात् प्राणवृत्तिक्षयात् प्राकृतदैकृतरूपप्राणव्यापारनाशनात् शिवैकीभूतसर्वात्मा शिवलिङ्गैकरसीभूत सर्वेन्द्रियव्यापारवान् सन् [2]स्थाणुवत् काष्ठवत् निश्चलत्वेन भाति इत्यर्थः ॥

---

[1] निश्चलस्यापत्त्यनन्तरं किमिव भवतीत्यर्थः ।

[2] छिन्नशिरोभागः शाखादिहीनः वृक्षः स्थाणुपदेनोच्यते ।

## (66) अथ प्रसादिस्थले कायार्पितस्थलम् (9-4)

1148 [कायार्पितपदार्थः]

शिवस्य पररूपस्य सर्वानुग्राहिणोऽर्चने ।
त्यागो देहाभिमानस्य कायार्पितमुदाहृतम् ।

---

1147 कायार्पितस्थलनिरूपणम् ]

अथ—

"यदा शिवाय स्वात्मानं दत्तवान् देशिकात्मने ।
तदा शैवो भवेद्देवि ! न ततोऽस्ति पुनर्भवः ॥

इति योगजागमवचनानुसारेण प्राणानुग्रहसम्पन्नस्य योग्यं [1]कायार्पितस्थलं निरूपयति—

सर्वानुग्राहिणः सर्वानुग्राहकस्य पररूपस्य परब्रह्मकायस्य प्राणानुग्रहसम्पन्नस्य परयोगिनः शिवस्य अर्चने शिवलिङ्गपूजाविषये देहाभिमानस्य त्यागः कायार्पितमित्युदाहृतमित्यर्थः ॥

1149 [कायार्पणोपयोगः]

अथ किमनेन भवति ? इत्यत्राह—

---

[1] क्रियारूपेण निर्वर्तयितुमर्हम् ।

यदा योगी निजं देहं शिवाय विनिवेदयेत् ।[1]
तदा भवति तद्रूपं शिवरूपं न संशयः ।।

1150 [कायेन सहार्पणीयाः अन्येऽपि अंशाः]

इन्द्रियप्रीतिहेतूनि विषयासङ्गजानि च ।[2]
सुखानि सुखचिद्रूपे शिवयोगी निवेदयेत् ।।

1151 [तत्प्रकारः]

दर्शनात् स्पर्शनात् मुक्तेः श्रवणात् घ्राणनादपि ।
विषयेभ्यो यदुत्पन्नं शिवे तत्सुखमर्पयेत् ।।

---

तद्रूपं योगिनः स्वरूपम् । शिवरूपं भवतीत्यर्थः । शिष्टं स्पष्टम् ।।

ननु देहमात्रं समर्पणीयं वा ? यदन्यत् किञ्चित् अस्ति वा ! इत्यत्राह—

इन्द्रियप्रीतिकारणीभूतविषयसम्बन्धोपपन्नसुखं चिदानन्दरूपे शिवे निवेदयेत् इत्यर्थः ।।

अथ तत् कथम् ? इत्यत्राह—

विषयेभ्यः एतद्व्यतिरिक्तवस्त्राभरणादिविषयेभ्यः इत्यर्थः । शिष्टं स्पष्टम् ।।

---

1 समर्पयेदित्यर्थः ।

2 आसङ्गः=प्रीत्या सम्बन्धः ।

1152 [निगमनम्]

देहद्वारेण यद्यत् स्यात् सुखं प्रासङ्गमात्मनः ।[1]
तत्तन्निवेदयन् शम्भोः योगी भवति निर्मलः ॥

(66) इति कायार्पितस्थलम् (9–4)

(67) अथ प्रसादिस्थले करणार्पितस्थलम् (9–5)

---

अथ देहद्वारेण यद्यत् सुखं प्राप्तम्, तत् सर्वं शिवलिङ्गाय समर्पणीयम् इति वदन् कायार्पितस्थलं समापयति—

देहद्वारेण देहसम्बद्धदशेन्द्रियद्वारेण यद्यत् सुखं स्वस्य प्रासङ्गं प्रसक्तम् स्यात्, तत्तत् सुखं शम्भोः शिवलिङ्गस्य निवेदयन् समर्पयन् सन् योगी शिवयोगी निर्मलः निर्लेपः सन् चरति सञ्चरतीत्यर्थः। कायिक-सुखसमर्पणमेव कायार्पणमिति भावः।

1153 [करणार्पितस्थलनिरूपणम्]

अथ—

"यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥"

[1] आसमन्तात् सक्तिरेव आसङ्गः इति भावः। प्रशब्दश्च प्रकर्षार्थकः।

1154 [करणार्पितपदार्थः]

आसञ्जनं समस्तानां करणानां परात्परे ।
शिवे यत् तदिदं प्रोक्तम् करणार्पितमागमे ॥

1155 [करणार्पकस्वरूपम्]

यद्यत् करणमालम्ब्य भुङ्क्ते विषयजं सुखम् ।
तत्तच्छिवे समर्प्यैषः करणार्पक उच्यते ॥

---

इति कठवल्लीश्रुत्यनुसारेण कायार्पितसम्पन्नस्य करणार्पितस्थलं निरूपयति—

परात्परे विश्वस्मादुत्कृष्टपरशक्त्यपेक्षया उत्कृष्टे शिवे शिवलिङ्गे समस्तानां अन्तर्बाह्यवर्तिनां करणानां यत् आसञ्जनं संयोजनकर्तृत्वमस्ति, तदिदं करणार्पितमिति आगमे वीरशैवसिद्धान्ते प्रोक्तं कथितमित्यर्थः ॥

अथ करणार्पकं कथयति—

यत् करणं[1] अवलम्ब्य विषयजं सुखं यद्भुङ्क्ते[2] तत्करणसम्बद्धं तद्विषयसुखं शिवलिङ्गे समर्प्य, एषः कायार्पितसम्पन्नः करणार्पकः इत्युच्यते इत्यर्थः ॥

1156 [अर्पणप्रकारः]

अथ तत्प्रकारं [3]पञ्चभिः सूत्रैः प्रतिपादयति—

---

[1] करणं=इन्द्रियजन्यव्यापारविशेषम् ।

[2] भुंक्ते=अनुभवतीत्यर्थः ।

[3] करणार्पणप्रकारम् ।

अहङ्कारमदोद्रिक्तं अन्तःकरणवारणम् ।
बध्नीयात् यः शिवालाने स धीरः सर्वसिद्धिमान् ॥

1157 [करणाधिपस्य धीरत्वम् ]

इन्द्रियाणां समस्तानां मनः प्रथममुच्यते ।
वशीकृते शिवे तस्मिन्[1] किमन्यैः तद्वशानुगैः ॥

1158

इन्द्रियाणां वशीकारः निवृत्तिरिति गीयते ।
लक्ष्यीकृते शिवे तेषां कुतः संसारगाहनम् ॥

---

अहङ्कारममकाररूपोर्ध्वाधोमदमत्तमनोबुद्धिचित्तलक्षणान्तःकरणगजं यः शिवालाने शिवलिङ्गरूपबन्धनस्तम्भे बध्नीयात् सः सर्वसिद्धिमान् धीरः ॥

ननु इन्द्रियाणां बाहुल्यात् मनोमात्रबन्धनेन कथं धीरत्वम् ? इत्यत्राह—इन्द्रियाणामिति—

प्रथमं कारणमित्यर्थः ।

"इन्द्रियाणां मनो नाथः"[2]

इति श्रुतेः । शिष्टं स्पष्टम् ॥

ननु एतावता किम् ? इत्यत्राह—

"इन्द्रियवशीकरणमेव निवृत्तिः" इति विद्वद्भिः गीयते । तेषां

---

[1] तस्मिन् मनसि शिवविषये वशतां प्राप्तवति सतीत्यर्थः ।

[2] मनसि मुकुलिते तत्परित्यज्य इन्द्रियाणां स्वतः प्रवृत्तिनिवृत्त्यादिकार्यकारित्वाभावादिति भावः ।

1159 [तस्य संसारनिवृत्तिप्रकारः]

संसारविषकान्तार[1] समुच्छेदकुठारिका ।
उपशान्तिर्भवेत् पुंसां इन्द्रियाणां वशीकृतौ ॥

1160 [तस्य कर्मबन्धनिवृत्तिप्रकारः]

इन्द्रियैरेव जायन्ते पापानि सुकृतानि च ।
तेषां समर्पणादीशे[2] कुतः कर्मनिबन्धनम् ॥

1161 [सर्वसमर्पकयोगिस्वरूपम्]

प्रकाशमाने चिद्व्योम्नि बहिरन्तर्जगन्मये ।
समर्प्य विषयान् सर्वान् मुक्तवत् जायते जनः ॥

---

इन्द्रियाणां शिवलिङ्गे लक्षीकृते[3] सति संसारनिमज्जनं कुतः ? नास्तीत्यर्थः ॥

ननु इन्द्रियवशीकारमात्रेण कथं संसारनिवृत्तिः ? इत्यत्राह—

उपशान्तिः निरपेक्षेत्यर्थः । शिष्टं स्पष्टम् ॥

ननु निरपेक्षामात्रेण कथं कर्मबन्धनिवृत्तिः ? इत्यत्राह—

स्पष्टम् ॥

ननु शिवार्पितपदार्थैः अभिवृद्धिश्रवणात् शिवे पुण्यपापसमर्पणेन तदभिवृद्धिः कस्मान्न भवति ? इत्यत्राह—

---

1 विषवृक्षमयकाननेत्यर्थः ।
2 ईश्वरे सम्यगर्पणात् इति भावः ।
3 अन्तरिन्द्रियविषयीकृते इति यावत् ।

1162 [समर्पणसाधनस्वरूपम् ]

चित्तद्रव्यं समादाय जगज्ज्ञानं महाहविः ।
चिद्वह्नौ जुह्वतामन्तः कुतः संसारविप्लवः ॥

1163 [तादृशसमर्पकस्य ज्योतिर्मयत्वम् ]

आत्मज्योतिषि चिद्रूपे प्राणवायुनिबोधिते ।
जुह्वन् समस्तविषयान्[1] तन्मयो भवति ध्रुवम् ॥

---

वह्निक्षिप्तपदार्थानां नाशदर्शनात्[2] बहिरन्तर्भासमाने विश्वरूपे चिदग्निरूपशिवलिङ्गे समर्पितानां पदार्थानामपि नाशः अवश्यमङ्गीकरणीयः इति अभिवृद्ध्यभावात् ।[3] समस्तविषयान् तत्र समर्प्य जनः [4]जननमरणपरिपीडितो देही मुक्तवत् जायते इत्यर्थः ॥

ननु वह्निसमर्पणस्य होमरूपत्वात् किं तत्साधनम्? इत्यत्राह—

जगतः पञ्चतन्मात्ररूपत्वेन शब्दादिविषयरूपं हविः चित्तद्रव्यं सङ्गृह्य अन्तः हृदयकमलस्थचिद्वह्नौ जुह्वतां[5] शिवयोगिनां संसारबाधः कुतः? नास्तीत्यर्थः ॥

ननु एवंरूपविश्वहवनेन मुक्तवज्जायमानो जनः कीदृग्रूपः? इत्यत्राह—

प्राणवायुप्रकाशिते चिद्रूपे आत्मज्योतिषि शिवाग्नौ तत्तत्करणजन्य

---

[1] भावतः इति शेषः ।

[2] णश अदर्शने इतिधातोः प्रत्येकत्वेन दर्शनाभावस्यैव धात्वर्थत्वादिति भावः ।

[3] लयस्वरूपत्वात् नाशस्य ।

[4] प्रथमं इत्यादिः ।

[5] होमं कुर्वताम् ।

1164 [ऐन्द्रियिकसुखानां शिवसमर्पणयोग्यत्वम् ]

इन्द्रियाणि समस्तानि शरीरं भोगसाधनम् ।
शिवपूजाङ्गभावेन भावयन् मुक्तिमाप्नुयात् ॥

(67) इति करणार्पितस्थलम् (9-5)

---

सुखादिविषयान् जुह्वन्[1] अर्पयन् शिवयोगी तन्मयः चिन्मयशिवस्वरूपः एव भवति जायते ध्रुवं निश्चयः ॥

ननु करणानां प्राकृतत्वेन कथं तज्जन्यसुखादि शिवसमर्पणयोग्यम्? इत्यत्राह—

शरीरादीनां शिवपूजाङ्गत्वात् तज्जन्यसुखाद्यपि शिवसमर्पणयोग्यमेवेत्यर्थः। इदं करणार्पणं कायार्पणस्थले प्रसङ्गात् उक्तमिति न पौनरुक्त्यम् ॥

---

[1] संयुक्तीकरणेन ऐक्यापादनस्यैवहोमपदार्थत्वात् इति भावः ।

## (68) अथ प्रसादिस्थले भावार्पितस्थलम् (9-6)

1166

शिवे निश्चलभावेन भावानां यत् समर्पणम् ।
[1]भावार्पितमिदं प्रोक्तं शिवसद्भाववेदिभिः ॥

---

1165 [भावार्पितस्थलनिरूपणम् ]

अथ—

"तस्मात् प्रपञ्चसम्बन्ध[2]भावं हित्वा शिवात्मकम् ।
भावमाश्रित्य यत्नेन कुर्यात् व्यापृतिमीश्वरे ॥"

इति योगजागमवचनानुसारेण करणार्पित सम्पन्नस्य शिवयोगिनः विधीयमानं भावार्पणं निरूपयति--

शिवे शिवलिङ्गविषये । निश्चलभावेन स्थिरभावेन भावानां यत् समर्पणम् तदिदं भावार्पितमिति शिवसद्भाववेदिभिः प्रोक्तमित्यर्थः ॥

अथ को नाम भावः ? इत्यत्राह--

---

[1] अर्पितमिति भावे क्तप्रत्ययः ।
[2] सम्बद्धं (ग)

1167 [भावपदार्थः]

चित्तस्थसकलार्थानां मननं यत्तु मानसे ।
तदर्पणं शिवे साक्षात् मानसो भाव उच्यते ॥

1168 [भावशुद्धिमहिमा]

भाव एव हि जन्तूनां कारणं बन्धमोक्षयोः ।
भावशुद्धौ भवेन्मुक्तिः [1]विपरीते तु संसृतिः ॥

1169 [भावशुद्धिस्वरूपम्]

भावस्य शुद्धिराख्याता शिवोऽहमिति योजना ।[2]
[3]विपरीतसमायोगे कुतो दुःखनिवर्तनम् ॥

---

मानसः मनोविकारः भावः भाव इत्युच्यते ।

"विकारो मानसो भावः"

इत्यमरः । मानसे मनोविकारे भावे चित्तस्थसकलपदार्थानां चित्तनिष्ठसकलपदार्थानां यत् मननं अनुभवरूपचिन्तनं यदस्ति, तत् साक्षात् प्रत्यक्षीभूते शिवे शिवलिङ्गे अर्पणं अर्पितमित्युच्यते इत्यर्थः ॥

अथ तत् भावस्वरूपं पञ्चभिः सूत्रैः विशेषयति ।

स्पष्टम् ॥

अथ का नाम भावशुद्धिः ? इत्यत्राह—

"शिवोऽहम्" इति स्वस्वरूपानुभवयोगः एव भावस्य शुद्धिः इति

---

[1] भावशुद्धेरभावे इत्यर्थः ।

[2] योचना (ख) पाठद्वयं च सदर्थकमेव ।

[3] तद्विरुद्धभावसत्तायां इत्यर्थः ।

1170 [विश्वभावनाप्रकारः]

भोक्ता भोग्यं भोजयिता सर्वमेतच्चराचरम् ।
भावयन् शिवरूपेण शिवो भवति वस्तुतः ॥[3]

1171 [तत्रैव मतान्तरम्]

मिथ्येति भावयन् विश्वं विश्वातीतं शिवं स्मरन्
सत्तानन्दचिदाकारं कथं बद्धुमिहार्हति ?

---

विद्वद्भिः आख्याता ॥ विपरीतसमायोगे "नाहं शिवः" इति विपरीत-योगे सति दुःखनिवर्तनं सांसारिकदुःखनिवृत्तिः[1] कुतः ? नास्तीत्यर्थः ॥

ननु 'इदम्' इति भासमानं विश्वं कथं भावनीयम् ? इत्यत्र—

"भोक्ता भोग्यं प्रेरितारं च मत्वा
सर्वं प्रोक्तं त्रिविधं ब्रह्म[2] चैतत् ॥"

इति श्वेताश्वतरश्रुत्यनुसारेण कथयति—

भोक्ता जीवः, भोग्यं भोगयोग्यं वस्तु, अव्यक्तम्; भोजयिता भोगदः शिवः । चराचरमेतत् सर्वं जगज्जालम् स्वनिजस्वभावभूत चित्क्रियाशक्तिकार्यत्वात् शिवस्वरूपेण भावयन् शिवयोगी वस्तुतः परमार्थतः शिवो भवति[3] इत्यर्थः । अत्र वस्तुतः इत्यनेन अस्य मुख्यपक्षत्वं सूचितम् ॥

अथ पक्षान्तरेण भावनां कथयति—

---

[1] तथाच निवर्तनमिति भावेल्युट् इति ज्ञेयम् ।
[2] ब्रह्ममेतत् (ग)
[3] न तु केवलं भावतः इति भावः ।

1172 [भावनान्तरस्वरूपम्]

सर्वं कर्मार्चनं शम्भोः वचनं तस्य कीर्तनम् ।
इति भावयतो नित्यं कथं स्यात् कर्मबन्धनम् ॥

1173 [निगमनम्]

सर्वेन्द्रियगतं सौख्यं दुःखं वा कर्मसम्भवम् ।[1]
शिवार्थं भावयन् योगी जीवन्मुक्तो भविष्यति ॥

---

विश्वं स्वातिरिक्ताध्यासलक्षणाविद्याकार्यत्वात् मिथ्येति भावयन्, विश्वातीतं विश्वोत्तीर्णं शिवं सत्तानन्दचिदाकारं नित्यपरिपूर्णसच्चिदानन्दस्वरूपं स्मरन् मलमायादिपाशैः बद्धुं कथमिहार्हति ? न केनापि प्रकारेणार्हतीत्यर्थः ॥

अथ भावनान्तरमाह—

क्रियमाणं सर्वं कर्म शम्भोः शिवलिङ्गस्य अर्चनम्, कथ्यमानं सर्वं वचनं तस्य शिवलिङ्गस्य कीर्तनं स्तुतिः, इति नित्यं भावयतः कर्मकृतबन्धनं कथं स्यात् ? न केनापि प्रकारेण भवेदित्यर्थः ।[2]

अथ जीवन्मुक्तिकरीं भावनां कथयन् भावार्पितस्थलं समापयति—

श्रोत्रादिसर्वेन्द्रियगतं सौख्यं सुखं पापकर्मसम्भवं दुःखं शिवार्थं

---

[1] स्वकीयपूर्वप्रबलकर्मशेषानुगुणमिति यावत् ।
[2] सर्वेषामपि स्वार्थपर्यवसायित्वे एव बन्धकत्वश्रवणात् इति भावः ।

(68) इति भावार्पितस्थलम् (9-6)

(69) अथ प्रसादिस्थले शिष्यस्थलम् (9-7)

1175 [शिष्यलक्षणम्]

शासनीयो भवेद्यस्तु परकायेन सर्वदा
तत्प्रसादात्तु मोक्षार्थी स शिष्य इति कीर्तितः ॥

---

शिवलिङ्गार्पितपदार्थत्वेन भावयन् शिवयोगी जीवन्मुक्तः स्यात् इत्यर्थः ॥

1174 [शिष्यस्थलनिरूपणम्]

अथ—

"यथा[1] सिद्धरसस्पर्शात्[2] ताम्रं भवति काञ्चनम् ।
गुरूपदिष्टश्रवणात् शिष्यः तत्त्वमयस्तथा ॥"

इति योगजागमवचनानुसारेण तद्भावार्पितसम्पन्नेन परयोगिना[2] शिक्षणीय-शिष्यस्थलं[3] कथयति—

परकायेन परब्रह्मकायेन भावार्पितसम्पन्नेन शिवयोगिना यः सर्वदा

---

[1] सिद्धरसइति पादरस उच्यते ।
[2] परमयोगिना (ख)
[3] शासनीयत्वमेव शिष्यपदशक्यार्थः इति भावः ।

1176

भावो यस्य स्थिरो नित्यं मनोवाक्कायकर्मभिः ।
गुरौ निजे गुणोदारे स शिष्य इति गीयते ॥

1177 [मुख्यशिष्यलक्षणम् ]

शान्तो दान्तः तपश्शीलः सत्यवाक् समदर्शनः ।
गुरौ शिवे समानस्थः स शिष्याणामिहोत्तमः ॥

---

शासनीयः शिक्षणीयः भवेत् तत्प्रसादात् तद्भावार्पितसम्पन्नस्य प्रसादात् मोक्षार्थी परापरमोक्षापेक्षी सः शिष्यः इति कीर्तितः कथितः इत्यर्थः ॥

अथ प्रकारान्तरेण तल्लक्षणमाह—

यस्य भावः गुणोदारे ज्ञानवैराग्यादिगुणोन्नते निजे गुरौ श्रीगुरौ मनोवाक्कायकर्मभिः ध्यानस्तोत्रपूजारूपकर्मभिः[1] नित्यं स्थिरः दृढः भवेत् सः शिष्यः इति गीयते कथ्यते इत्यर्थः ॥

अथ मुख्यशिष्यलक्षणमाह[2]—

यः शान्तः अन्तरिन्द्रियनिग्रहवान् , दान्तः बाह्येन्द्रियनिग्रहवान् , तपश्शील यमनियमाद्यष्टाङ्गलक्षणतपोयोगनिष्ठः सन् , सत्यवाक् यथार्थवादी सन् , समदर्शनः लोष्टसुवर्णादिषु समानबुद्धिमान् , श्रीगुरौ शिवलिङ्गे च

---

[1] मानसिकं मुख्यं कर्म ध्यानम् । वाचः कर्म तदीयोत्तमगुणगानरूपं स्तोत्रम् । कायकर्म तदुपचारशुश्रूषादिरूपा पूजेति भावः ।

[2] शिष्याणां मुख्यं लक्षणमित्यन्वयः ।

1178 [शिष्याचारनिरूपणम्]

गुरुमेव शिवं पश्येत् शिवमेव गुरुं तथा ।
नैतयोरन्तरं किञ्चित् विजानीयात् विचक्षणः ॥[1]

1179

शिवाचारे शिवध्याने शिवज्ञाने च निर्मले ।
गुरोरादेशमात्रेण परां निष्ठामवाप्नुयात् ॥

1180 [श्रीगुरुकटाक्षमहिमा]

ब्रह्माण्डबुद्बुदोद्भूतं मायासिन्धुं महत्तरम् ।
गुरोः कबळयत्याशु कटाक्षबडबानलः ॥

---

समदर्शनवान् सन् वर्तते ; सः इहलोके शिष्याणां उत्तमः श्रेष्ठः इत्यर्थः ॥

अथ[2] शिष्याचारं सूत्रद्वयेन कथयति—

विचक्षणः शिष्यः इत्यर्थः ॥

निष्ठां विश्वासम् प्राप्नुयात् इत्यर्थः । शिष्टं स्पष्टम् ॥

अथ श्रीगुरुकृपाकटाक्षमहत्त्वं सूत्रद्वयेन कथयति—

ब्रह्माण्डरूपबुद्बुदानां उद्भूतं उद्भवनं यस्मिन् सः ब्रह्माण्डबुद्बुदो-

---

1 अन्तर्धर्मव्यक्तदर्शनवान् इत्यर्थः ।
2 शिष्टाचारं (क)

1181

गुरोः कटाक्षवेधेन शिवो भवति मानवः ।
रसवेधाद्यथा लोहः हेमतां प्रतिपद्यते ॥[1]

1182 [गुर्वाज्ञानुल्लङ्घनविधिः]

न लङ्घयेत् गुरोराज्ञां ज्ञानमेव प्रकाशयन् ।
शिवासक्तेन[2] मनसा सर्वसिद्धिमवाप्नुयात् ॥

1183 [गुरूपदेशवैशिष्ट्यम् ]

शिवादन्यज्जगन्मिथ्या शिवः संवित्स्वरूपकः ।
शिवस्त्वमिति निर्दिष्टः गुरुणा मुक्त एव सः ॥

---

द्भूतः इत्यर्थः । तादृशं महत्तरं मायासिन्धुं गुरोः कटाक्षबडवानलः झटिति कवलयति ग्रसतीत्यर्थः । नेत्रस्य तैजसत्वात् बडबानलत्वेन वर्णनम् ॥[3]

मानवः शिष्यजनः इत्यर्थः । सम्यगावेशः वेधः इत्यर्थः । शिष्टं स्पष्टम् ॥

अथैवं गुरुमहत्त्वज्ञानी गुरोराज्ञां न लङ्घयेत् इत्याह—

शिवासक्तेन शिवध्याननिष्ठेन मनसा, ज्ञानं शिवाद्वैतज्ञानमित्यर्थः । शिष्टं स्पष्टम् ॥

अथ गुरूपदेशरहस्यं सूचयति—

जगत् शिवादन्यत् इति मिथ्या, शिवस्वरूपमेवेत्यर्थः । तत्

---

[1] इदं च सुवर्णशास्त्रे प्रसिद्धम् ।
[2] शिवमयीभूतेनेत्यर्थः ।
[3] वर्णनं कृतम् (ख)

1184 [निगमनम्]

गुरोर्लब्ध्वा महाज्ञानं संसारामयभेषजम् ।
मोदते यः सुखी शान्तः स जीवन्मुक्त एव हि ।

(69) इति शिष्यस्थलम् (9-7)

---

कथम्? इत्यत्राह—शिवः संवित्स्वरूपकः इति विश्वस्य चिदन्तर्गतत्वात्, तरङ्गादिवत् चिन्मयम् । अन्यथा चिद्बाह्यत्वेनास्तीत्यत्र[1] मानाभावात् असदेव स्यादिति भावः । 'शिवस्त्वम्' इति । चिद्रूपत्वादिति भावः ।

"ऐतदात्म्यमिदं सर्वम् तत्सत्यं स आत्मा
तत्त्वमसि श्वेतकेतो ।"

इति छान्दोग्यश्रुतेः, इति यः शिष्यः श्रीगुरुणा उपदिष्टः[2] सः मुक्त एव, जीवन्मुक्त एवेत्यर्थः ॥

अथ शिष्यस्थलं समापयति—

यः शिष्यः गुरोः श्रीगुरोः संसारामयभेषजं भवरोगस्यौषधं महाज्ञानं लब्ध्वा सुखी शिवसुखी सन् मोदते सुखमनुभवन्नास्ते, सः शान्तः रागद्वेषरहितः जीवन्मुक्त एवेति हि प्रसिद्धः इत्यर्थः ॥

---

[1] ऐन्द्रियिकप्रमाणैः दुरधिगमत्वात् सत्ता न प्रमीयेतेति भावः ।
[2] उप-दिशतीति मुख्यार्थविषयत्वे इति भावः ।

## (70) अथ प्रसादिस्थले शुश्रूषुस्थलम् (9-8)

---

1186 [शुश्रूषुपदार्थः]

बोध्यमानः स गुरुणा परकायेन सर्वदा ।
तच्छुश्रूषारतः शिष्यः शुश्रूषुरिति कथ्यते ॥

---

1185 [शुश्रूषुस्थलनिरूपणम्]

अथ—

"तस्मादुपाश्रितात्[1] सम्यक् सहजं प्राप्य सद्गुरोः ।
अनायासेन सततं [2]आत्माभ्यासरतो भवेत् ॥"

इति योगजागमवचनानुसारेण सः शिष्य एव गुरुसेवातत्परः सन् रहस्यार्थजिज्ञासुः शुश्रूषुः इति सूत्रत्रयेण कथयति—

परब्रह्मकायेन श्रीगुरुणा सदा बोध्यमानः सः शिष्यः तच्छुश्रूषारतः तस्मात् श्रोतुमिच्छायां लम्पटः सन् शुश्रूषुरिति कीर्त्यते कथ्यते इत्यर्थः ॥

अथ तत्प्रश्नप्रकारं दर्शयति—

---

1 गुरुसमीपमागत्य शास्त्रोक्तमार्गानुसारेण आश्रयणं कृतवतः इत्यर्थः ।

2 आत्मसाक्षात्कारानुगुणध्यानाभ्यासवतः इत्यर्थः ।

1187 [शिष्यजिज्ञासाप्रकारः]

किं सत्यं ? किं नु वाऽसत्यं ? क आत्मा ? कः परः शिवः ? ।
इति श्रवणसंसक्तः गुरोः शिष्यो विशिष्यते ॥

1088 [तादृशशिष्यस्थानम् ]

श्रुत्वा श्रुत्वा गुरोर्वाक्यं शिवसाक्षात्क्रियावहम् ।[1]
उपशाम्यति यः स्वान्ते स मुक्तिपदमाप्नुयात् ॥

1189 [गुरुवाक्यमहिमा]

न बुध्यति गुरोर्वाक्यं विना शिष्यस्य मानसम् ।
तेजो विना सहस्रांशोः कथं स्फुरति पङ्कजम् ॥?॥

---

सत्यं नित्यं किम् ? असत्यं अनित्यं किम् ? आत्मा जीवः कः ? परः शिवः परमात्मा कः ? इति गुरोः श्रीगुरोः सकाशात् श्रवणसंसक्तः उत्तरवाक्यश्रवणतत्परः शिष्यः शुश्रूषुः शिष्यः विशिष्यते केवलसेवासक्तशिष्यापेक्षया विशिष्यते[2] इत्यर्थः ॥

ननु कथं श्रेष्ठः ? इत्यत्राह—

यः शुश्रूषुः शिष्यः शिवप्रत्यक्षीकरणक्रियाऽऽवहं श्रुतिसंमतोपदेशवाक्यं श्रीगुरोः श्रुत्वा श्रुत्वा असकृदित्यर्थः, स्वान्ते चित्ते उपशाम्यति शान्तो भवति, सः मुक्तिपदं आप्नुयात् लभेतेत्यर्थः ॥

ननु सेवामात्रेण गुरोः मुक्तः किं न स्याच्छिष्यः इत्यत्राह—

---

[1] तादृशक्रियाविशेषहेतु भूतमिति यावत् ।
[2] अधिकांशसंयुक्तो भवतीत्यर्थः ।

1190

सूर्यस्योदयमात्रेण सूर्यकान्तः प्रकाशते ।
गुरोरालोकमात्रेण शिष्यो बोधेन भासते ॥

1192

अद्वैतपरमानन्दप्रबोधैकप्रकाशकम् ।[1]
उपायं श्रृणुयाच्छिष्यः सद्गुरुं प्राप्य साञ्जलिः ॥

---

गुरूपदेशवाक्यं विना शिष्यस्य मानसं हृत्कमलं न बुध्यति न विकसति । तत्र दृष्टान्तः–सहस्रांशोः सूर्यस्य तेजो विना पङ्कजं कथं स्फुरति विकसति ? न कथंचिदपि विकसति, तथेत्यर्थः ॥

पुनश्च दृष्टान्तान्तरमाह—

गुरूपदेशवाक्यात् नालोकमात्रेणेत्यर्थः । शिष्टं स्पष्टम् ॥[2]

1191 [गुरूपसर्पणप्रकारः]

अथ—

"तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः
श्रोत्रियं ब्रह्मनिष्ठम् ॥"

इति मुण्डकश्रुतिवाक्यानुसारेण तच्छ्रवणार्थं गुरूपसर्पणप्रकारमाह—

उपायनपाणिः सद्गुरुमधिगम्य साञ्जलिः मुकुलितकरयुगः सन्

---

[1] गुरोः मुख्यं लक्षणमिदम् ।
[2] इदमेव मीनवत् दृष्टिदीक्षास्वरूपमिति तज्ज्ञाः ।

1193 [गुरुसंनिधौ शिष्यप्रश्नप्रकारः]

किं तत्त्वं परमं ज्ञेयम् ? केन सर्वे प्रतिष्ठिताः ?
कस्य साक्षात्क्रिया मुक्तिः ? कथयेति समासतः ॥

---

अप्रतियोगिपरमानन्दप्रबोधस्य मुख्यतया प्रकाशकं उपायं उपदेशरहस्य-रूपोपायं शिष्यः शृणुयात् प्रश्नपूर्वकं शृणुयादित्यर्थः ॥[1]

अथ प्रश्नप्रकारमुपपादयति—

भो श्रीगुरो ! ज्ञेयं परमं तत्त्वं किम् ? केन वस्तुना सर्वे चराचराः प्रतिष्ठिताः ?[2] कस्य साक्षात्कारेण मुक्तिः भवेत् ? एतत्सर्वं समासतः सङ्ग्रहेण कथय उपदिशेत्यर्थः ॥

1194 [तदा गुरुणा प्रश्नानुरूपाः उपदेश्यांशाः]

अथ—

"तस्मै स विद्वानुपसन्नाय
सम्यक् प्रशान्तचित्ताय
शमान्विताय । येनाक्षरं
पुरुषं वेद सत्यं प्रोवाच
तां तत्त्वतो ब्रह्मविद्याम्" ॥

इति मुण्डकश्रुत्यनुसारेण तत्प्रश्नोत्तरं पञ्चभिः सूत्रैः कथयति—

---

[1] प्रश्नपर्यन्तप्रेरणाभावे अप्रस्तुतत्वापातात् ।
[2] वस्तुसत्तां प्राप्ताः इत्यर्थः ।
[3] एतत्सर्वं ज्ञातुं गुरुरेव शक्त इत्याशयः ।

इति प्रश्ने कृते पूर्वं शिष्येण नियतात्मना ।
ब्रूयात् तत्त्वं गुरुस्तस्मै येन स्यात् संसृतेर्लयः ॥

1195

शिव एव परं तत्त्वं चिदानन्दसदाकृतिः ।
स यथार्थस्तदन्यस्य जगतो नास्ति नित्यता ॥

1196

अयथार्थप्रपञ्चोऽयं प्रतितिष्ठति शङ्करे ।
सदात्मनि यथा शुक्तौ रजतत्वं व्यवस्थितम् ॥

---

नियतात्मना एकाग्रचित्तेनेत्यर्थः[1] । शिष्टं स्पष्टम् ।

अथ कृतप्रश्नस्य क्रमेण उत्तरं वक्ति[2]—

सच्चिदानन्दस्वरूपः शिव एव परं तत्त्वं ज्ञातुं योग्यं परतत्त्वं, स यथार्थः नित्यः इत्यर्थः[3] [1]तदन्यस्य चिद्विजातीयत्वेन भासमानस्य जगतः विष्णवादिविश्वस्य नित्यत्वं शिववत् सनातनत्वं नास्तीत्यर्थः ॥

अथ केन सर्वे प्रतिष्ठिताः? इत्यस्योत्तरमाह—

अयथार्थः अनित्यः इत्यर्थः । तत्र दृष्टान्तः—सदात्मनि ज्ञानकर्मलक्षणोभयेन्द्रियज्ञानगोचरीभूतत्वात् व्यावहारिकसद्रूपे शुक्तौ शुक्तिकाशकले

---

1. आत्मपदं अत्र मनःपरमिति भावः ।
2. उत्तरमाह (ख)
3. वस्तुतः तत्त्वपदशक्यार्थः इति आशयः ।

1197

शिवोऽहमिति भावेन शिवे साक्षात्कृते स्थिरम् ।
मुक्तो भवति संसारात् मोहग्रन्थेर्विभेदतः ॥

1198 [उक्तार्थेषु शिष्यनियोजनम् ]

शिवं भावय चात्मानं शिवादन्यन्न चिन्तय ।
एवं स्थिरे शिवाद्वैते जीवन्मुक्तो भविष्यसि ॥

---

रजतत्वं ज्ञानेन्द्रियमात्रगोचरत्वेन[1] उत्तरक्षणबाध्यमान[2] प्रातीतिकरजतत्वं व्यवस्थितं यथा तिष्ठति तथा सनातने शङ्करे अनित्यप्रपञ्चः तिष्ठतीत्यर्थः ॥

अथ कस्य साक्षात्कारेण मुक्तिः ? इत्यस्य उत्तरमाह—

"शिवोऽहम्" इति भावेन दृढभावेन शिवे प्रत्यक्षीकृते सति विभेदतः विशेषभेदतः संसारात् संसाररूपात् मोहग्रन्थेः अज्ञानग्रन्थेः मुक्तो भवतीत्यर्थः ॥[3]

अथैवं उक्तार्थे शिष्यं नियोजयति—

भो शिष्य ! त्वं आत्मानं त्वां शिवं सन्तं भावय, शिवशिवभक्तयोः आत्मत्वाविशेषादिति भावः । 'इदम्' इति भासमानं विश्वमपि [4]शिवादन्यन्न चिन्तय, शिवस्वभावभूतचित्क्रियान्तर्गतत्वात् जलतरङ्गन्यायेन

---

[1] स्पर्शादिना बाधज्ञानजननात् ।
[2] बाधज्ञाने जाते इत्यर्थः । न त्वन्यथा । तथैव भावानुवृत्तेः ।
[3] ग्रन्थिभेदनं बिना अन्तर्गतज्ञानासंभवात् ।
[4] शिवादत्यन्तभेदेनेति भावः ।

1199 [निगमनम्]

एवं प्रचोदितः शिष्यः गुरुणा गुणशालिना ।
शिवमेव जगत् पश्यन् जीवन्मुक्तोऽभिजायते ॥

—— ——

## (70) इति शुश्रूषुस्थलम् (9-8)

---

शिवस्वरूपमेवेति[1] चिन्तयेत्यर्थः । एवं शिवाद्वैते स्थिरे सति जीवन्मुक्तः जीवन्नपि मुक्तो भविष्यतीत्यर्थः ॥

अथ शुश्रूषुस्थलं समापयति—

एवं अनेन प्रकारेण ज्ञानवैराग्यादिगुणसम्पन्नेन श्रीगुरुणा प्रकर्षेण बोधितः शिष्य जगज्जाले शिवमेव पश्यन् शिवातिरिक्तविद्यामयमित्यपश्यन् शिवस्वभावभूतचित्क्रियाशक्तिमत्वतत् शिवात्मकमेव पश्यन् सन् जीवन्मुक्तोऽभिजायते इत्यर्थः ॥

—— —— ——

---

[1] न हि सागरजलराशेरुत्थिताः तरङ्गाः जलराशेर्भिन्नद्रव्यकाः भवन्ति तद्वद् इत्यर्थः ।

## (71) अथ प्रसादिस्थले सेव्यस्थलम् (9-9)

1201 [सेव्यपदार्थः]

गुरुवाक्यामृतास्वादात् प्राप्तबोधमहाफलः ।[1]
शुश्रूषुरेव सर्वेषां सेव्यत्वात् सेव्य उच्यते ॥

---

1200

अथ—

"भिद्यते हृदयग्रन्थिः
छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि
तस्मिन् दृष्टे परावरे ॥"[2]

इति मुण्डकोपनिषद्वचनानुसारेण,

"दृष्टिः स्थिरा यस्य विनैव दृश्यं
वायुः स्थिरो यस्य विना प्रयत्नम् ।
चित्तं स्थिरं यस्य विनाऽवलम्बं[3]
स एव योगी स गुरुः स सेव्यः ॥"

इति योगजागमवचनानुसारेण च गुरूपदेशसिद्धशुश्रूषुरेव सेव्यः इति तदीयस्थलं निरूपयति—

गुरूपदेशवाक्यरूपामृतरसास्वादेन संप्राप्तशिवाद्वैतज्ञानमहाफलवान्

---

[1] तत्त्वज्ञानरूपं महाफलं प्राप्तं अधिगतं येनेतियावत् ।
[2] परे सर्वेऽपि यद्दृष्ट्या अवराः भवन्ति इति भावः ।
[3] स्वस्वरूपेण स्थितं इत्यर्थः ।

1202 [सेव्यस्य गुरुवत् पूज्यता]

गुरूपदिष्टे विज्ञाने चेतसि स्थिरतां गते ।
साक्षात्कृतशिवः शिष्यः गुरुवत् पूज्यते सदा ॥

1203 [तत्र हेतूपपादनम् ]

ज्ञानादाधिक्यसम्पत्तिः गुरोर्यस्मादुपस्थिता ।
तस्मात् ज्ञानागमात् शिष्यः गुरुवत् पूज्यतां व्रजेत् ॥

1204

शिवोऽहमिति भावस्य नैरन्तर्याद्विशेषतः ।
शिवभावे समुत्पन्ने शिववत् पूज्य एव सः ॥

---

शुश्रूषुरेव सर्वैः सेव्यत्वात् सेव्य इत्युच्यते इत्यर्थः ॥

अथ सेव्य एव गुरुवत् पूजनीयः इति सूत्रत्रयेणाह—

विज्ञाने शिवाद्वैतलक्षणविशेषज्ञाने[1] इत्यर्थः ॥ शिष्टं स्पष्टम् ॥

ननु स सेव्यः पूजनीयोऽस्तु गुरुवत् कस्मात् पूजनीयः ? इत्यत्राह—

श्रीगुरोः यस्मात् ज्ञानात् अधिकसम्पत्तिः उपस्थिता समागता तस्मात् ज्ञानागमात्[2] शिष्यः श्रीगुरुरिव पूज्यतां व्रजेदित्यर्थः ।

अथ हेत्वन्तरमाह—

" शिवोऽहम् " इति भावस्य नैरन्तर्यात् निरवकाशरूपात्

---

1 तथा च विज्ञानपदं कार्यकारणभावबद्धज्ञानपरमिति भावः ।

2 तत्त्वज्ञानसमधिगमात् इत्यर्थः ।

1205 [तस्य ससङ्गत्वेऽपि पूज्यतायां हेतुः]

विषयासक्तचित्तोऽपि विषयासङ्गवर्जितः ।
शिवभावयुतो योगी सेव्यः शिव इवापरः ॥

1206 [निगमनम्]

मुक्तः संशयपाशतः स्थिरमनाः बोधे च मुक्तिप्रदे
मोहं देहभृतां दृशा विघटयन्[1] मूलं महासंसृतेः ॥

---

विशेषात् अभ्यासविशेषात् शिवभावे शिवत्वे समुत्पन्ने स्फुटीभूते सति[2] सः शुश्रूषुः शिववत् पूज्यः एवेत्यर्थः ॥

ननु अस्य[3] ससङ्गत्वात्, शिवस्य असङ्गत्वात् कथं शिववत् पूजनीयः ? इत्यत्राह—

अत्र शिवभावयुतः इति हेतुगर्भविशेषणम् । योगी शुश्रूषुः शिवयोगी विषयनिष्ठचित्तवानपि विषयसङ्गवर्जितः एव,[4] शिवभावदार्ढ्यात् द्वितीयः शिव इव सेव्यः पूजनीयः इत्यर्थः ॥

अथ सेव्यस्थलं समापयति—

संशयपाशतः "अहं शिवो वा ? न वा ?" इति सन्देहपाशतः

---

[1] मीनवत् दृष्टिशक्तियुतः इति भावः ।
[2] स्वात्मनि इति शेषः ।
[3] उत्तमसाधकस्यापि जीवस्य प्रकृतिसङ्गस्य अनिवार्यत्वादिति भावः ।
[4] पुष्करपलाशवत् निर्लिप्तः इत्यर्थः ।

सत्ताऽऽनन्दचिदात्मके निरुपमे
शैवे परस्मिन् पदे
लीनात्मा क्षयितप्रपञ्चविभवः
योगी जनैः सेव्यते ।

इति श्रीमत्षट्स्थलब्रह्मिणा शिवयोगि
नाम्ना रेणुकाचार्येण विरचिते
वीरशैवधर्मनिर्णये सिद्धान्त-
शिखामणौ प्रसादिस्थलाश्रित-
नवलिङ्गप्रसङ्गो नाम
सप्तदशः परिच्छेदः
समाप्तः ॥

---

मुक्तः विमुक्तः मुक्तिप्रदे परापरमुक्तिप्रदे बोधे च शिवाद्वैतज्ञाने च स्थिरमनाः स्थिरचित्तः महासंसृतेः संसारस्य मूलं मूलकारणीभूतं देहभृतां मोहं देहिनां अज्ञानं दृशा कृपादृष्ट्या विघटयन् निवारयन् सच्चिदानन्द-स्वरूपे उपमातीते शैवे परस्मिन् पदे लीनात्मा तदेकलोलीभूत निजस्वरूप-वान् योगी शिवयोगी[1] क्षयितप्रपञ्चविभवः सन् स्वशक्तिलीनीकृतविश्व-प्रपञ्चवैभवः सन् जनैः सेव्यते पूज्यते इत्यर्थः ॥

---

1 सर्वातिशायिदेवताविभवभावनेन प्रापञ्चिकविभवानां अत्यन्त हीनता दर्शनेन तेषु आसक्तिशून्यतावान् इत्यर्थः ।

(71) इति सेव्यस्थलम् (9-9)

(9) इति नवमं प्रसादिस्थलं समाप्तम्

अस्य प्रसादिनः अङ्गत्रयस्य एतत् लिङ्गत्रयं क्रमेण संयोजनीयं इति सम्प्रदायः ॥[1]

इति श्रीमत्पदवाक्यप्रमाण-
पारावारधुरीण श्रीमरितोण्टदार्येण
विरचितायां तत्त्वप्रदीपिकाख्यायाम्
सिद्धान्तशिखामणिव्याख्यायां
प्रसादिस्थलाश्रितनवलिङ्ग-
प्रसङ्गो नाम सप्तदशः
परिच्छेदः समाप्तः ॥

---

1 उपदेशपरम्परया सिद्धोऽयं सम्प्रदायः तत एव ज्ञेयः इति अत्र नं विस्तृतया विवृतः इति भावः ।

॥ श्री शिवाय नमः ॥

# सिद्धान्तशिखामणौ

## अष्टादशः परिच्छेदः

### प्राणलिङ्गिस्थलविषयनवविधलिङ्गप्रसङ्गः ॥

(10) अथ दशमं प्राणलिङ्गिस्थलम् ॥

1207 [प्राणलिङ्गिस्थलनिरूपणम्]

अगस्त्य उवाच—

प्रसादिस्थलसम्बन्धाः स्थलभेदाः प्रकीर्तिताः ।
प्राणलिङ्गिस्थलारूढान्[1] स्थलभेदान् वदस्व मे ॥

1208 [तदवान्तरभेदाः]

रेणुक उवाच—

स्थलानां नवकं प्रोक्तं[2] प्राणलिङ्गिस्थलाश्रितम् ।
आदौ आत्मस्थलं प्रोक्तं अन्तरात्मस्थलं ततः ॥

---

अथ प्राणलिङ्गिस्थलभेदाः कथ्यन्ते—

तत्र अगस्त्यप्रश्नः—

अगस्त्य उवाच—इति ॥

स्थलभेदान् अवान्तरस्थलभेदान् इत्यर्थः । वदस्व उपदिशेत्यर्थः । शिष्टं स्पष्टम् ॥

अथ श्रीरेणुकः तद्भेदं सूत्रत्रयेण निरूपयति—श्रीरेणुक उवाच—

---

1 प्राणलिङ्गिस्थलसम्बद्धानित्यर्थः ।

2 नवकं चात्र (ग)

1209

परमात्मस्थलं पश्चात्[1] निर्देहागमसंज्ञकम् ।
निर्भावागमसंज्ञं च ततो नष्टागमस्थलम् ॥

1210

आदिप्रसादनामाथ ततोऽप्यन्त्यप्रसादकम् ।
सेव्यप्रसादकं चाथ[2] शृणु तेषां च लक्षणम् ॥

---

स्पष्टम् ॥

[१. आत्मस्थलम् ।
२. अन्तरात्मस्थलम् ।
३. परमात्मस्थलम् ।
४. निर्देहागमस्थलम् ।
५. निर्भावागमस्थलम् ।
६. नष्टागमस्थलम् ।
७. आदिप्रसादस्थलम् ।
८. अन्त्यप्रसादस्थलम् ।
९. सेव्यप्रसादस्थलम् ॥

इति ॥]

---

[1] स्थलं चैवं (क)
[2] प्रसादनं चेति (क)

## (72) अथ प्राणलिङ्गिस्थले आत्मस्थलम् (10-1)

1212 [आत्मस्वरूपम् ]

जीवभावं परित्यज्य यदा तत्त्वं विभाव्यते ।
गुरोश्च बोधयोगेन तदात्माऽयं प्रकीर्तितः ॥

---

1211 [तत्र आत्मस्थलनिरूपणम् ]

अथ—

"एष आत्मा अपहतपाप्मा विजरो विमृत्युः विशोकः ।
अविजिघत्सः अपिपासः[1] सत्यकामः सत्यसङ्कल्पः ।"

इति छान्दोग्यश्रुत्यनुसारेण अयं सेव्य एवात्मा इति आत्मस्थलं निरूपयति—

अयं सेव्य एव श्रीगुरोः शिवज्ञानसम्बन्धेन जीवभावं जीवत्वं परित्यज्य यदा परतत्त्वं विभाव्यते तदा आत्मेति परिकीर्तितः इत्यर्थः॥

1213 [जीवस्वरूपस्य विवरणम् ]

अथ कोऽयं जीवः ? इत्यत्र

"वालाग्रशतभागेन शतधा कल्पितेन तु ।
भाग आत्मा स विज्ञेयः स चानन्त्याय कल्पते ॥"[2]

---

1 क्षुत्पिपासाविहीनः स्वरूपेणेत्यर्थः ।

2 कर्मजालमहिम्ना एवं सूक्ष्मरूपः सन्नपि साधनामहिम्ना विभुत्वं प्राप्तः सन् ब्रह्मसारूप्याय कल्पते इति भावः ।

वालाग्रशतभागेन सदृशो हृदयस्थितः ।
अश्नन् कर्मफलं सर्वं आत्मा स्फुरति दीपवत् ॥

---

इति श्वेताश्वतर श्रुत्यनुसारेण जीवस्वरूपं पञ्चभिः सूत्रैः प्रतिपादयति—

वालाग्रेति । केशाग्रशतभागेन सदृशः सन् स्वार्जितकर्मफलं भुञ्जन् सन् हृदये हृदयकमले स्थितः तिष्ठतीत्यर्थः ॥

नन्वेवं चेत् —शरीरैकदेशनिष्ठत्वेन—

" पादे मे वेदना "
" शिरसि सुखम् "

इति सर्वाङ्गीणचैतन्योपलब्धिः कथम् ? इत्याशङ्क्याह—दीपवदिति । दीपस्य गृहैकदेशनिष्ठत्वेऽपि स्वप्रभया सम्पूर्णगृहं व्याप्य तदन्तर्गतसकलवस्तुप्रकाशत्वं यथा तद्वत् जीवस्य शरीरैकदेशनिष्ठत्वेऽपि—

" प्रज्ञया शरीरं समारुह्य "[1]

इति श्रुतेः तद्बुद्धेः व्यापकत्वेन सर्वं शरीरं व्याप्य सर्वाङ्गीणचैतन्यमनुभवन् आत्मा जीवात्मा[2] स्फुरति प्रकाशते इत्यर्थः ॥

1214 [तस्यैवंविधस्वरूपसम्पत्तिहेतुः]

नन्वेवंविधं रूपं जीवस्य स्वाभाविकं किम् ? इत्यत्राह—

---

[1] समारोहः=सम्यक् संबद्ध्य आन्तव्याप्तिः ।
[2] जीवः इत्यर्थः । अस्याः अवस्थायाः आत्मभावात् पूर्वावस्थात्वात् ।

आत्माऽपि सर्वभूतानां अन्तःकरणमाश्रितः ।
अणुभूतो मलासङ्गात्[1] आदिकर्मनियन्त्रितः ।।

1215 [तस्य देहसम्बन्धे हेतुः]

[2]जपायोगाद्यथा रागः स्फटिकस्य मणेर्भवेत् ।
तथाऽहङ्कारसम्बन्धात् आत्मनो देहमानिता ।।

1216 [तदुपपादनम्]

अशरीरोऽपि सर्वत्र व्यापकोऽपि निरञ्जनः ।
आत्मा मायाशरीरस्थः परिभ्रमति संसृतौ ।।

---

सर्वभूतानां पञ्चभूतानां आत्माऽपि परमार्थतो व्यापकत्वाश्रयोऽपि मलासङ्गात् आणवादिमलव्यापनात् अणुभूतः परमाणुवत् अतिसूक्ष्मः सन् आदिकर्मनियन्त्रितः प्राचीनकर्मपाशबद्धः सन् अन्तःकरणमाश्रितः अहङ्कारं आश्रितवान् इत्यर्थः ।।

अथैवं अहङ्कारसम्बन्धात् देहसम्बन्धोऽपि प्राप्तः इत्यत्राह—

परिमिताहङ्कारसम्बन्धात् देहसम्बन्धः प्राप्तः इत्यर्थः । शिष्टं स्पष्टम् ।।

ननु सर्वदोषरहितस्यात्मनः कथं उक्तप्रकारेण शरीरसम्बन्धः ! इत्यत्राह—

परापरमोक्षकारणीभूतशुद्धविद्याशरीरवत्त्वेन अशरीरोऽपि

---

1 मलैः आसङ्गात् आसमन्तात् सम्बन्धात् इत्यर्थः ।
2 जपापदं जपानामककुसुमपरम् ।

1217 [जीवस्य आत्मत्वसम्पत्तिप्रकारः]

आत्मस्वरूपविज्ञानं देहेन्द्रियविभागतः ।
अखण्डब्रह्मरूपेण तदाऽऽत्मप्राप्तिरुच्यते ॥[1]

---

अपरिच्छिन्नत्वात् व्यापकोऽपि दोषरहितत्वात् निरञ्जनोऽपि कलादिक्षितिपर्यन्त त्रिंशत्तत्त्वकारणीभूतस्वकीयाघोमायाशक्तिपरिकल्पितचन्द्रकलाविशिष्टशरीरः सन् संसारे परिभ्रमतीत्यर्थः ॥

अथ एवंरूपजीवस्य आत्मत्वप्राप्तिप्रकारमाह—

देहेन्द्रियविभागतः उक्तलक्षणमायिकप्राकृतसत्त्वादिगुणकार्यरूपशरीरेन्द्रियादिव्यतिरिक्तत्वेन अखण्डब्रह्मरूपेण अपरिच्छिन्नब्रह्मरूपेण आत्मविज्ञानं स्वस्वरूपज्ञानं यदा भवति, तदा आत्मप्राप्तिः[2] आत्मत्वलाभः उच्यते ॥

"आत्मलाभात् न परं विद्यते"
"नेति नेत्यात्मा सङ्गृह्यः"
"अयमात्मा ब्रह्म"

इत्यादिश्रुतेः इत्यर्थः ॥

1218 [ब्रह्मणः एवंरूपप्राप्तौ निमित्तम्]

ननु अपरिच्छिन्नं ब्रह्म परिच्छिन्नशरीरविशिष्टं किमर्थं जातम्? इत्यत्राह—

---

1 अत्रत्यं आत्मपदं भावप्रधानतया निर्दिष्टमिति ज्ञेयम् ।
2 आत्मत्वप्राप्तिः (ख)

नचास्ति देहसम्बन्धः[1] निर्देहस्य स्वभावतः ।
अज्ञानकर्मयोगेन देही भवति भुक्तये ॥

अशरीरस्य परमात्मनः परमार्थतः शरीरसम्बन्धः नास्त्येव। तथापि भुक्तये—

"यथा नृपः सार्वभौमप्रभावामोदबृंहितः ।
क्रीडन् करोति पादातिधर्मं तद्धर्मधर्मितः ॥"

इति शिवदृष्टिशास्त्रोक्तदृष्टान्तेन अखण्डरसास्वादपरिबृंहितोऽपि खण्डरसास्वादनार्थं इच्छायां, अज्ञानकर्मयोगेन स्वातन्त्र्यपरिकल्पिताणवादि-मलसम्बन्धेन देही भवति, घृतकाठिन्यन्यायेन शरीरी भवति। तस्मात् अंशीभूतस्य ज्ञानादिमलसम्बन्धात् नृपे इव "अहं शिवः" इति नार्ततिर्बोध्यम् ॥

1219 [तत्र विविधप्रमाणोपपादनम् ]

अस्मिन् अर्थे—

"स वै नैव रेमे, तस्मात्
एकाकी नैव रमते, स द्वितीय-
मैच्छत् , सहैतावानास ।"
"तत्सृष्ट्वा, तदेवानुप्राविशत् ,
तदनुप्रविश्य, सच्चत्यच्चाभवत् ।"

———

[1] शरीरं विना अस्तित्वाभावः ।

इति श्रुतिः ॥

[1]"विष्टभ्याहमिदं कृत्स्नं
एकांशेन स्थितं जगत् ।"

इति,

"ममैवांशो[2] जीवलोके
जीवभूतः सनातनः"

इति च भगवदुक्तिश्च ॥

1220

शिवस्य निरंशत्वेऽपि स्वतन्त्रत्वात् स्वातन्त्र्यपरिकल्पितांशभवः संभवति वत्सापहरणदृष्टान्तात् ॥[3]

"क्रिया हि कर्मण्येव विश्राम्येत्
न तु कर्तरि"

इति न्यायात् नात्मनो बन्धः ॥

वस्तुतस्तु—

"आत्मा वा इदमेक एवाग्र आसीत्"

इति श्रुतेः,

"कला सप्तदशी देवी[4] स्वान्तर्लीना चराचरा"

इत्यागमोक्तेः,

"इदं पूर्वं जगत्सर्वं प्रलये पारमेश्वरे ।
मायाभिन्ने स्वमायाख्यकारणाभेदरूपतः ॥

---

[1] विष्टभ्य आकाशवत् व्याप्य ।
[2] ममैवांशे (ग)
[3] द्वितीये उपपादितमिदम् ।
[4] षोडशकलः पुरुषः । देवी तु सप्तदशी कलेति भावः ।

1221 [जीवस्य नामसम्पत्तिप्रकारः]

नासौ देवो न गन्धर्वः न यक्षो नैव राक्षसः ।
न मनुष्यो न तिर्यक् च न च स्थावरविग्रहः ॥

---

वर्तते वासनारूपेणैव नाभावरूपतः ।"

इति पाराशरोपपुराणवचनाच्च, "सर्वं विश्वं अण्डरसन्यायेन[1] आत्मसमवेत चित्क्रियासामरस्यलक्षणचिदम्बरशक्तौ तादात्म्येनास्ती"ति परमात्मस्थले वक्ष्यमाणरीत्या, वह्निर्विस्फुलिङ्गानिव स्वतादात्म्यापन्नान् चित्कणान् तत्तत्कर्मानुसारेण सृजति, अवति, संहरति, तिरयते, अनुगृह्णाति चेति न काचित् अनुपपत्तिः ॥

तर्हि असौ जीवः किंनामकः ? इत्यत्राह—

तत्तच्छरीरयोगेन तत्तन्नाम्ना विराजितः इति भावः । शिष्टं स्पष्टम् ॥

1222 [जीवानां शिवक्रीडाभाजनत्वम्]

तर्हि अयं कीदृशः ? इत्यत्र—

"स्वस्वकृतदुष्कर्मणा[2] परमेश्वरप्रेरणया बद्धाः संसारिणो जीवाः" इति वृद्धजाबालश्रुत्यनुसारेण, दृग्युगैक्यावलोकनमिव द्वैताद्वैतसामरस्यात्मनः

---

[1] अयं न्यायः प्रथमे परिच्छेदे प्रतिपादितः ।

[2] सुकृतं दुष्कृतं चेत्युभयमपि संसृतिहेतुत्वात् दुष्कर्मपदेनैव गृह्यते ।

नानाकर्मविपाकाश्च नानायोनिसमाश्रिताः ।
नानायोगसमापन्ना नानाबुद्धिविचेष्टिताः ॥

1223

नानामार्गसमारूढाः नानासङ्कल्पकारिणः ।
अस्वतन्त्राश्च किञ्चिद्ज्ञाः किञ्चित् कर्तृत्वहेतवः ॥

1124

लीलाभाजनतां प्राप्ताः शिवस्य परमात्मनः ।

---

शिवस्य स्वातन्त्र्यपरिकल्पितजीवोपाधिना नानारूपाः सन्तः शिवस्य क्रीडाभाजनरूपाः[1] इत्याह —

नानाविधप्राचीनकर्मविपाकवशात् ,

" देवाः षोडशलक्षाणि "[2]

इत्युदाहृतवचनानुसारेण देवतिर्यङ्मनुष्यादिनानायोनिसमापन्नाः नानाविधस्वर्गभोगोपायचिन्तकाः नानाविधबुद्ध्याक्रान्ताः सन्तः नानाविधवैष्णवादिदर्शनमार्गप्रविष्टाः नानासङ्कल्पकारिणः किञ्चिज्ज्ञाः किञ्चित्कर्तृत्वकारणीभूताः स्वातन्त्र्यशून्याः जीवाः परमात्मनः शिवस्य लीलाभाजनतां गताः क्रीडाभाण्डरूपाः इत्यर्थः ॥

1225 [जीवानां गतिविवरणम् ]

अथ एते किं यान्ति ? इत्यत्राह —

---

1 अत्र क्रीडापदं लीलापरम् ।
लीलार्थस्वीकृततत्तत्पदार्थरूपाः इत्यर्थः ।

2 षोडशलक्षाणीति केवलं उपचारोक्तिः । इतोऽपि अधिकान्येव स्युः ।
अत्र च देवपदं तत्तत्कर्मानुसारेण देहेन्द्रियादिस्वीकारसमर्थचिच्छक्तिपरम् ।

चोदिताः परमेशेन स्वस्वकर्मानुरूपतः ।
स्वर्गं वा नरकं वाऽपि प्राणिनो यान्ति कर्मिणः ॥

1226 [तेषां परिभ्रमणवर्णनम्]

पुनः कर्मविशेषेण जायन्ते गर्भकोटरात् ।
जाता मृताः पुनर्जाताः पुनर्मरणभाजिनः ॥[1]

1227

भ्रमन्ति घोरसंसारे विश्रान्तिकथया विना ।

1228 [जीवपरिभ्रमणस्य गुरूपदेशपरिहार्यता]

जीवत्वं दुःखसर्वस्वं तदिदं मलकल्पितम् ।
निरस्यते गुरोर्बोधात् [2]ज्ञानशक्तिः प्रकाशते ॥

---

स्पष्टम् ॥

अथ स्वर्गनरकयोर्वा तेषां स्थैर्यं अस्ति किम्? इत्यत्राह—

विश्रान्तिकथया विना स्वस्वरूपविश्रान्तिवार्ताव्यतिरेकेणेत्यर्थः । शिष्टं स्पष्टम् ॥

नन्वेवं चेत् संसारचक्रपरिभ्रमणं शाश्वतं किम्? इत्यत्राह—

जीवत्वं आणवादिमलकल्पितं[3] अज्ञानादिमलकल्पितमित्यर्थः ।

---

[1] भागिनः (ख)
[2] यदा इति शेषः ।
[3] इदं सर्वं पूर्वमेवोक्तम् ।

(72) इति इत्यात्मस्थलम् (10-1)

---

(73) अथ प्राणलिङ्गिस्थले अन्तरात्मस्थलम् (10-2)

---

तस्मात् दु:खसर्वस्वं तदिदं दु:खसर्वस्वरूपं जीवत्वं गुरो: बोधात् श्रीगुरूपदिष्टशिवाद्वैतबोधात् निरस्यते निवार्यते, ज्ञानशक्ति:-स्वस्वरूप-ज्ञानसामर्थ्यं प्रकाश्यते इत्यर्थ: ॥

1229 [अन्तरात्मस्थलनिरूपणम्]

अथ—

"सूर्यो यथा सर्वलोकस्य चक्षु:
न लिप्यते चाक्षुषै:[1] बाह्यदोषै: ।
एकस्तथा सर्वभूतान्तरात्मा
न लिप्यते लोकदु:खेन बाह्य: "

इति कठवल्लीश्रुत्यनुसारेण निराकृतजीवभावस्य आत्मन: अन्तरात्मत्वं भवतीति निरूपयति—

---

[1] लौकिकचक्षुस्सामान्यसहजैरित्यर्थ: ।

[2] गुरुभि: विषयस्वरूपस्थित्यनुसारेण उपदेशमनुसृत्य साधनेन परिनिष्पन्नात् ज्ञानादित्यर्थ: ।

1230 [अन्तरात्मभावनिमित्तम्]

यदा निरस्तं जीवत्वं भवेत् गुर्वनुबोधतः ।
तदान्तरात्मभावोऽपि निरस्तस्य भवेत् ध्रुवम् ॥

1231 [अन्तरात्मस्वरूपम्]

देहस्थितोऽप्ययं जीवः देहसङ्गविवर्जितः ।[1]
बोधात्परात्मभावित्वात् अन्तरात्मेति कीर्तितः ॥

1232

आत्माऽन्तरालवर्तित्वात् जीवात्मपरमात्मनोः ।
योगादुभयधर्माणां अन्तरात्मेति कीर्तितः ॥

---

गुर्वनुरोधतः गुरूपदेशात् जीवत्वं जीवभावः यदा निरस्तं भवेत् तदा निरस्तस्य निरस्तजीवभाववतः आत्मनः अन्तरात्मभावः भवेत् स्यात् इति, ध्रुवं निश्चयः इत्यर्थः ॥

अथ अन्तरात्मस्वरूपं सूत्रत्रयेण कथयति—

अयं जीवः देहस्थितोऽपि देहसङ्गरहितः सन् बोधात् स्वस्वरूपज्ञानात् परात्मभावित्वात् परमात्मनः भाववत्त्वात्[2] अन्तरात्मेति कथ्यते इत्यर्थः ॥

अथ प्रकारान्तरेण उपपादयति—

आत्मा निरस्तजीवभाववान् सोऽयः शिष्योपदेशसमये जीवात्मपरमात्मनोः अन्तरालवर्तित्वात् मध्यवर्तित्वादित्यर्थः । तदा शिष्यबुद्धि

---

[1] एवं यदा भवति तदेति भावः ।

[2] जीवभावनिरासानन्तरमिति योज्यम् ।

1233

अहङ्कारस्य सम्बन्धात् मनुष्यत्वादिविभ्रमः ।
न स्वभाव इति ज्ञानात् अन्तरात्मेति कथ्यते ॥

1234 [अन्तरात्मनः शरीरसम्बन्धाभावः]

यथा पद्मपलाशस्य न सङ्गो[5] वारिणा भवेत् ।
तथा देहजुषोऽप्यस्य न शरीरेण सङ्गतिः ॥

---

शिक्षकत्वेन तदन्तर्यामितया शिवधर्मयोगात्, आहारव्याहारादेः[1] विद्यमानत्वेन जीवधर्मयोगात्, एवं उभयधर्माणां योगात् अन्तरात्मेति कीर्तितः इत्यर्थः ॥

अथ प्रकारान्तरेणाह—

परिच्छिन्नस्वरूपाहम्भाववशात् मनुष्यत्वादिविभ्रमः[2] स्यात्, न स्वभावतः इति ज्ञानात् परिच्छिन्नस्वरूपत्वं न स्वाभाविकमिति ज्ञानात् अन्तरात्मेति कथ्यते इत्यर्थः ॥[3]

अथ अस्य[4] शरीरसम्बन्धः अस्ति न वा? इत्यत्र दृष्टान्तपूर्वकं सूत्रत्रयेणाह—

---

1 व्याहारः = व्यवहारः ।
2 विलक्षणः अनिवार्यो भ्रमः ।
3 'इत्यर्थः' इति नास्ति (ख)
4 अस्य = अन्तरात्मनः ।
5 सङ्गः = लिप्तता ।

1235

नीडस्थितो यथा पक्षी नीडाद्भिन्न प्रदृश्यते ।
देहस्थितस्तथाऽऽत्माऽयं देहादन्यः प्रकाश्यते ॥

1236

आच्छाद्यते यथा चन्द्रः मेघैरासङ्गवर्जितैः ।
तथाऽऽत्मा देहसङ्घातैः असङ्गपरिवेष्टितः ॥

1237 [अन्तरात्मदृष्टिवर्णनम्]

निर्ममो निरहङ्कारी निरस्तोपाधिविक्लवः ।[2]
देहस्थोऽपि सदा ह्यात्मा शिवं पश्यति योगतः ॥[3]

---

स्पष्टम् ॥

अथ पुनः दृष्टान्तमाह—

चन्द्रः आसङ्गवर्जितैः स्वस्य सर्वत्र सङ्गरहितैः मेघैः यथा आच्छाद्यते, तथा आत्मा निवृत्तजीवभावः सेव्यः देहसङ्घातैः स्थूलादिदेहसमूहैः असङ्गः सन् परिवेष्टितः इत्यर्थः

तर्हि अयं कं पश्यन् आस्ते - इत्यत्राह—

विक्लवः बाधः । योगः योगसामर्थ्यम् । शिष्टं स्पष्टम् ॥

1238 [अन्तरात्मभावनिमित्तम्]

तर्हि शिवं पश्यन् कुतः तथा भासते? इत्यत्राह—

---

[1] अयं च दृष्टान्तः केवलं आंशिक एव। मेघे सामानधिकरण्यस्यैवा भावात् इति ज्ञेयम् ।

[2] अविक्लवः (ख)

[3] गुरूपदिष्टयोगमार्गमवलम्ब्येत्यर्थः ।

भोक्तृभोज्यपरित्यागात् प्रेरकस्य प्रसादतः ।
भोक्तृताभावगलितः स्फुरत्यात्मा स्वभावतः ॥

1239 [निगमनम्]

सर्वेषां प्रेरकत्वेन शम्भुरन्तः स्थितः सदा ।
तत्परज्ञानयोगेन योगी नन्दति मुक्तवत् ॥

---

(73) इति अन्तरात्मस्थलम् (10-2)

---

भोक्तृभोज्यपरित्यागात् भोक्तृजीवेन[1] भोज्यविषयपरित्यागात् प्रेरकस्य ईश्वरस्य प्रसन्नतावशात् भोक्तृताभावगलितः सन् भोक्तृलक्षण-जीवभावविमुक्तः सन् स्वभावतः जीवेश्वरसाधारणीभूतात्मत्वस्वरूपतः[2] स्फुरति प्रकाशते इत्यर्थः ॥

अथ अन्तरात्मस्थलं समापयति—

स्पष्टम् ॥[3]

---o---

[1] भोक्तृत्वधर्मावलम्बनदशायामिति भावः ।

2 व्यवहारे तु जीवात्मा परमात्मेति उभयत्र आत्मत्वव्यवहारः दृश्यते ।

3 विभक्ताविभक्तभावभेदसवलस्य व्यवहारसमन्वयः इति भावः ।

## (74) अथ प्राणलिङ्गिस्थले परमात्मस्थलम् (10-3)

1241 [परमात्मस्वरूपम् ]

निर्धूते तत्प्रबोधेन मले संसारकारणे ।
सामरस्यात् परात्मस्थात् परमात्माऽयमुच्यते ॥

---

1240 [परमात्मस्थलनिरूपणम् ]

अथ—

" एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम् ।
समस्तसाक्षि सदसद्विहीनं प्रयाति शुद्धं परमात्मरूपम् ॥"

इति [1]कैवल्यश्रुत्यनुसारेण अयं अन्तरात्मैव निर्मलत्वेन परमात्मा इति निरूपयति—

अयं अन्तरात्मा संसारकारणे मले अज्ञाने,[2] तत्प्रबोधेन तच्छिवाद्वैतज्ञानेन निर्धूते सति निवारिते सति परात्मस्थात् सामरस्यात् समरसभावात्[3] परमात्मा इत्युच्यते इत्यर्थः ॥

अथ कोऽयं परमात्मा ? इत्यत्राह—

---

[1] कैवल्यश्रुतिः=कैवल्योपनिषत् ।
[2] अस्य निवारिते इत्यनेनान्वयः ।
[3] अयमेव क्वचित् समीकरणशब्देनाप्युच्यते ।

1242 [शिवस्यपरमात्मत्वम्]

सर्वेषामात्मभेदानां उत्कृष्टत्वात् स्वतेजसा ।
परमात्मा शिवः प्रोक्तः सर्वगोऽपि प्रकाशवान् ॥

1243 [परमात्मलक्षणम्]

ब्रह्माण्डबुद्बुदस्तोमाः[2] [3]यस्य मायामहोदधौ ।
उन्मज्जन्ति निमज्जन्ति परमात्मा स उच्यते ॥

1244

यस्मिन् ज्योतिर्गणाः सर्वे स्फुलिङ्गा इव पावकात् ।
उत्पत्य[4] विलयं यान्ति तद्रूपं परमात्मनः ॥

---

स्वतेजसा निजतेजसा सर्वगोऽपि सर्वव्यापकोऽपि प्रकाशवान् शिवः सर्वेषां आत्मभेदानां उत्कृष्टत्वात् परमात्मा इति प्रोक्तः उच्यते इत्यर्थः ॥

अथ प्रकारान्तरेण तल्लक्षणमाह—

स्पष्टम् ॥

अथ तत्स्वरूपमेव दृष्टान्तपूर्वकं सूत्रत्रयेण कथयति—

यस्मिन् वस्तुनि सर्वे ज्योतिर्गणाः समस्तजीवतेजस्समूहाः वह्नेर्जाताः विस्फुलिङ्गाः इव उत्पत्य विलयं यान्ति तत् परमात्मनः रूपं स्वरूपमित्यर्थः ॥

1245

अथ प्रकारान्तरेणाह—

---

1 प्रकाशतः (क)
2 स्तोमः=राशिः ।
3 यस्य परमात्मनः इत्यर्थः ।
4 उत्पत्य=ऊर्ध्वं प्रसृत्य ।

यस्मिन् समस्तवस्तूनि कल्लोला इव वारिधौ ।
सम्भूय लयमायान्ति तद्रूपं परमात्मनः ॥

1246

निरस्तमलसम्बन्धं निःशेषजगदात्मकम् ।
सर्वतत्त्वोपरि[2] प्रोक्तं स्वरूपं परमात्मनः ॥

1247 [परमात्मप्रकाशवर्णनम् ]

यथा व्याप्य जगत्सर्वं स्वभासा भाति भास्करः ।
तथा स्वशक्तिभिर्व्याप्य परमात्मा प्रकाशते ॥

---

यस्मिन् वस्तुनि भूम्यादिसमस्ततत्त्वानि समुद्रे बृहत्तरङ्गाः[1] इव सम्भूय लयमायान्ति तत् परमात्मनो रूपम् ॥

पुनः प्रकारान्तरेणाह—

निवारिताणवादिमलसम्बन्धं नामरूपात्मकसकलजगज्जीवनभूतं परमात्मनः स्वरूपं भूम्यादिशिवान्तसकलतत्त्वोपरि प्रोक्तम् ॥

अथ परमात्मा कथं प्रकाशते ? इत्यत्राह—

भास्करः स्वकान्त्या जगत्सर्वं व्याप्य यथा वर्तते[3] तथा परमात्मा

---

[1] कल्लोलशब्दस्येयं व्याख्या ।

[2] उपरिपदार्थः उत्तमोत्तमार्थकः ।

[3] वर्तते=भासमानः वर्तते इत्यर्थः ।

धूमावत्यादिस्वकीयपञ्चशक्तिभिः विश्वं व्याप्य प्रकाशते इत्यर्थः ॥

1248 [तदीयजगद्व्याप्तिसाधनधूमावत्यादिशक्तिवर्णनम्]

तथाहि—[1]

सृज्यस्य पाञ्चभौतिकत्वात्, भूम्यां धूमावत्यपरपर्याया तिरोधानशक्तिः, जले पुष्टिलक्षणा पालनशक्तिः, तेजसि विश्वप्रकाशकतालक्षणा सृष्टिशक्तिः, वायौ शोषकतालक्षणा संहारशक्तिः, नभसि व्यापकशिवैकीकरणप्रवीणानुग्रहात्मिका विभुताशक्तिः ॥ एवं पञ्चभिः विश्वं व्याप्य वर्तते इत्यर्थः ॥

उक्तोऽयमर्थः पञ्चशिखाशास्त्रे—

"धूमावती पृथिव्यां ह्लादाऽप्सु शुचौ तु भास्वती प्रथते ।
वायौ स्पदा विभ्वी नभसि व्याप्तं जगत् ताभिः ॥
धूमावती तिरोधौ भास्वत्यवभासनेऽध्वनां शक्तिः ।
क्षोभे स्पन्दा व्याप्तौ विभ्वी ह्लादा च पुष्टौ स्यात् ॥"

इति [1]एवं शक्तिभिः विश्वं व्याप्य वर्तते इत्यर्थः ॥

अत्र स्वकान्त्या विश्वं व्याप्य भासमानस्य सूर्यस्य यथाऽभेदः, तथा शिवाद्विश्वस्य अभेदः नाशङ्कनीयः । भूम्यादेः शक्तिरूपत्वात् ।

[1] तथाहीत्यादिना भगवतः पञ्चानां शक्तीनां विवरणं क्रियते । धूमावती, पुष्टिः, विश्वप्रकाशकता, शोषकता, विभुता—इत्येव ताः शक्तयः ।

1249 [विश्वव्याप्तिसत्त्वेऽपि विश्वविकारालेपः]

विश्वतो भासमानोऽपि विश्वमायाविलक्षणः ।
परमात्मा स्वयंज्योतीरूपः जीवात्मना भवेत् ॥

---

(74) इति परमात्मस्थलम् (10-3)

---

---

शक्तीनां शिवस्वभावत्वात् । नैवं विश्वं सारतेजोरूपम् , किन्तु सम्बन्धमात्रम् । सर्वांशे दृष्टान्ताभावात् व्याप्तावेव दृष्टान्तः इति ॥

नन्वेवं विश्वव्यापकत्वेन भासमानत्वात् ईश्वरस्य विश्वविकारः कस्मात् न सम्भवति । इत्याक्षेपस्य उत्तरं वदन् परमात्मस्थलं समापयति—

परमात्मा विश्वस्मिन् सर्वत्र भासमानोऽपि विश्वमायाविलक्षणः विश्वोपादानकारणीभूतः व्योमवत् विश्वगतषड्भावविकारदोषरहितः सन् सच्चिदानन्दस्वरूपेण जीवात्मनां संसारहेयबुद्धिसम्पन्नानां ज्योतीरूपः बुद्धिप्रकाशको भवतीति ॥[1]

---

---

[1] जीवात्मविषये एवंरूप एव भवतीति भावः ।

## (75) अथ प्राणलिङ्गिस्थले निर्देहागमस्थलम् (10-4)

1251 [निर्देहागमपदार्थः]

देहिनोऽपि परात्मत्वभाविनो निरहङ्कृतेः ।
निरस्तदेहधर्मस्य निर्देहागम उच्यते ॥[2]

---

1250 [निर्देहागमस्थलनिरूपणम्]

अथ—

" आश्रयो द्वन्द्वमित्युक्तं[1] द्वन्द्वत्यागात् परो दमः ।
जीवन्मुक्तः सदा योगी देहत्यागात् विमुच्यते ॥"

इति देवीकालोत्तरवचनानुसारेण देहधर्मं निराकृत्य परमात्मस्वरूपभावनावतः शिवयोगिनः निर्देहागमस्थलं निरूपयति—

परमात्मत्वभाविनः अहङ्कारममकारशून्यस्य निरस्तदेहधर्मस्य निरस्त-स्थूलत्वादिदेहधर्मवतः देहिनः देहवतः निर्देहागमः निर्देहप्राप्तिः उच्यते कथ्यते इत्यर्थः ॥

1252 [शिवयोगिनः देहबन्धाभावः]

अथ परात्मभाववतः शिवयोगिनः देहसम्बन्धो नास्तीति षड्भिः सूत्रैः प्रतिपादयति—

---

[1] द्वन्द्वमित्युक्तः (ख)

[2] गम इष्यते (क)

37

गलिते ममताऽहन्ते संसारभ्रमकारणे ।
पराहन्तां प्रविष्टस्य कुतो देहः कुतो रतिः ॥

1253

केवले निष्प्रपञ्चौघे गम्भीरे चिन्महोदधौ ।
निमग्नमानसो योगी कथं देहं विचिन्तयेत् ॥

1254

अपरिच्छेद्यमात्मानं चिदम्बरमिति स्मरन् ।
देहयोगेऽपि देहस्थैः विकारैः न विलिप्यते ॥

1255

अखण्डसंविदाकारं अद्वितीयं सुखात्मकम् ।
परमाकाशमात्मानं मन्वानः कुत्र मुह्यति ॥

---

शरीरे प्रीतिश्च कुतः ? इत्यर्थः ॥

निवृत्तचराचरप्रपञ्चसमूहवति अगाधे चित्समुद्रे निमग्नचित्तः शिवयोगी देहं[1] केन प्रकारेण चिन्तयेत् ? न केनापीत्यर्थः ॥

स्वात्मानं परिच्छेदरहितचिदाकाशं स्मरन् शिवयोगी देहे सत्यपि देहस्थेन्द्रियविकारैः[2] न लिप्यते इत्यर्थः ॥

---

[1] देहं = देहसम्बन्धिसुखदुःखादिकमिति भावः ।

[2] मनोविकारजनकैः इति यावत् ।

1256 [शिवयोगिनः अमितपरिमाणवत्त्वम्]

उपाधिविहिताः भेदाः दृश्यन्ते चैकवस्तुनि ।
इति यस्य मतिः सोऽयं कथं देहमितो[2] भवेत् ॥

1257 [तत्रहेतुः]

[3]भेदबुद्धौ समस्तानां परिच्छेदो हि कारणम् ।
अभेदबुद्धौ जातायां परिच्छेदस्य का कथा ॥

---

स्वात्मानं अखण्डाद्वितीयचिदानन्दाकारं परमाकाशं सन्तं मन्वानः,

"आकाशशरीरं ब्रह्म ।
सत्यात्मप्राणारामं मन आनन्दम् ।
शान्तिसमृद्धममृतम् ॥"

इति तैत्तिरीयश्रुत्यनुसारेण जानन् शिवयोगी कुत्र कस्मिन्नधिकरणे "शरीरी अहम्" इति मुह्यति ? न कुत्रापि । ब्रह्मातिरिक्तदेशाभावात्[1] इति भावः ॥

ननु आकाशस्यापि घटाद्युपाधिना परमितिः दृश्यते ? इत्यत्राह—

स्पष्टम् ॥

अथ तत् कुतः ? इत्यत्राह—

घटाकाशदृष्टान्तेन भेदस्तावदौपाधिकः इति ज्ञाते अभेदबुद्धौ

---

[1] ब्रह्मातिरिक्तत्वेन विषयीकरणाभावादिति भावः ।
[2] देहसम्बन्धिमानविशेषबद्धः इत्यर्थः ।
[3] भेदबुद्धिः (ख)

1258 [निगमनम्]

शिवोऽहमिति यस्यास्ति भावना सर्वगामिनी ।
तस्य देहेन सम्बन्धः कथं स्यादमितात्मनः ॥

———

## (75) इति निर्देहागमस्थलम् (10-4)

———

## (76) अथ प्राणलिङ्गिस्थले निर्भावागमस्थलम् (10-5)

———

---

दृढायाम् . वस्तुपरिच्छेदकारणीभूतबुद्धेः शिथिलत्वात् परिच्छेदवार्ता का? न काऽपीत्यर्थः ॥

अथ तदद्वैतं प्रकटीकृत्य निर्देहागमस्थलं समापयति—

"शिवोऽहम्" इति सर्वव्यापकीभूता शिवाद्वैतभावना यस्य शिवयोगिनः अस्ति, तस्य अपरिमितात्मनः परिच्छिन्नशरीरेण सम्बन्धः[1] कथं स्यात्? न कथंचिदपीत्यर्थः ॥

———

1259 [निर्भावागमस्थलनिरूपणम्]

अथ—

"नैवोर्ध्वं धारयेच्चित्तं न मध्यं नाप्यधः क्वचित् ।
अन्तर्भावविनिर्मुक्तं[2] सदा कुर्यान्निराश्रयम् ॥"

---

[1] शरीरमात्रेण सम्बन्धबन्धः इत्यर्थः ।
[2] अन्तर्भावाच्च निर्मुक्तम् । (ख)

1260 [निर्भावागमपदार्थः]

व्यतिरेकात् स्वरूपस्य भावान्तरनिराकृतेः ।
भावो विकारनिर्मुक्तः निर्भावागम उच्यते ॥

1261 [निर्भावलक्षणम्]

अहं ब्रह्मेति भावस्य वस्तुद्वयसमाश्रयः ।
एकीभूतस्य चिद्व्योम्नि तदभावो विनिश्चितः ॥

---

इति देवीकालोत्तरवचनानुसारेण निर्देहागमसम्पन्नस्य शिवयोगिनः निर्भावागमस्थलं निरूपयति—

स्वरूपस्य निर्देहस्वरूपस्य व्यतिरेकात् व्यतिरिक्तात् भावान्तरनिराकृतेः अन्यभावस्य निराकरणात्[1] विकारनिर्मुक्तः इन्द्रियविकारनिर्मुक्तः भावः=मनोभावः, निर्भावागमः इत्युच्यते इत्यर्थः ॥

अथ तन्निर्भावलक्षणं पञ्चभिः सूत्रैः प्रतिपादयति—

'अहं ब्रह्म' इति भावस्य 'अहम्' इति 'ब्रह्म' इति च वस्तुद्वयाक्षेपो भवेत् । चिद्व्योम्नि एकीभूतस्य समरसीभूतस्य भावस्य तदभावः वस्तुद्वयाक्षेपाभावः विनिश्चितः विशेषेण निश्चितः इत्यर्थः ॥

---

[1] भावनिराकरणात् (ख)

1262 [एकभावनिरूढस्वरूपम्]

एकभावनिरूढस्य निष्कलङ्के चिदम्बरे ।
क्व जातिवासनायोगः क्व देहित्वं परिभ्रमः ॥

1263 [तस्य ध्यानादिकर्तृत्वसाध्यताविवेकः]

शून्ये चिदम्बरे स्थाने दूरे वाङ्मनसाध्वनः ।
विलीनात्मा महायोगी केन किं वाऽपि भावयेत् ॥

---

"अहं ब्रह्मास्मि" इति भावस्य कोटिद्वयावगाहित्वेन विकल्पघटितत्वात्, 'अहम्' इत्येकभावस्य विकल्पशून्यत्वात्, एकभावेन स्थितस्य मायिकजातिभेदादिवासना नास्तीत्याह—

निरञ्जने चिदाकाशे तादात्म्येनारूढस्य शिवयोगिनः जातिवर्णाश्रमवासनासम्बन्धः क्व ? देहित्वं शरीरवत्त्वं क्व ?[1] संसारचक्रपरिभ्रमणं च क्व ? इत्यर्थः ॥

नन्वेवं चेत्—ध्यानादीनां का गतिः ? इत्यत्राह—

"यतो वाचो निवर्तन्ते ।
अप्राप्य मनसा सह ॥"

इति श्रुतेः वाङ्मनोमार्गागोचरे[2] नीलपीताद्याकारशून्ये चिदाकाशस्थाने

---

[1] स्थिते शरीरे बन्धहेतोः दुरभिमानस्याभावात् एवमुक्तिः ।

[2] मार्गशब्दः व्यापारपरः ।

1264 [तस्य वृत्तिसाम्यम्]

अविशुद्धे विशुद्धे वा स्थले दीप्तिर्यथा रवेः ।
पतत्येवं सदाऽद्वैती[1] सर्वत्र समवृत्तिमान् ॥

1265 [तस्य मनोधर्माः]

न बिभेति जरामृत्योः न क्षुधाया वशं व्रजेत् ।
परिपूर्णनिजानन्दं समास्वादन्[2] महासुखी ॥

(76) इति निर्भावागमस्थलम् (10-5)

---

तादात्म्यापन्नः शिवयोगी केन प्रकारेण वा किं वस्तु भावयेत् ? केनापि प्रकारेण किमपि वस्तु भावनायोग्यं न सम्भवतीत्यर्थः ॥

ननु विधिनिषेधवासनाशून्यत्वे निन्दाप्राप्तिर्भवेत् इत्यत्राह—

रवेः सूर्यस्य दीप्तिः प्रकाशः विशुद्धस्थले अविशुद्धस्थले च यथा पतति, एवं शिवाद्वैती सदा सर्वत्र समवृत्तिमान् समानबुद्धिवृत्तिमान् सन् सञ्चरतीत्यर्थः ॥

कथं सञ्चरति ? इत्यत्राह—

महासुखी भूत्वा सञ्चरतीत्यर्थः । शिष्टं स्पष्टम् ॥

[1] शिवाद्वैती (ग)
[2] सुखमयत्वेन भावयन् इति भावः ।

## (77) अथ प्राणलिङ्गिस्थले नष्टागमस्थलम् (10-6)

1267 [नष्टागमपदार्थः]

भेदशून्ये महाबोधे ज्ञात्रादित्रयहीनकः
ज्ञानस्य नष्टभावेन नष्टागम इहोच्यते ॥

1268 [शिवयोगिनः त्रिपुटीभङ्गविवरणम् ]

अद्वैतवासनाविष्टचेतसां परयोगिनाम् ।
पश्यतामन्तरात्मानं ज्ञातृत्वं कथमन्यथा ॥

---

1266 [नष्टागमस्थलनिरूपणम् ]

अथैवं निर्भावागमसम्पन्नस्य भेदज्ञानाभावेन[1] तन्नष्टागमस्थलं प्रकाशयति—

द्वैतशून्ये महाशिवज्ञाने [2]ज्ञातृज्ञानज्ञेयात्मकत्रिपुटीमयप्रपञ्चशून्यत्वात् इह निर्भावागमसम्पन्नशिवयोगिविषये ज्ञानस्य भेदज्ञानस्य नष्टभावेन नष्टत्वेन नष्टागमः इत्युच्यते इत्यर्थः ।

ननु शिवयोगिनः कथं त्रिपुटीमयप्रपञ्चशून्यत्वम् ? इत्यत्राह—

अन्यथा ज्ञातृत्वं [3]स्वातिरिक्तपदार्थान्तरज्ञातृत्वमित्यर्थः । अन्तः स्वहृदये इत्यर्थः । शिष्टं स्पष्टम् ॥

---

1 भावभेदस्यैव भेदज्ञानमूलत्वात् इति भावः ।
2 प्रमातृप्रमाणप्रमेयात्मकेत्यपि अत्रैव दार्शनिकानां उक्तिः ।
3 अत्र स्वशब्दः अन्तरात्मपरः ।

1269 [तत्प्रकाशविषयस्वरूपम्]

अकर्ताऽहमवेद्याऽहं अदेहोऽहं निरञ्जनः ।
इति चिन्तयतः साक्षात् संविदेव प्रकाशते ॥

1270 [तस्य विषयान्तराप्रकाशः]

निरस्तभेदजल्पस्य निरीहस्य प्रशाम्यतः ।
स्वे महिम्नि विलीनस्य किमन्यत् ज्ञेयमुच्यते ? ॥

---

ननु तस्य अन्यथा ज्ञातृत्वाभावे किं प्रकाशते ? इत्यत्राह—
एवं चिन्तयतः शिवयोगिनः,

" ज्ञातृ ज्ञानज्ञेयविहीनोऽपि सदाज्ञः "

इति श्रुतेः त्रिपुटीमयप्रपञ्चनाशं कृत्वा विशिष्टशिवाद्वैतज्ञानमेव[1] प्रकाशते । अयमेव नष्टागमप्रकाशः इति भावः ॥

अथ तस्य ज्ञेयान्तरं नास्त्येवेत्याह—
निरस्तभेदजल्पस्य—

" द्वितीयात् भयमेव पश्यन्ति "[2]

इति बृहदारण्यकश्रुतेः, युक्त्या च निराकृतद्वैतवाक्यस्य प्रशाम्यतः रागद्वेषरहितस्य, स्वे महिम्नि स्वविमर्शे विलीनस्य तदेकनिष्ठस्य निरीहस्य विरक्तस्य शिवयोगिनः ज्ञेयं ज्ञातुं योग्यं अन्यत् किम् ? न किमपीत्यर्थः ॥

---

1 तदा यत् भासते तस्यैव अस्मन्मते शिवाद्वैतसंज्ञेति भावः ।
2 'द्वितीयाद्वै भयं भवति' इत्यपि श्रुतिः ।

1271 [तस्य युक्त्या साधनम् ]
[भेदनिरासः, शिवाद्वैतनिरूपणं च]

ननु अत्र युक्तिः किम् ? इति चेत् – उच्यते—

भेदो नाम किमन्योन्याभावो वा ? वैधर्म्यं वा ? वस्तुस्वरूपं वा ? इति त्रेधा विकल्पः ।

आद्येऽपि—तत्र अन्यत्वं भावस्वभावो वा ? भेदनिबन्धनः कश्चिदुपाधिर्वा ? इति द्विधा विकल्पः । तत्र नाद्यः । भावस्य अभावत्वप्रसङ्गात् । अन्यत्वस्य भावस्वभावत्वात् ? "भावादन्यो भावः" इति प्रसिद्धत्वात् ॥ ननु—भावानां बाहुल्यात् भावस्य भावान्तरान्यत्वं स्वभावः इति चेत्—अस्तु तस्य विशेषघटितत्वात् । इह तु भेदसामान्यलक्षणप्रविष्टस्य अन्यत्वस्य प्रश्नविषयत्वेन न तदुत्तरं भवितुमर्हति । तस्य[1] भेदसिद्ध्यनन्तरभावित्वात् । किञ्च—"भावस्य भावान्तरान्यत्वं स्वभावः" इति नियमः तत्तद्भावकृतो वा ? तद्व्यतिरिक्तमहापुरुषकृतो वा ? नाद्यः घटादिभावस्य जडत्वेन[2] कर्तृत्वाभावात् । न द्वितीयः । कल्पनायाः प्राक् अनन्यत्वेन आन्तरालिकतया अन्यत्वस्य तत्स्वभावत्वासम्भवात् । ननु न केनापि कृतः, किन्तु स्वतःस्सिद्धः इति चेत्— तर्हि स्वप्रकाशोऽपि भवेत् । ब्रह्मवत् स्वतःसिद्धत्वात् । ननु ब्रह्मापि मानान्तरसिद्धमिति न स्वतस्सिद्धमिति वाच्यम् ।[3] नित्यत्वेन

---

[1] तस्यैव (ख)

2 स्वतः इति शेषः ।

[3] अत्र सिद्धिपदार्थस्य प्राकृतपदार्थविषयतातिरिक्तत्वात् ।

कारकव्यापारासम्भवात् । स्वप्रकाशत्वेन ज्ञापकव्यापारासम्भवात् । अन्यथा जडत्वप्रसङ्गात् ॥ नापि अन्यत्वं भेदनिबन्धनः कश्चिदुपाधिः । आत्माश्रयत्वादिदोषप्रसङ्गात् ॥

नापि द्वितीयः । "घटे पटत्वं नास्ति" "पटे घटत्वं नास्ति ।" वैधर्म्यात् । एवंविधनिश्चयस्य घटपटभेदसिद्ध्यनन्तरभावित्वात् । न च घटपटयोः तन्तुमयत्वमृण्मयत्वाभ्यां भेदः सिद्ध एवेति वाच्यम् । घटे एव मृण्मयत्वम्,[1] पटे एव तन्तुमयत्वम् इति असाधारणप्रतीतेः घटपट-भेदसिद्ध्यधीनत्वात् । तस्याः अद्यापि साध्यकोटिप्रविष्टत्वात् । किञ्च-तन्तुमयत्वमृण्मयत्वयोः[2] भेदः तत्र तदवयवभेदादिति परमाणुपर्यालोचनायां, निरवयवत्वेन भेदाग्रहात् मूलक्षयकारिणी अनवस्था स्यात् इति ॥

नापि द्वितीयः । वस्तुस्वरूपं हि वस्त्वन्तरस्वरूपाननुगामीत्यङ्गीकरणीयम् । अन्यथा स्वरूपसाङ्कर्यापत्तेः ।

1272

एवं च-'इदं रजतम्' इत्यत्र शुक्तिरेव रजताकारेण निश्चीयते इति भ्रान्तिज्ञानोच्छेदप्रसङ्गात् ॥ दूरत्वादिदोषवशात्[3] तथा निश्चीयते इति चेत्—तर्हि—इङ्गालादिकमपि रजतत्वेन कुतो न निश्चीयते? न च-विशेषदर्शनसामग्री प्रतिबन्धिकेति वाच्यम् । शुक्तिकायामपि विशेषदर्शन-

---

[1] मृन्मयत्वम् (ख)
[2] मृन्मयत्वयोः (ख)
[3] दोषवशादेव (ख)

सामग्रीसत्त्वेन अनारोपप्रसङ्गात् । अविशेषदर्शनसामग्रीप्राबल्यात् आरोपः सम्भवतीति चेन्न । वस्त्वन्तरे वस्त्वन्तररूपं अनुप्रविष्टमिति अङ्गीकारणीयत्वेन अननुप्रविष्टमिति वक्तुमशक्यत्वेन स्वरूपसाङ्कर्यापत्तेरनिवार्यत्वेन भेदवादोच्छेदप्रसङ्गात् । पूर्वोक्तदोषप्रसङ्गाच्च ॥

1273

किञ्च – वस्तुनि भासमानो भेदः तत्तद्वस्तुस्वरूपाभिन्नो वा ? भिन्नो वा स्यात् ?

नाद्यः । अत्यन्तविरोधात् । भेदस्य अभेदत्वासम्भवात् ।

न द्वितीयः । सोऽपि भेदः कीदृशः ? इति उपर्युपरि विचार्यमाणे अनवस्थामेव उपस्थापयतीति [1]विश्रान्त्यभावात् ।

नाप्यत्यन्ताभावो भेदः, आत्माश्रयप्रसङ्गात् । नास्त्यैक्यप्रतियोगी, एकत्वस्य प्रतियोग्यभावात् । द्वित्वादीनां तन्मूलकत्वात् । नापि विभागः । तस्य संयोगपूर्वकत्वेन पूर्वापरं दिशोः पूर्वपश्चिमाचलयोश्च कदाऽपि संयोगाभावेन भेदाभावप्रसङ्गात् ॥

1274

तस्मात् गत्यन्तराभावेन भेदव्यवहारसिद्ध्यर्थं सकलसामरस्यात्मनः महेश्वरस्य इच्छावशात् सागरतरङ्गन्यायेन अभेदपर्यवसायित्वेन कल्पित-

---

[1] अनवस्थामेवान्तत उपस्थापयतीति (ख)

1275 [त्रिपुटीभङ्गानन्तरस्थितिः]

एकीभूते निजाकारे संविदा निष्प्रपञ्चया ।
केन किं वेदनीयं तद्वेत्ता कः परिभाष्यते ? ।।

1276 [निगमनम्]

महासत्ता महासंवित् विश्वरूपा प्रकाशते ।
तद्भिना नास्ति वस्त्वेकं भेदबुद्धिं विमुञ्चते ।।

---

विभागो भेद एवेत्यङ्गीकरणीयत्वेन अभेद एव सिद्ध्यतीति शिवाद्वैतसिद्धान्तिनां युक्तिरीदृशीति विचक्षणैः विमर्शनीया इति ।।

अथ उक्तसूत्रत्रयार्थमेव विशेषयति—

निजाकारे स्वस्वरूपे निष्प्रपञ्चया संविदा शिवाद्वैतज्ञानेन एकीभूते-सति सामरस्ये सति केन किं वस्तु वेदनीयं ज्ञेयं स्यात् ? तद्वेत्ता ज्ञानेन ज्ञेयवेत्ता च कः इति परिभाष्यते ।

"नातः परं वेदितव्यं हि किञ्चित्"

इति श्रुतेः

"वेदितव्यं न किञ्चन"

इत्यागमोक्तेश्च, अन्योन्याभावनिबन्धनभेदघटितमायिकत्रिपुटीमयप्रपञ्चदर्शनं शिवयोगिनां नास्तीत्यर्थः ।।

तर्हि कीदृशं प्रपञ्चदर्शनं स्यात् ? इत्यत्र वदन् नष्टागमस्थलं समापयति—

(77) इति नष्टागमस्थलम् (10-6)

---

" महासत्ता "

" गगनकुसुमम् "

इत्यादौ अर्थवत्पदयोरेव संमेलनरूपसंयोगात् त रिंविभक्तियोगाच्चा अर्थवत्त्वात् गगनकुसुममङ्गीकरणीयमिति, सदसत्सकलवस्तुव्यापकत्वात् 'महासत्तेत्युच्यते'[2] हृदयोल्लेखं विना 'गगनकुसुम'मिति व्यवहारासम्भवात् महासंविदित्युच्यते ।

एवं स्वशिरश्छायानुलङ्घनमिव सदसद्विश्वव्यापकीभूतं ब्रह्मचैतन्यमेव जगद्रूपेण भासते, न तद्व्यतिरिक्तं किञ्चिदिति भेदबुद्धिं विमुञ्चतः शिवयोगिनः महासत्तास्फुरत्ताकचैतन्यं विना एकं वस्तु अन्यद्वस्तु नास्तीति, सागरतरङ्गन्यायेन तद्बुद्धेः अभेदविश्रान्तत्वात् इति ।

---

[1] अर्थवदधातुरप्रत्ययः प्रातिपादिकम् इति पाणिनीयं सूत्रम् । प्रातिपादिकादेव सुबादिप्रत्ययाश्चेति ज्ञेयम् ।

[2] बुद्धिकल्पितमिति शेष ।

## (78) अथ प्राणलिङ्गिस्थले आदिप्रसादिस्थलम् (10-7)

---

1278 [आदिप्रसादिपदार्थः]

सर्वाधिष्ठातृकः शम्भुः आदिस्तस्य प्रसादतः ।
आदिप्रसादीत्युक्तोऽयं निर्विकारपदे स्थितः ॥

---

1277 [आदिप्रसादिस्थलनिरूपणम्]

अथ --

"यो ब्रह्माणं विदधाति[1] पूर्वं यो वै वेदांश्च प्रहिणोति[2] तस्मै ।

तं महादेवं आत्मबुद्धिप्रकाशं [3]मुमुक्षुर्वै शरणमहं प्रपद्ये ॥"

इति श्वेताश्वतरमन्त्रानुसारेण नष्टागमसम्पन्नशिवयोग्येव सर्वादिभूतशिवप्रसादवान् इति आदिप्रसादी इत्युच्यते इति तदीयस्थलं निरूपयति—

विश्वाधारभूमित्वात् तन्नियामकत्वात् शम्भुः आदिः, सृष्ट्यादिपञ्चकृत्यमूलकारणम् । तस्य सर्वादिभूतस्य शम्भोः प्रसादतः निर्विकारपदे विकाररहितनष्टागमस्थले स्थितोऽयं शिवयोगी आदिप्रसादी आदिप्रसादवान् इत्यर्थः ॥

---

[1] विदधाति = सृजतीत्यर्थः ।
[2] प्रहिणोति = उपदिशतीत्यर्थः ।
[3] मुमुक्षुः = सर्वंविधप्रकृतिबन्धनात् मोक्तुं इच्छावान् ।

1279 [अदिप्रसादिनः महत्त्वम् ]

अनेकजन्मशुद्धस्य निरहङ्कारभाविनः ।
अप्रपञ्चस्यादिदेवः प्रसीदति विमुक्तये ॥

1280

शिवप्रसादसम्पत्त्या शिवभावमुपेयुषि ।
शिवादन्यज्जगज्जालं दृश्यते न च दृश्यते ॥

1281

शम्भोः शिवप्रसादेन संसारच्छेदकारिणा ।
मोहग्रन्थिं विनिर्भिद्य मुक्तिं यान्ति विवेकिनः ॥[4]

---

अथ तस्य महत्त्वं चतुर्भिः सूत्रैः प्रतिपादयति—

अनेकजन्मभिः शुद्धात्मनः [1]परिच्छिन्नदेहाद्यभिमानशून्यस्य अप्रपञ्चस्य प्रापञ्चिकभेद[2] रहितस्य शिवयोगिनः आदिदेवः सर्वादिदेवः शिवः विमुक्तये परमोक्षाय प्रसीदति प्रसन्नो भवतीत्यर्थः ॥

शिवप्रसादप्राप्त्या शिवत्वमुपेयुषि[3] विषये जगज्जालं जगत्समूहं शिवादन्यत् इति न दृश्यते । भेदस्य निराकृतत्वात् सागरतरङ्गन्यायेन अभेदेन दृश्यते इत्यर्थः ॥

---

[1] निरहङ्कारभाविन : इत्यस्यायमर्थः ।
[2] भेदपदं भेदज्ञानपरम् ।
[3] उपेयुषि प्राप्तवति ।
[4] उक्तप्रकारेण विवेचनाशक्तियुताः ।

1282 [शिवप्रसादं विनामुक्त्यभावः]

विनाप्रसादमीशस्य संसारो न निवर्तते ।
विना सूर्योदयं लोके कुतः स्यात् तमसो लयः ॥[1]

1283 [निगमनम्]

सर्वानुग्राहकः शम्भुः केवलं कृपया प्रभुः ।
मोचयेत् सकलान् जन्तून् न किञ्चिदिह कारणम् ॥

(78) इति आदिप्रसादिस्थलम् (10-7)

---

नित्यानित्यविवेकिनः संसारच्छेदकारिणा शिवप्रसादेनैव अज्ञानग्रन्थि विदार्य[2] परमोक्षं यान्तीत्यर्थः ॥

ननु शिवप्रसादेन विना मुक्तिः नास्ति वा? इत्यत्राह—

स्पष्टम् ॥

अथ शिवस्य सर्वात्मस्वपक्षपातेन कृपाप्रसादं संसूच्य आदिप्रसादिस्थलं समापयति—

प्रभुः स्वतन्त्रः सर्वानुग्राहकः सर्वहितोऽपि शम्भुः शिवः केवलं कृपयैव सकलान् जन्तून् प्राणिनः मोचयेत् पाशमुक्तान् कुर्यात् । इह पाशमोचनविषये शम्भोः किञ्चित्[3] कारणं नास्ति, सर्वानुग्राहकत्वस्य तत्स्वभावत्वात् इति ॥

[1] लयः=नाशः ।
[2] विदार्य—निर्भिद्येत्यर्थः ।
[3] असदीयबुद्धिगोचरतया वर्तमानमित्यर्थः ।

## (79) प्राणलिङ्गस्थले अन्त्यप्रसादिस्थलम् (10-8)

1285 [अन्त्यप्रसादिस्वरूपम्]

लयः सर्वपदार्थानां अन्त्य इत्युच्यते बुधैः ।
प्रसादोऽनुभवस्तस्य तद्वान् अन्त्यप्रसादवान् ॥

---

1284 [अन्त्यप्रसादिस्थलनिरूपणम्]

अथ—

"अणोरणीयान् महतो महीयान्
आत्माऽस्य जन्तोर्निहितो गुहायाम् ।[1]
[2]तमक्रतुं पश्यति वीतशोको
[3]धातुः प्रसादान्महिमानमीशम् ॥"

इति कठवल्लीश्रुत्यनुसारेण तदादिप्रसादेव सर्वाश्रयः सन् अन्त्यस्य शिवस्य अनुभवप्रसादवान् इति अन्त्यप्रसादिस्थलं निरूपयति—

सर्वपदार्थानां भूम्यादिशिवान्तपदार्थानां लयः लयाश्रयः परशिव एव अन्त्यः सर्वान्त्य इति बुधैरुच्यते । तस्य सर्वान्त्यस्य[4] शिवस्य अनुभवः साक्षात्कार एव प्रसादः । तद्वान् तदनुभवी आदिप्रसादेव अन्त्यप्रसादवान् इत्युच्यते इत्यर्थः ॥

---

1 जन्तोः गुहायां=मानवस्य हृदयस्थाने अन्यागोचरतया निहितः इत्यर्थः

2 कर्माधीनोन्नत्यहीनमित्यर्थः ।

3 धातुप्रसादात (ख)

4 सर्वान्तस्य (ख)

1286 [योगिनः सर्वपदार्थलयप्रकारवर्णनम्]

देवतिर्यङ्मनुष्यादिव्यवहारविकल्पना ।
[1]मायाकृता परे तत्त्वे तल्लये तत्क्षयो भवेत् ॥

1287

साक्षात्कृते परे तत्त्वे सच्चिदानन्दलक्षणे ।
क्व पदार्थपरिज्ञानं ? कुतो ज्ञातृत्वसम्भवः ? ॥

1288 [तादृशलये दृष्टान्तः]

सुषुप्तस्य यथा वस्तु न किञ्चिदपि भासते ।
तथा मुक्तस्य जीवस्य न किञ्चिद्वस्तु दृश्यते ॥

---

अथ सर्वपदार्थलयप्रकारं सूत्रद्वयेन कथयति—

तल्लये मायालये इत्यर्थः । शिष्टं स्पष्टम् ॥

अथ कथं मायाक्षयः ? इत्यत्राह—

सच्चिदानन्दस्वरूपे परब्रह्मणि[2] प्रत्यक्षीकृते सति मायायाः निवृत्तत्वात् तत्कल्पितपदार्थपरिज्ञानं क्व ज्ञातृत्वसम्भवः ज्ञेयज्ञानातिरिक्तज्ञातृत्वस्य आविर्भावश्च क्व ? ज्ञेयाद्यपेक्षया ज्ञातृत्वस्य कल्पितत्वात् इति भावः ॥

अत्र दृष्टान्तमाह—

---

[1] मायानिमित्तेत्यर्थः ।
[2] परे ब्रह्मणि—(ख)

1289 [जीवन्मुक्तस्वरूपम्]

यथाऽऽकाशमविच्छिन्नं[1] निर्विकारं स्वरूपतः ।
तथा मुक्तस्य जीवस्य स्वरूपमवशिष्यते ॥

1290 [जीवन्मुक्तस्य लोकव्यवहारः स्वरूपम्]

न किञ्चिदपि मुक्तस्य दृश्यं कर्तव्यमेव वा ।
सुखस्फूर्तिस्वरूपेण निश्चला स्थितिरुच्यते ॥

---

मुक्तस्य जीवस्य जीवन्मुक्तस्येत्यर्थः । शिष्टं स्पष्टम् ॥

अत्र जीवन्मुक्तस्य पदार्थदर्शनमस्तीति नाशङ्कनीयम् । शिवाभेदे नैव दर्शनात्, प्राकृतत्वेन किमपि न हि दृश्यते इति ॥

अथ जीवन्मुक्तस्वरूपं कीदृशम्? इत्यत्र सूत्रद्वयेन कथयति—

अवशिष्यते प्रकाशते इत्यर्थः ।[2] शिष्टं स्पष्टम् ॥

अथ जीवन्मुक्तः किं जानन्? किं कुर्वन्? कथं तिष्ठति? इत्यत्राह—

स्पष्टम् ॥

अथ जीवन्मुक्तस्य दृश्यं कर्तव्यं कुतो नास्ति? इत्यत्र वदन् अन्त्यप्रसादिस्थलं समापयति—

---

[1] मध्ये कुत्रापि विच्छेदाभाववत्, निरन्तरमित्यर्थः ।
[2] प्रकाशते इति अवशेषपदतात्पर्यमेव ।

1291 [तत्स्थितिविशेषः]

शिवाद्वैतपरिज्ञानशिथिलाशेषवस्तुनः ।
केवलं संविदुल्लासदर्शिनः केन को भवेत् ?

(79) इति अन्त्यप्रसादिस्थलम् (10-9)

---

(80) अथ प्राणलिङ्गिस्थले सेव्य प्रसादिस्थलम् (10-9)

---

शिवाद्वैतपरिज्ञानेन निवृत्तसकलभेदवस्तुनः अत एव केवलचिद्विलासं पश्यतः शिवयोगिनः ज्ञानेन्द्रियव्यापारेण कर्मेन्द्रियव्यापारेण वा केनापि किं भवेत् ?[1] किं प्रयोजनं स्यात्; न किञ्चिदिति भावः ॥

अनयोः आद्यन्तप्रसादयोः उपक्रमोपसंहारन्यायेन ऐक्यं विमर्शनीयम् ॥

1292 [सेव्यप्रसादिस्थलवर्णनम्]

अथ —

" अन्तश्शरीर एवायं
बाह्य एव न संस्थितः ।
महानन्दप्रसादेऽयं
सर्वत्रैवावभासते ॥"

---

[1] तत्रत्यविषयेन्द्रियसंयोगः न किंचित् विकारं जनयति इति भावः ।

1293 [सेव्यप्रसादिनः स्वरूपवर्णनम्]

सेव्यो गुरुः [1]समस्तानां शिव एव न संशयः ।
प्रसादोऽस्य परानन्दप्रकाशः परिकीर्त्यते ॥

1294

सेव्यो गुरुः स्मृतो ह्यस्य प्रसादोऽनुभवो मतः ।
तदेकावेशरूपेण तद्वान् सेव्यप्रसादवान् ॥

---

इति सर्वज्ञानोत्तरवचनानुसारेण सेव्यशिवगुरुप्रसादसम्पन्नः अन्त्यप्रसाद्येव सेव्यप्रसादीति सूत्रत्रयेण कथयति—

समस्तानां सेव्यः श्रीगुरुः शिव एव, अत्र सन्देहो नास्ति, अस्य प्रसादः श्रीगुरुरूपशिवप्रसाद एव परानन्दप्रकाशः इति कीर्त्यते ॥

गुरुः शिवस्वरूपश्रीगुरुरेव सेव्य इति स्मृतः । अस्य शिवरूपस्य श्रीगुरोः अनुभवः उपदेशानुभव[2] एव प्रसाद[3] इति संमतः । तदेकावेशरूपेण तयोः गुरुप्रसादयोरेकीभावेन तद्वान् तत्प्रसादवान् अन्त्यप्रसाद्येव सेव्यप्रसादवान् सेव्यप्रसादी इति हि प्रसिद्धः इत्यर्थः ॥

---

1 "गुशब्दस्त्वन्धकारः स्यात् रुशब्दः तन्निरोधकः । अन्धकारनिरोधित्वात् गुरुरित्युच्यते बुधैः ।" इत्युक्तप्रकारेण वस्तुतः अन्ततः अज्ञाननिरोधकः इत्यर्थः ।

2 उपदिष्टानां अर्थानां प्रत्यक्षतया अनुभवः इत्यर्थः ।

3 धातुप्रसन्नतामूलकत्वात् प्रसादः इत्युच्यते ।

1295

गुरुर्देवः परं तत्त्वं परतत्त्वं गुरुः स्मृतः ।[1]
तदेकत्वानुभावेन न किञ्चिदवशिष्यते ।

1296 [सेव्यप्रसादिनः उदासीनस्वभाववर्णनम् ]

अपरिच्छेद्यमात्मस्थं अवाङ्मनसगोचरम् ।
आनन्दं पश्यतां पुंसां रतिरन्यत्र का भवेत् ? ॥

---

गुरुशिवयोः शक्तिशक्तिमद्भावेन तयोः ऐक्यानुसन्धानेन ज्ञातव्यं न किञ्चिदवशिष्यते । सर्वस्यापि विश्वस्य शिवमयत्वात् इति ॥

अथ परमानन्दवतः सेव्यप्रसादिनः क्वापि[2] प्रीतिर्नास्तीति सूत्रत्रयेण कथयति—

परिच्छेदरहितं वाङ्मनसयोरगोचरं स्वस्वरूपं परमानन्दं अपरोक्षेण[3] पश्यतां शिवयोगिनां अन्यत्र विषयेषु रतिः अभिलाषः का भवेत् ? न काऽपि स्यात् इत्यर्थः ॥

---

[1] उद्देशविधेयभावव्यत्यासः उक्तार्थं द्रढयितुम् ।
[2] भौतिकवस्तुनि बन्धकी प्रीतिरित्यर्थः ।
[3] प्रत्यक्षतः इत्यर्थः ।

1297

ज्ञानामृतेन तृप्तस्य किमन्यैः भोज्यवस्तुभिः ?
ज्ञानादेव परानन्दं प्रकाशयति सच्छिवः ॥

1298

मुक्तिरेव परा तृप्तिः सच्चिदानन्दलक्षणा ।
नित्यतृप्तस्य मुक्तस्य किमन्यैः भोगसाधनैः ॥?॥

1294 [तस्य कर्मसामान्याभाववर्णनम्]

न बाह्यकर्म तस्यास्ति न चान्तर्नैव कुत्रचित् ।
शिवैक्यज्ञानरूढस्य देहभ्रान्ति विमुञ्चतः ॥

---

ज्ञानामृतेन सन्तुष्टस्य शिवयोगिनः अन्यैः चित्पीयूषव्यतिरिक्तैः[1] भोज्यपदार्थैः किम्? न किञ्चित्[2] सच्छिवः — अग्नेरुष्णत्वप्रकाशकत्वादय इव शिवस्य सच्चिदानन्दाः स्वभावाः । तादृशः शिवः ज्ञानादेव निजज्ञानादेव परानन्दं स्वस्वभावभूतनित्यानन्दं प्रकाशयतीति ॥

अथ तदेव विशदयति—

नित्यतृप्तस्य सर्वज्ञानाद्युपलक्षितनित्यतृप्तिमतः मुक्तस्य परममुक्तिमतः शिवयोगिनः इत्यर्थः । शिष्टं स्पष्टम् ॥

अथ तस्य परमुक्तस्य अन्तर्बहिः किमपि[3] कर्म नास्तीति निरूपयति—

---

[1] ज्ञानामृतव्यतिरिक्तैरित्यर्थः ।

[2] आमुष्मिकं न किञ्चिदित्यर्थः ।

[3] मानसिकं दैहिकं वा इति यावत् ।

1300 [स्थलनिगमनम् ]

न कर्मबन्धे न तपोविशेषे न मन्त्रयोगाभ्यसने तथैव ।
ध्याने न बोधे च तथाऽऽत्मतत्त्वे मनः प्रवृत्तिः परयोगभाजाम् ॥

इति श्रीमत् षट्स्थलब्रह्मिणा शिवयोगि
नाम्ना रेणुकाचार्येण विरचिते
वीरशैवधर्मनिर्णये सिद्धान्त-
शिखामणौ प्राणलिङ्गिस्थलनवविध
लिङ्गप्रसङ्गो नाम
अष्टादशः परिच्छेदः
समाप्तः ॥

---

स्वरूपहानिवृद्धिव्यतिरेकेण सजातीयसमानसमरसभावेन शिवैक्य-ज्ञानमारुह्य[1] देहभ्रान्तिं विमुञ्चतः तस्य सैव्यप्रसादिनः बहिरङ्गविधीयमान-पूजाकर्म नास्ति, अन्तश्च अन्तरङ्गे विधीयमान ध्यानादिकर्म च नास्ति ।[2] कुत्रचित् क्वापि त्रिन्दुतिरोभावमलमायाद्युपलक्षितकर्मपाशोऽपि नास्तीत्यर्थः ॥

अथ प्रसादिस्थलं समापयति—

[1] आरुह्य = प्राप्येति यावत् ।
[2] सर्वेषामपि ऐच्छिकत्वमिति भावः ।

परयोगभाजां सर्वोत्कृष्टपरशिवयोगभाजां सेव्यप्रसादिनां मनःप्रवृत्तिः चित्तवृत्तिः मन्त्रयोगाभ्यसने अजपागायत्रीरूपसोहंमन्त्रयोगाभ्यासे न नास्तीत्यर्थः ॥ तथैव कर्मबन्धे षट्कर्मबन्धत्रयरूपहठयोगेऽपि न, तपोविशेषे योगानां विशिष्ट[1]राजयोगेऽपि न, ध्याने अनाहतब्रह्मध्यानरूपलययोगेऽपि न । किन्तु तदात्मतत्त्वे तद्योगचतुष्टयचैतन्यस्वरूपेबोधे स्वस्वरूपज्ञाने मनःप्रवृत्तिः स्यात् इत्यर्थः ॥

अयं भावः—

देशिकोपदेशेन अपरदेहपाणिपादगुह्यानि प्रथमं संशोध्य बन्धयित्वा, तदनन्तरं परापश्यन्तीमध्यमावैखरीस्वरूपरुद्रविष्णुब्रह्मेन्द्रादिदैवतलयराजहठमन्त्रयोगात् क्रमेण पूर्वकायस्य कर्णाक्षिनासारसनासु संयोज्य, अनन्तरं पूर्वापरकायकीलभूतबिन्दुमायाकार्यरूपवाक्त्वचौ निश्चलीकृत्य सर्वयोगज्ञानजननक्षेत्रभूताविमुक्तक्षेत्रे परब्रह्मपरशिवपरलिङ्गापरपर्यायनामभिः संसेव्य स्वस्वरूपसेवितः सेव्यप्रसादी इत्यर्थः ॥

---

[1] विशिष्टे (ख)

(80) इति सेव्यप्रसादिस्थलम् (10-9)

इति प्राणलिङ्गिस्थलं दशमम् ॥

एतत् लिङ्गत्रयं प्राणलिङ्गिनः अङ्गत्रयस्य क्रमेण सम्बन्धयेत् इति सेव्यप्रसादिस्थलम् ॥

इति श्रीमत्पदवाक्यप्रमाण
पारावारधुरीण श्रीमरितोण्टदार्येण
विरचितायां तत्त्वप्रदीपिकाख्यायां
सिद्धान्तशिखामणिव्याख्यायां
प्राणलिङ्गिस्थलविषयनव-
विधलिङ्गप्रसङ्गो नाम
अष्टादशः परिच्छेदः समाप्तः ॥

॥ श्री शिवाय नमः ॥

# सिद्धान्तशिखामणौ

## एकोनविंशः परिच्छेदः

### शरणस्थलविषयद्वादशविधलिङ्गप्रसङ्गः ॥

### (11) अथ एकादशं शरणस्थलम् ॥

अगस्त्य उवाच—

1301 [शरणस्थलविवरणप्रार्थना]

स्थलभेदाः समाख्याताः प्राणलिङ्गिस्थलाश्रयाः ।
कथय [1]स्थलभेदं मे शरणस्थलसंश्रितम् ॥

रेणुक उवाच—

1302 [विवरणारम्भः]

शरणस्थलमाश्रित्य [2]स्थलद्वादशकं मया ।
उच्यते नाम सर्वेषां स्थलानां शृणु तापस ॥

---

अथ—अगस्त्य उवाच—इति अगस्त्यप्रश्नः—स्पष्टम् ॥

अथ श्रीरेणुकः उत्तरं वक्ति—रेणुक उवाच—इति स्थलानां अवान्तरस्थलानामित्यर्थः ॥

1303 [शरणस्थलस्य द्वादश भेदाः]

अथ तानि स्थलानि सूत्रत्रयेण उद्दिशति—

---

1 स्थलभेदं=अवान्तरस्थलानां भेदमित्यर्थः ।

2 द्वादश अवान्तरस्थलानीत्यर्थः ।

दीक्षापादोदकं पूर्वं शिक्षापादोदकं ततः ॥

1304

ज्ञानपादोदकं चाथ क्रियानिष्पत्तिकं ततः ।
भावनिष्पत्तिकं चाथ ज्ञाननिष्पत्तिक ततः ॥

1305

पिण्डाकाशस्थलं चाथ बिन्द्वाकाशस्थलं ततः ।
महाकाशस्थलं चाथ क्रियायाश्च प्रकाशनम् ॥

1306

भावप्रकाशनं पश्चात् ततो ज्ञानप्रकाशकम् ।
स्वरूपं पृथगेतेषां कथयामि यथाक्रमम् ॥

---

स्पष्टम् ॥

[१. दीक्षापादोदकस्थलम्
२. शिक्षापादोदकस्थलम्
३. ज्ञानपादोदकस्थलम्
४. क्रियानिष्पत्तिस्थलम्
५. भावनिष्पत्तिकस्थलम्
६. ज्ञाननिष्पत्तिकस्थलम्
७. पिण्डाकाशस्थलम्
८. बिन्द्वाकाशस्थलम्
९. महाकाशस्थलम्
१०. क्रियाप्रकाशनस्थलम्
११. भावप्रकाशनस्थलम्
१२. ज्ञानप्रकाशनस्थलम्
इति]

## (81) अथ शरणस्थले दीक्षापादोदकस्थलम् (11-1)

308 [दीक्षापादोदकस्वरूपम्]

दीक्षयाऽपगतद्वैतं यत् ज्ञानं गुरुशिष्ययोः ।
आनन्दस्यैक्यमेतेन दीक्षापादोदकं स्मृतम् ॥

---

अथ—

1307 [दीक्षापादोदकस्थलम्]

"आचार्यः पूर्वरूपम् ।
[1]अन्तेवास्युत्तररूपम् ।
विद्या सन्धिः ॥"

इति [2]श्रुत्युक्तप्रकारेण,

"अस्मात् [3]प्रविततात् बन्धात् परसंस्था[4]निरोधकात् ।
दीक्षैनं मोचयेत् पूर्वं शैवं धाम नयत्यपि ॥"

इति स्वायम्भुववचनानुसारेण च अस्य सेव्यप्रसादिनः सुलभदीक्षापादोदकस्थलं निरूपयति—

गुरुशिष्ययोः सेव्यगुरुशिष्ययोः आनन्दस्यैक्यं निजानन्दैकीभूतं

---

[1] आचार्यस्यान्ते=समीपे वसन्नेव तद्दत्तं ज्ञानं साधनं च वर्धयतीति अन्तेवासी=शिष्यः ।

[2] श्रुतिः तैत्तिरीयश्रुतिः ।

[3] प्रविततात्—अत्यन्तविस्तृतात् सुदृढाच्च ।

[4] परसंस्था—परमात्मन्यभेदेन लयः ।

1309 [गुरुशिष्यैक्यस्य वा पादोदकत्वम् ]

अथवा पादशब्देन गुरुरेव निगद्यते ।
शिष्यश्चोदकशब्देन तयोरैक्यं तु दीक्षया ॥

---

दीक्षयाऽऽत्मगतद्वैतं ज्ञानदानमलक्षयरूपचित्क्रियादीक्षानिवारितद्वैतं[1] यत् ज्ञानमस्ति, एतेन अनेन ज्ञानेन दीक्षापादोदकं सेव्यप्रसादिनः सुलभभूतदीक्षापादोदकमिति स्मृतम् ॥

शिवदीक्षापगतद्वैतज्ञानवद्गुरुशिष्यनिजानन्दैक्यमेव दीक्षापादोदकमित्यर्थः ॥

अथ दीक्षासञ्जातगुरुशिष्यैक्यमेव दीक्षापादोदकमिति पक्षान्तरेणाह—

अथवा तत्र चेत् पादशब्देन श्रीगुरुरेव कथ्यते ।[2] उदकशब्देन-शिष्यो निगद्यते ।[3] दीक्षया निजकरसञ्जातशिष्यमूर्ध्नि घ्राणस्वरूप दीक्षाविशेषेण तयोरैक्यं तु पादोदकमिति स्मृतमित्यर्थः ॥

310 [ज्ञानानन्दैक्यस्यवापादोदकत्वम् ]

अथ दीक्षाप्रकाशितसत्यज्ञानानन्दैक्यमेव दीक्षापादोदकमिति पक्षान्तरेण कथयति—

---

[1] निवारितद्वैतभावमिति यावत् ।
[2] 'पादोबुध्नेतुरीयांशे शैलप्रत्यन्तपर्वते चरणे च मयूखे च' इति मेदिनीकोशात् किरणार्थे प्रयोगः । श्रीगुरुदेवस्यापि भगवत्किरणस्वरूपत्वादिति भावः ।
[3] उन्दीक्लेदने इति धातोर्निष्पन्नः उदकशब्दः श्रीगुरुकृतब्रह्मोपदेशेन आपादमस्तकं रोमाञ्चितः क्लिन्नश्च भवेदिति एषा संज्ञाऽपि तस्य युक्तेति भावः ।

परमानन्द एवोक्तः पादशब्देन निर्मलः ।
ज्ञानं चोदकशब्देन तयोरैक्यं तु दीक्षया ॥

1311 [तत्सम्पन्नस्य भेदज्ञानविनाशः]

परसंवित्प्रकाशात्मा परमानन्दभावनाम् ।
अधिगम्य महायोगी न भेदं क्वापि पश्यति ॥

---

पादशब्देन मलरहितब्रह्मानन्द उच्यते । उदकशब्देन ब्रह्मस्वरूपज्ञानमुच्यते । हृत्कमलमध्यस्थचिद्दीक्षया तयोरैक्यं तु—

" विज्ञानमानन्दं ब्रह्म "

इति श्रुतेः । धर्मधर्मिस्वरूपानन्दज्ञानैक्यं दीक्षापादोदकमिति स्मृतमित्यर्थः ॥

अथ—

" यतो वाचो निवर्तन्ते ।
अप्राप्य मनसा सह ।
[1]आनन्दं ब्रह्मणो विद्वान् ।
न बिभेति कुतश्चन ॥"

इति तैत्तिरीयोपनिषद्वाक्यानुसारेण तत् ज्ञानानन्दमेव विशेषयति—

महायोगी तत्पादोदकदीक्षासम्पन्नः शिवयोगी परसंवित्प्रकाशात्मा परब्रह्मस्वरूपज्ञानप्रकाशस्वरूपवान् सन् परमानन्दभावनां अधिगम्य

[1] आनन्दं विद्वान्—आनन्दानुभववानित्यर्थः ।

1312 [तस्य सर्वविघ्नबन्धकाकाङ्क्षानाशसिद्धि]

देशकालाद्यवच्छेदविहीनं नित्यनिर्मलम् ।
आनन्दं प्राप्य बोधेन नान्यत् काङ्क्षति संयमी ॥

1313 [स्थलनिगमनम्]

ज्ञानामृतमपि स्वच्छं गुरुकारुण्यसम्भवम् ।
आस्वाद्यरमते योगी संसारामयवर्जितः ॥

(81) इति दीक्षापादोदकस्थलम् (11-1)

---

भेदं नित्यपरिपूर्णज्ञानानन्दभेदं क्वापि न पश्यति । तद्बाह्यदेशाभावात् इति ॥

अत एव नान्यत् काङ्क्षतीत्याह—

संयमी शिवयोगी देशकालाद्यवच्छेदविहीनं देशकालाकारेषु विच्छेदराहित्येन विद्यमानंनित्यनिर्मलमानन्दं ब्रह्मानन्दं बोधेन ब्रह्मज्ञान-स्वरूपेणैव प्राप्य अन्यत् न काङ्क्षति । तद्व्यतिरिक्तवस्त्वन्तराभावात्[1] इति ॥

अथ दीक्षापादोदकस्थलं समापयति—

गुरुकृपोद्भूतं निर्मलं ब्रह्मज्ञानामृतं आस्वाद्य दीक्षापादोदकसम्पन्नः शिवयोगी भवरोगमुक्तः[2] सन् स्वस्वरूपे क्रीडते इत्यर्थः ॥

---

[1] वस्त्वन्तरादर्शनादिति भावः ।

[2] इयं मूले संसारामयवर्जितः इत्यस्य व्याख्या ।

39

## (82) अथ शरणस्थले शिक्षापादोदकस्थलम् (11-2)

1315 [तत्स्वरूपम्]

गुरुशिष्यमयं ज्ञानं शिक्षा योगिनमीर्यते ।
तयोः समरसत्वं हि शिक्षापादोदकं स्मृतम्

---

अथ—

" मायामयमिदं द्वैतं
अद्वैतं परमार्थतः ।
विकल्पो विनिवर्तेत
कल्पितो यदि केनचित् ॥
उपदेशादयं वादः
ज्ञाते द्वैतं न विद्यते ॥"

इति मुण्डकश्रुत्यनुसारेण तद्दीक्षापादोदकसम्पन्नस्य शिवयोगिनः शिक्षापादोदकं सूत्रद्वयेन कथयति—

1314 [शिक्षापादोदकस्थलम्]

या शिक्षा गुरुशिष्यमयं ज्ञानं पूर्ववत् पादोदकशब्दवाच्यगुरुशिष्ययोः तन्मयीभूतज्ञानं योगिनं तद्दीक्षापादोदकसम्पन्नशिवयोगिनं ईर्यते प्रेरयति[1]

---

[1] 'ईर गतिप्रेरणयोः' इति धातुपाठः ।

1316 [तल्लाभोपायः]

मथितात् शास्त्रजलधेः युक्तिमन्थानवैभवात् ।
गुरुणा लभ्यते बोधसुधा सुमनसां गणैः ॥

---

तयोः तच्छिक्षाज्ञानयोः समरसत्वं हि सामरस्यं हि शिक्षापादोदकमिति स्मृतं इत्यर्थः ॥

अथैवंरूपज्ञानामृतं कैः केन कस्मात् लभ्यते ? इत्यत्राह—

युक्तिमन्थानवैभवात् युक्तिरूपमथनदण्डसामर्थ्यात् मथितात् शास्त्रजलधेः निगमागमात्मकवीरशैवशास्त्रसमुद्रात् गुरुणा शिक्षाचार्येण बोधसुधा शिवाद्वैतज्ञानामृतं सुमनसां गणैः दीक्षापादोदकस्वीकारेण शुद्धचित्तानां शिवयोगिनां समूहैः लभ्यते, यथा सुरगुरोः समुद्रमथनविचारेण सुराणां सुधा प्राप्ता तथेत्यर्थः ॥

अथ तस्य शिवयोगिनः धर्मधर्मिस्वरूपचिदानन्दयोः[1] तत्त्वं सूत्रत्रयेण विशेषयति—

---

[1] धर्मिस्थाने चित्पदार्थः धर्मस्थाने आनन्दपदार्थश्चेति ज्ञेयम् ।

1317 [तल्लाभेन परमानन्दप्राप्तिः]

ज्ञानचन्द्रसमुद्भूतां परमानन्दचन्द्रिकाम् ।
पश्यन्ति परमाकाशे मुक्तिरात्रौ महाधियः ॥

1318 [तेन प्राप्यान्तराभावः]

दृष्टे तस्मिन् परानन्दे देशकालादिवर्जिते[1] ।
द्रष्टव्यं विद्यते नान्यत् श्रोतव्यं ज्ञेयमेव वा ॥

---

महाधियः सूक्ष्मदृशः शिवयोगिनः मुक्तिरात्रौ परमुक्तिलक्षणगाढान्धकारवति पराकाशे परब्रह्मणः सद्रूपचिद्राकाशे ज्ञानचन्द्रसमुद्भूतां चिच्चन्द्रभित्तितः आविर्भूतां परमानन्दमयीं चन्द्रिकां ज्योत्स्नां पश्यन्ति स्वस्वरूपत्वेन परामृशन्तीत्यर्थः ॥

अथैवं अपारपरमानन्दचन्द्रिकायां दृष्टायां अन्यत् द्रष्टव्यं श्रोतव्यं च नास्तीत्याह—

देशकालाद्यखण्डिते[1] तस्मिन् परानन्दे दृष्टे सति[2] अन्यत् द्रष्टव्यं चक्षुषा द्रष्टव्यं श्रवणेन श्रोतव्यं ज्ञेयमेव वा ज्ञातुं योग्यं वा न विद्यते। सर्वस्यापि पदार्थस्य तत्कार्यत्वेन तदभिन्नत्वात् इत्यर्थः ॥

1319 [तस्य च काङ्क्षान्तराभावः]

अथ नान्यच्च काङ्क्षतीत्याह—

---

1 देशकालाद्यविषये इति भावः ।
2 दृष्टे सति=अनुभूते सति इत्यर्थः ।

आत्मानन्देन तृप्तस्य का स्पृहा विषये सुखे ।[1]
गङ्गाजलेन तृप्तस्य कूपतोये कुतो रतिः ? ॥[2]

1320 [तल्लाभस्य निस्सीमतापादकत्वम् ]

यस्मिन् अप्राप्तकल्लोले सुखसिन्धौ निमज्जति ।
सामरस्यान्महायोगी तस्य सीमा कुतो भवेत् ॥

1321 [स्थलनिगमनम् ]

गुरुप्रसादचन्द्रेण निष्कलङ्केन चारुणा ।[3]
यन्मनःकुमुदं नित्यं बोधितं तस्य को भ्रमः ॥

(82) इति शिक्षापादोदकस्थलम् (11-2)

---

आत्मानन्देन निजानन्देनेत्यर्थः । शिष्टं स्पष्टम् ॥

ननु निजानन्देन तृप्तस्य परयोगिनः परिमितिः अस्ति न वा ? इत्यत्राह—

स्पष्टम् ॥

ननु अस्य योगिनः कदाचित् कुत्रचिद्वा भेदभ्रान्तिः सम्भवति किम् ? इत्यत्र वदन् शिक्षापादोदकस्थलं समापयति—

नित्यबोधितं निरन्तरविकसितमित्यर्थः ॥ शिष्टं स्पष्टम् ॥

---

[1] विषये सुखे=वैषयिके सुखे इत्यर्थः ।

[2] उपयोगभेदेन द्वयोरप्यावश्यकता वर्तते एव । अथापि प्रकृते तदन्वयो नास्तीति भावः ।

[3] 'सुन्दरं रुचिरं चारु' इत्यमरः ।

## (83) अथ शरणस्थले ज्ञानपादोदकस्थलम् (11-3)

1323 [आनन्दज्ञानसामरस्यस्यैव तत्स्वरूपत्वम् ]

तदैक्यसम्पदानन्दज्ञानं ज्ञानगुरुर्मतः ।
तत्सामरस्यं शिष्यस्य ज्ञानपादोदकं विदुः ॥

---

1322 [ज्ञानपादोदकस्थलम् ]

अथ—

" नाध्यक्षं[1] नापि तल्लिङ्गं[2]
न शाब्दमपि शाङ्करम् ।[3]
ज्ञानमाभाति विमलं
सर्वथा सर्ववस्तुषु ॥"

इति [4]मृगेन्द्रवचनानुसारेण तच्छिक्षापादोदकसम्पन्नस्य सुलभं ज्ञानपादोदकं प्रकाशयति—

आनन्दज्ञानं—

" विज्ञानमानन्दं ब्रह्म "

इति श्रुतिप्रसिद्धपादोदकशब्दवाच्यानन्दज्ञानमेव ज्ञानगुरुरिति मतः संमतः ॥ तदैक्यसम्पदा तदानन्दज्ञानयोः ऐक्यसम्पत्त्या तत्सामरस्यं तयोः

---

[1] न प्रत्यक्षम् ।
[2] नाप्यनुमानम् ।
[3] ब्रह्मविषयकम् ।
[4] मृगेन्द्रागमः ।

1324 [तदानन्दज्ञानस्य प्रकाशमयचन्द्रस्वरूपणम् ]

अविद्याराहुनिर्मुक्तः ज्ञानचन्द्रः सुनिर्मलः ।
प्रकाशते पराकाशे[1] परानन्दमहाद्युतिः ॥

1325

अज्ञानमेघनिर्मुक्तः पूर्णज्ञानसुधाकरः ।
आनन्दजलधेर्वृद्धिं अनुपश्यन् विभासते ॥

---

समरसभावः शिष्यस्य शिक्षापादोदकसम्पन्नस्य शिवयोगिनः ज्ञानपादोदकं सत् विदुः जानन्तीत्यर्थः ॥

अथ तद् ज्ञानचन्द्रप्रकाशं सूत्रत्रयेणोपपादयति—

अज्ञानलक्षणराहुः स्पर्शरहितः अत्यन्तनिर्मलः मलवासनया लेशतोऽप्यसंस्पृष्टः इति यावत् । ज्ञानचन्द्रः शिवाद्वैतज्ञानचन्द्रः परमानन्दमहाद्युतिः परमानन्दरूपमहाकला प्रकाशते सन् पराकाशे सर्वोत्कृष्टहृदयाकाशे प्रकाशते राजते इत्यर्थः ॥

तर्हि अयं ज्ञानचन्द्रः किं वर्धयति ? इत्यत्राह—

"नाहं शिवः" इति अज्ञानावरणनिर्मुक्तः अण्डरसन्यायेन अहमिति विश्वतः परिपूर्णज्ञानचन्द्रः स्वतन्त्रतालक्षणनिजानन्दसमृद्धस्य वृद्धिं अनुपश्यन् विभाति इत्यर्थः ॥

---

[1] ज्ञानिनां हृदयप्रदेश एवात्र सत्यप्रकाशकत्वात् पराकाशशब्देनोच्यते ।
[2] समसमकाले एव भासयन् इत्यर्थः ।

1326 [तादृशज्ञानचन्द्रोदयेन प्राप्यसुखवर्णनम् ]

ज्ञानचन्द्रोदये जाते ध्वस्तमोहतमोभराः ।[1]
पश्यन्ति परमां काष्ठां योगिनः सुखरूपिणीम् ॥

[तस्यैव ज्ञानस्य सूर्यत्वेन रूपणम् ]

मायारजन्या विरमे[2] बोधसूर्ये प्रकाशिते ।
निरस्तसर्वव्यापारः चित्रं स्वपिति संयमी ॥

---

अथ एवंविधज्ञानचन्द्रोदये के किं पश्यन्ति ? इत्यत्राह—

शिवज्ञानचन्द्रोदये जाते सति विनष्टाज्ञानान्धकारभराः शिवयोगिनः परमानन्दस्वरूपिणीं परमां काष्ठां स्वस्वरूपस्थितिं पश्यन्ति इत्यर्थः ॥

एवं चन्द्रत्वेन वर्णितं शिवज्ञानं सूर्यत्वेन वर्णयन् विचित्रं दर्शयति—

लोके तावत् निशावसाने सूर्योदये जाते सति सर्वोऽपि लोको विनिद्रः सन् सव्यापारो भवति । मायारूपनिशावसाने चिदादित्ये प्रकाशिते सति संयमी योगिजनः निरस्तव्यापारः सन् स्वपितीति चित्रम् ॥

उक्तोऽयमर्थः श्रीभगवद्गीतायाम्—

---

[1] मुमुक्षोः इदंतमः भारात्मकं भवेत् । भविनां इदमेव स्वरूपम् ।
[2] रजन्यविरमे (ख)

1328 [तेनानन्दाविर्भावकालनिर्देशः]

अनाद्यविद्याविच्छित्तिवेलायां परयोगिनः ।
प्रकाशते परानन्दः प्रपञ्चेन विनाकृतः ॥

1329 [तदानन्दे निरूपाधिकत्वोपपत्तिः]

नित्यानन्दे निजाकारे विमले परतेजसि ।
विलीनचेतसां पुंसां कुतो विश्वविकल्पना ॥

---

"या निशा सर्वभूतानां
तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि
सा निशा पश्यतो मुनेः ॥"[1]

इति ॥

अथ तस्य परानन्दाविर्भावः कदा ? इत्यत्राह—

अनाद्यविद्याविच्छित्तिवेलायां मायारजन्याः विरम एव प्रपञ्चेन विनाकृतः निरुपाधिकपरमानन्दाविर्भावः इत्यर्थः ॥

ननु शिवयोगिनः प्रपञ्चे[2] एव सन्तीति कथं निरुपाधिकानन्दाविर्भावः ? इत्यत्राह—

नित्यानन्दस्वरूपं सत् विमले विमले निजाकारे निजस्वरूपवति

---

[1] अत्र 'अपश्यतो मुनेः' इत्यपि छेदः ।
[2] मायामये प्रपञ्चे इत्यर्थः ।

1330 [तदानन्दस्य निरुपमत्वप्रतिपादनम्]

कुतो ब्रह्मा कुतो विष्णुः कुतो रुद्रः कुतो रविः ।
साक्षात्कृतपरानन्दज्योतिषः साम्यकल्पना ॥

1331

अपरोक्षपरानन्दविलासस्य महात्मनः ।
ब्रह्मविष्ण्वादयो देवा विशेषाः सुखबिन्दवः ॥[4]

---

परतेजसि चिदादित्ये विलीनचित्तानां[1] पुंसां सत्पुरुषाणां शिवयोगिनां विश्व-कल्पना कुतः ? इत्यर्थः ॥

अथ ज्ञानपादोदकसम्पन्नस्य शिवयोगिनः पूर्णानन्दस्य ब्रह्मादीना-मप्यानन्दो न समः इति सूत्रद्वयेन कथयति —

ब्रह्मादीनामानन्दस्य साक्षात्कृतपरानन्दज्योतिषः शिवयोगिनः आनन्दांशलेशत्वात्[2] इति भावः ।

"अस्यैवानन्दस्य अन्यानि
भूतानि मात्रामुपजीवन्ति ।"[3]

इति श्रुतेः योगिशिवयोरभेदात् इति ॥

इममर्थमेव स्फुटयति—

---

[1] चित्तलयः खलु सर्वेषां अध्यात्मशास्त्राणां परमं ध्येयम्—इति ।
[2] कलालेशरूपत्वात् इति यावत् ।
[3] मात्राशब्दः आंशिककलावाच्येत्र ।
[4] अंशरूपाः इति यावत् ।

1332 [स्थलनिगमनम्]

यन्मात्रासहितं[1] लोके वाञ्छन्ति विषयं नराः ।
तदप्रमेयमानन्दं परमं को न वाञ्छति ? ॥

(83) इति ज्ञानपादोदकस्थलम् (11-3)

---

(84) अथ शरणस्थले क्रियानिष्पत्तिस्थलम् (11-4)

---

महात्मनः ज्ञानपादोदकसम्पन्नस्य शिवयोगिनः इत्यर्थः ॥ शिष्टं स्पष्टम् ॥

अथ तद् ज्ञानानन्दमेव विशिष्य ज्ञानपादोदकस्थलं समापयति—

नराः जनाः लोके इहलोके यन्मात्रासहितं यस्य चिदानन्दस्यांशेन सहितं विषयसुखं वाञ्छन्ति तदप्रमेयं तस्य विषयज्ञानसुखस्य अप्रमेयं अपरिमितं परममानन्दं[2] ब्रह्मानन्दं कः न वाञ्छति ? सर्वेऽपि वाञ्छन्तीत्यर्थः ॥

1333 [क्रियानिष्पत्तिस्थलम्]

अथ—

---

[1] अत्र मात्राशब्दः कलावाची । तदेव उत्तरत्र व्याख्यायां अंशशब्देन विव्रियते ।

[2] परानन्दं (ख)

1334 [तत्सम्पन्नस्य कृतकृत्यता]

परकाये क्रियापत्तिः कल्पितैव प्रकाशते ।
रज्जौ भुजङ्गवद्यस्मात् क्रियानिष्पत्तिमानयम् ॥

1335 [तस्य कर्मफलासङ्गता]

ज्ञानिनो यानि कर्माणि तानि नो जन्महेतवः ।
अग्निदग्धानि बीजानि यथा नाङ्कुरकारणम् ॥

---

अद्वैतभक्तियुक्तस्य योगिनः सकला क्रिया ।
आस्ते दग्धपटन्यायात्[1] क्रियामात्रं हि न क्रिया ॥

इति वीरतन्त्रवचनानुसारेण एषः ज्ञानपादोदकसम्पन्न एवं रज्जुसर्पन्यायेन[2] कल्पितक्रियानिष्पत्तिमान् इति क्रियानिष्पत्तिस्थलं विशदयति—

परब्रह्मकाये ज्ञानपादोदकसम्पन्ने शिवयोगिनि क्रियानिष्पत्तिः रज्जौ सर्पत्ववत् यस्मात् कारणात् कल्पितैव प्रकाशते, तस्मात् अयं ज्ञानपादोदकसम्पन्नः शिवयोगी क्रियानिष्पत्तिमान् इत्यर्थः ॥

अत एव ज्ञानिनः कर्मफलं नास्तीति षड्भिः सूत्रैः प्रतिपादयति—

ज्ञानिनां कर्मबीजानि ज्ञानाग्निदग्धानि इति वह्निदग्धबीजवत्

---

1 यथा वह्निना दग्धः पटः वातादिना असंस्पृष्टः पटाकारेणैव तिष्ठति, स्पृष्टमात्रेणैव च्युतस्वरूपो भवति तथेत्यर्थः ।

2 रज्जुमेव दृष्ट्वा अयं सर्पः इति भ्रमे जाते द्रष्टृदृष्ट्या सः भ्रमकल्पितः सर्प एव खलु एवमेवेत्यर्थः ।

1336 [तत्कृतकर्मणां निष्फलता]

कर्मणा किं कृतेनापि ज्ञानिनो निरहङ्कृतेः ।
विक्रिया प्रतिबिम्बस्था किं करोति हिमद्युतेः ॥

1337 [तत्क्रियमाणकर्मणां केवलप्रतिभासमात्रता]

चन्द्रस्य मेघसम्बन्धात् यथा गमनकल्पना ।
तथा देहस्य सम्बन्धात् आरोप्या स्यात् क्रियाऽऽत्मनः ॥

---

नाङ्कुरकारणमित्यर्थः ।[1]

अस्मिन् अर्थे—

"ज्ञानाग्निः सर्वकर्माणि
भस्मसात्कुरुतेऽर्जुन ! ।"

इति भगवदुक्तिः ॥

तस्मात् ज्ञानिनः [2]कृतेनापि कर्मणा प्रयोजनं नास्तीत्याह—

'अहं करोमि' इति[3] मूलाहङ्कारशून्यस्य शिवज्ञानानिनः कृतेनापि कर्मणा प्रयोजनं नास्ति । यथा प्रतिबिम्बस्य विकारः बिम्बरूपस्य चन्द्रस्य नास्ति । ज्ञानिनः अप्रतिबिम्बचैतन्यरूपत्वात्[4] इति भावः ॥

अथ ज्ञानिनि प्रतीयमाना क्रिया कल्पितेत्यत्र दृष्टान्तमाह—

---

[1] सर्वस्यापि कर्मणः बीजवत् कर्मान्तरोत्पादकस्वरूपयोग्यतासत्तायाः अनिवार्यतया सृष्टौ सत्त्वात् ।

[2] जीविकार्थमनिवार्यतया कृतेनापीति शेषः ।

[3] सर्वस्यापि कर्मणः मूलकर्तृत्वं दैवस्यैवेति स्थितेः, तत्र अहम्भावः तत्रैव बन्धकः इति भावः ।

[4] शुद्धचैतन्यस्वरूपत्वादित्यर्थः ।

1338 [तस्य अलिप्तता]

ज्ञानी कर्मनिरूढोऽपि लिप्यते न क्रियाफलैः ।
घृतादिना यथा जिह्वा भोक्त्री चापि न लिप्यते ॥[3]

1339 [तस्य कर्मलेपाभावे हेतुः]

निरस्तोपाधिसम्बन्धे जीवे या या क्रियास्थितिः ।
सा सा प्रतीतिमात्रेण निष्फला चात्र लीयते ॥

---

स्पष्टम् ॥

अथ कर्म कुर्वतोऽपि[1] ज्ञानिनः कर्मलेपो नास्तीत्यत्र दृष्टान्तमाह—

[2]निरूढः तत्परः इत्यर्थः । शिष्टं स्पष्टम् ॥

ननु जिह्वायाः जलतत्त्वमयत्वेन अङ्गुल्यादिवत् घृतादिलेपो नास्ति। ज्ञानिनः कस्मात् कर्मलेपो नास्ति ? इत्यत्राह—

निवृत्तमूलाहङ्कारसम्बन्धे चिद्रूपे जीवन्मुक्ते या या क्रियास्थितिरस्ति, सा सा दग्धरज्जुन्यायेन प्रतीतिमात्रेण स्थित्वा निष्फला सती स्वात्मन्येव लीयते इत्यर्थः । कर्मयेपस्य अहङ्कारो मूलमिति[4] शिवज्ञानिनः तदभावात् कर्मलेपो नास्तीति भावः ॥

---

1 कुर्वन्तोऽपि (ख)

2 तत्परत्वार्थे निरूढशब्दः तान्त्रिकः ।

3 क्रियाफलैः स्वादुभावादिभिः जिह्वा सम्बध्यते एव । तथापि लेपमात्रं निषिध्यते इति ज्ञेयम् ।

4 अहङ्कारस्यैव बन्धकाभिमानमूलत्वात् इति भावः ।

1340 [तस्य कर्मसामान्यस्यैव अनिरासे हेतुः]

गच्छन् तिष्ठन् स्वपन् वाऽपि न निष्कर्मास्ति कश्चन ।[1]
स्वभावो देहिनां कर्म ज्ञानिनां तत्तु निष्फलम् ॥

1341 [स्थलनिगमनम्]

परिपूर्णमहानन्दभाविनः शुद्धचेतसः ।
न भवेत् कर्मकार्पण्यं[3] नानाभोगफलप्रदम् ॥

(84) इति क्रियानिष्पत्तिस्थलम् (11-4)

---

ननु ज्ञानिनः कर्मलेपो यथा नास्तीत्युच्यते, तथा तस्य कर्मैव नास्तीति कुतो नोच्यते ? इत्यत्राह—

अनेन रज्जुभुजङ्गन्यायेन शिवयोगिनि क्रियानिष्पत्तिः[2] आरोपितेत्येतत् परास्तम् । कर्म देहिनां स्वभावः इत्युक्तत्वात् इति ॥

अथ क्रियानिष्पत्तेः सर्वदेहिस्वभावत्वेऽपि, ज्ञानिनः कर्मलेपो नास्तीति वदन् क्रियानिष्पत्तिस्थलं समापयति—

निर्मलान्तःकरणस्य नित्यपरिपूर्णपरानन्दानुभाविनः शिवयोगिनः नानाविधभोगफलप्रदं पुण्यपापलक्षणकर्मपीडनं न भवेत् न स्यात् इत्यर्थः ॥

---

[1] अकर्मत्वस्य केवलं जीवहीनशवलक्षणत्वात् ।
[2] ते तु निष्पत्तिपदस्य अर्थान्तरं वर्णयन्ति ।
[3] कार्पण्यपदं पीडनपर्यायमिति भावः ।

## (85) अथ शरणस्थले भावनिष्पत्तिस्थलम् (11-5)

---

1343 [तत्सम्पन्नयोगिस्वरूपम्]

भावः प्रतीयमानोऽपि [2]परकाये तु कल्पितः ।
शुक्तौ रजतवद्यस्मात् भावनिष्पत्तिमानयम् ॥

---

1342 [भावनिष्पत्तिस्थलम्]

अथ—

"चिरेण साध्यमानस्य
भावुकैः विगतश्रमैः ।[1]
स्थिरभावो हि भावस्य
भावनिष्पत्तिरुच्यते ॥"

इति किरणतन्त्रवचनानुसारेण, तत्क्रियानिष्पत्तिमान् शिवयोगी शुक्तिरजतन्यायेन भावनिष्पत्तिमान् इति प्रतिपादयति—

परकाये क्रियानिष्पत्तिमति चित्काये प्रतीयमानो भावः यस्मात् शुक्तिरजतवत् कल्पितः तस्मात् अयं क्रियानिष्पत्तिमान् शिवयोगी भावनिष्पत्तिमान् इत्यर्थः ॥

1344 [भावस्थापनाविधिः]

अथ ज्ञानयोगिनः भावसम्बन्धाभावेऽपि सच्चिदानन्दाकारे[3] परशिवे

---

[1] विगतक्रमैः (ख)
[2] अत्र पर शब्दः पूज्यवाची । चित्काये इति व्याख्यानात् ।
[3] सच्चिदानन्दस्वरूपे (ख)

भावेन नास्ति सम्बन्धः केवलज्ञानयोगिनः ।
तथापि भावं कुर्वीत[1] शिवे संसारमोचके ॥

1345 [तत्प्रयोजनम्]

परिपूर्णप्रबोधेऽपि भावं शम्भौ न वर्जयेत् ।
भावो हि निहितस्तस्मिन् भवसागरतारकः ॥

---

भावः स्थापनीयः इति पञ्चभिः सूत्रैः प्रतिपादयति—

स्पष्टम् ॥

ननु परिपूर्णज्ञानिनः किं भावेन ? इत्यत्राह—

परिपूर्णसदानन्दबोधस्वरूपे शम्भौ भावं न वर्जयेत् । कुतः ? इत्यत्राह—तस्मिन् शम्भौ स्थापितो भावः संसारसागरतारकः इति हि प्रसिद्धः इत्यर्थः ॥ अनेन अस्य भावस्य अर्थक्रियाकारित्वेन शुक्तिरजत-वैलक्षण्यं सूचितम् ॥ तस्मात् शम्भौ भावः स्थिरीकरणीयः इति भावः ॥

1346 [तद्भावस्थितिकालः]

तर्हि सः भावः नित्यः किम् ? इत्यत्राह—

---

[1] भावेन विषयीकुर्यात् इत्यर्थः ।

40

निवर्त्य जन्मजं दुःखं भावः शैवो निवर्तते ।
यथा काष्ठादिकं दग्ध्वा स्वयं शाम्यति पावकः ॥

1347

प्रकाशिते शिवानन्दे तद्भावैः किं प्रयोजनम् ।
सिद्धौ साध्ये चिरेणापि साधनैः किं प्रयोजनम् ॥

1348 [निर्भावयोगिस्थितिः]

एकीकृते शिवे भावे ज्ञानेन सह संयमी ।
विस्मितात्मसमावेशः शिवभावे विभासते ॥

---

जन्मजं दुःखं भवरोगं[1] इत्यर्थः । अनेन अनित्यत्वं उक्तं भवति ॥ शिष्टं स्पष्टम् ॥

अथ भवरोगनिवृत्त्यनन्तरं नित्यानन्दे प्रकाशिते सति शिवभावैः प्रयोजनं नास्ति ।[2] तत्र दृष्टान्तः—बहुकालेन साध्ये सिद्धे सति साधनैर्यथा प्रयोजनं नास्ति तथा इत्यर्थः ॥

तर्हि भावलयानन्तरं योगी कथं भासते ? इत्यत्राह—

---

[1] भवरोगः (ग)

[2] प्राकृतया बुद्ध्या शिवभावस्य सम्पादनीयतायां आवश्यकता नास्तीत्यर्थः ।

1349 [स्थलनिगमनम्]

न भावेन विना ज्ञानं न भावो ज्ञानमन्तरा ।
मोक्षाय कारणं प्रोक्तं तस्मादुभयमाश्रयेत् ॥

## (85) भावनिष्पत्तिस्थलम् (11-5)

---

कार्यनाशः कारणात्मना स्थितिरेवेति, भावे वृत्तिज्ञानेन सह शिवैकलोलीभूते सति भावनिष्पत्तिमान् शिवयोगी आश्चर्यसङ्कल्पित-स्वस्वरूपसमावेशवान् सन् "शिवोऽहम्" इति भावे प्रकाशते इत्यर्थः ॥

अथ भावज्ञानयोः अभेदमुपपाद्य भावनिष्पत्तिस्थलं समापयति—

भावेन विना वृत्तिज्ञानं नास्ति तेन विना भावो नास्ति, इति भावज्ञानयोः अन्योन्यकारणत्वं प्रोक्तम् । तस्मात् मोक्षाय तदुभयं[1] आश्रयेदित्यर्थः ।

---

1 शिवभावः शिवज्ञानं चेत्युभयमपि इत्यर्थः ।

## (86) अथ शरणस्थले ज्ञाननिष्पत्तिस्थलम् (11-6)

1351 [तत्सम्पन्नस्वरूपम्]

ज्ञानस्य व्यवहारोऽपि ज्ञेयाभावात् स्वभावतः ।
स्वप्नवत् ज्ञाननिष्पत्त्या ज्ञाननिष्पन्न इत्यसौ ॥

---

1350 [ज्ञाननिष्पत्तिस्थलम्]

अथ—

" यथा मनः परे तत्त्वे
लब्धलक्ष्यं विलीयते ।
तथा ह्यशेषविज्ञानं
विनाशमुपगच्छति ॥"

इति [1]निश्वासकारिकानुसारेण सोऽयं [2]भावनिष्पन्न एव स्वप्नवत् ज्ञाननिष्पत्तिमानयम् इति कथयति—

व्यवहारे विश्वव्यावहारिकज्ञानस्य स्वभावतः स्थिरत्वेन ज्ञेयाभावात् विषयाभावात् असौ भावनिष्पत्तिमान् शिवयोगी अस्थिरस्वप्नसदृशज्ञाननिष्पत्त्या ज्ञाननिष्पत्तिमान् इति प्रोच्यते इत्यर्थः ॥

1352

अथ तदेवोपपादयति—

---

[1] निश्वासकारिका नाम तन्त्रग्रन्थः ।

[2] प्रथमं शास्त्रानुसारेण कल्पितो भावः । साधनानन्तरं तु अनुभूतस्वरूपात्मको भावः इति बोध्यम् ।

स्वप्नजातं यथा ज्ञानं सह स्वार्थैर्निवर्तते ।
तथाऽऽत्मनि प्रकाशे तु ज्ञाने ज्ञेयं निवर्तते ॥

1353 [तस्य ज्ञेयान्तरनिवृत्तिः]

परिपूर्णे महानन्दे परमाकाशलक्षणे ।[1]
शिवे विलीनचित्तस्य कुतो ज्ञेयान्तरे कथा ॥

1354 [तदधिगतज्ञानस्वरूपम् ]

अखण्डानन्दसंवित्तिस्वरूपं ब्रह्म केवलम् ।
मिथ्या तदन्यदित्येषां स्थितिः ज्ञानमिहोच्यते ॥

---

स्वप्नोत्पन्नं ज्ञानं यथा स्वविषयैः सह निवर्तते[2] तथा स्वस्वरूपे प्रकाशिते सति[3] जाग्रद्दशाज्ञानेन सह ज्ञेयं विश्वं निवर्तते इत्यर्थः ॥

ननु स्वस्वरूपे प्रकाशिते ज्ञेयं कस्मात् निवर्तते ? इत्यत्राह—

स्पष्टम् ॥

ननु ज्ञाननिष्पत्तिसम्पन्नस्य शिवयोगिनः ज्ञानं कीदृशम् ? इत्यत्राह—

ब्रह्म परशिवाख्यं ब्रह्म केवलाखण्डानन्दसंवित्स्वरूपं, तदन्यत्

---

[1] "आकाशशरीरं ब्रह्म । सत्यात्मप्राणारामं मनआनन्दम् । शान्तिसमृद्धममृतम् ।" इति हि श्रुतिः ।
[2] स्वप्ननिवृत्त्यनन्तरं जाग्रद्दशायामित्यर्थः ।
[3] तुरीयावस्थायामिति यावत् ।

1355

सत्तात्मनाऽनुवृत्तं यत् घटादिषु परं हि तत् ।
व्यावर्तमाना मिथ्येति स्थितिः ज्ञानमिहोच्यते ॥

1356 [ब्रह्माद्वैतशिवाद्वैतयोः वैलक्षण्यम् ]

अकारणमकार्यं यत् अशेषोपाधिवर्जितम् ।
तद्ब्रह्म तदहं चेति निष्ठा ज्ञानमुदीर्यते ॥

---

तद्व्यतिरिक्तं मिथ्यैवैतदिति भासमानं जगज्जालं मृषा[1] इति एषां स्थितिः ज्ञानम् इह ज्ञाननिष्पत्तिस्थलं कथ्यते इत्यर्थः ॥

अथ विशेषलक्षणं दर्शयति—

"सदेव सोम्येदमग्र आसीत्"

इति श्रुतेः सत्तात्मना सद्रूपब्रह्मणा परं अव्ययत्वात् परेषु पटादिषु अनुवृत्तं अनुगतं यत् नामरूपं अस्ति तत् मिथ्येति व्यावर्तमाना निवार्यमाणा स्थितिः इह ज्ञानमित्युच्यते इत्यर्थः ॥

नन्वेवं चेत् [2]आविद्यकब्रह्माद्वैतापेक्षया अस्य[3] स्वतंत्रशिवाद्वैतस्य को विशेषः ? इत्यत्राह—

---

[1] मिथ्या-सत्यशब्दयोः व्यवहारे यथा नैकस्वरूपत्वम्, तथैव परमार्थेऽपि नैकस्वरूपत्वम् । विषयभेदेन शब्दार्थस्यापि वैलक्षण्यस्य अनुभवसिद्धत्वात् ।

[2] इदं शाङ्कराद्वैतम् ।

[3] इदं शक्तिविशिष्टाद्वैतम् ।

1357 [स्थलनिगमनम्]

ज्ञाताऽप्यहं ज्ञेयमिदं इति व्यवहृतिः कुतः ।
अभेदब्रह्मसारस्ये निरस्ताखिलवस्तुनि ॥

(१6) इति ज्ञाननिष्पत्तिस्थलम् (11-6)

---

यत् वस्तु—

"न तस्य कार्यं करणं च विद्यते
न तत्समश्चाभ्यधिकश्चदृश्यते ॥"

इति श्वेताश्वतरश्रुतेः कार्यकारणशून्यं सत् अशेषोपाधिवर्जितं तत् ब्रह्म तद्ब्रह्मैव अहं च तदिदमिति भासमानं पाञ्चभौतिकम् चराचरमयं विश्वम्, इति निष्ठादार्ढ्यं ज्ञानमिति उत्कृष्टत्वेन उच्यते इत्यर्थः ॥[1]

अथैवं चिद्रूपब्रह्मणि सामरस्यज्ञाननिष्पत्तिमतः शिवयोगिनः स्वातिरेकेण त्रिपुटीमयप्रपञ्चव्यवहारः नास्तीति वदन् ज्ञाननिष्पत्तिस्थलं समापयति—

"नेह नानाऽस्ति किञ्चन"

इति श्रुतेः निरस्तसमस्तप्रापञ्चिकभेदवदद्वितीयब्रह्मसामरस्ये सति "अहं ज्ञाता" "ज्ञेयमिदम्" इति व्यवहृतिः कुतः ? व्यवहारः कस्मात् ? न कस्मादपि इत्यर्थः ॥

---

[1] जगद्ब्रह्मणोः सामरस्यमेव अनयोः भेदोपाधिरिति भावः ॥

## (87) अथ शरणस्थले पिण्डाकाशस्थलम् (11-7)

1359 [पिण्डाकाशपदार्थः]

यथा पिण्डस्थ आकाशः तथाऽऽत्मा पूर्ण उच्यते ।[3]
एतदर्थविवेको यः पिण्डाकाशस्थलं विदुः ॥

---

1358 [पिण्डाकाशस्थलम्]

अथ—

"एक एव हि भूतात्मा[1]
भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव
दृश्यते जलचन्द्रवत् ॥"[2]

इति अमृतबिन्दूपनिषद्वचनानुसारेण ज्ञाननिष्पत्तिसम्पन्नस्य मुख्मीभूत-पिण्डाकाशस्वरूपं सूत्रत्रयेण निरूपयति—

पूर्णः आकाशः यथा पिण्डे तिष्ठति, तथा पिण्डस्थः आत्मा पूर्णः उच्यते । अस्येति शेषः । अस्य ज्ञाननिष्पत्तिसम्पन्नस्य शिव-योगिनः एतदर्थविवेकोऽस्ति तत् पिण्डाकाशस्थलं सत् जानन्तीत्यर्थः ॥

1360

अथ व्यतिरेकमुखेनाह—

---

1 "भूतात्मा चेन्द्रियात्मा च प्रकृत्यात्मा तथा भवान् । आत्मा च परमात्मा च त्वमेवं पञ्चधा स्थितः ।" इति पौराणिकी उक्तिः ।

2 जलाशये चलत्तरङ्गबहुले दृश्यमानाकाशस्थचन्द्र इवेत्यर्थः ।

3 वृक्षे फलितस्य फलस्य प्रतिबीजं पूर्णमेव खलु तद्वदिति भावः ।

घटोपाधिर्यथाऽऽकाशः परिपूर्णः स्वरूपतः ।
तथा पिण्डस्थितो ह्यात्मा परिपूर्णः प्रकाशते ॥

1361

अन्तःस्थितं पराकाशं शिवमद्वैतलक्षणम् ।
भावयेद्यः सुमनसा पिण्डाकाशः स उच्यते ॥

---

घटोपाधिविशिष्टः आकाशः यथा स्वस्वरूपतः पूर्णः, तथा शरीरस्थः आत्मा स्वसच्चिदानन्दस्वरूपतः परिपूर्णः सन् प्रकाशते इत्यर्थः ॥

अथ पिण्डाशविवेकवन्तं कथयति—

"हृदयाकाशस्थितः महाकाशस्वरूपः ।"
"एक एव रुद्रो न द्वितीयाय तस्थे ।"[1]

इति श्रुतेः, अद्वितीयम् ,

"शिव एको[2] ध्येयः"

इति अथर्वशिखाश्रुतिप्रसिद्धं परशिवं निरालम्बेन मनसा यो ध्यायेत्, स, पिण्डाकाशस्वरूपः इत्युच्यते इत्यर्थः ॥

1362 [तत्सम्पन्नयोगिदेहस्यैव शिवालयत्वम् ]

अथ—

"देहो देवालयः साक्षात्
तत्रास्ते परमः शिवः ।
इति निश्चयसद्भावः
पिण्डज्ञो लिङ्गमुच्यते ॥"

---

[1] न हि स्वरूपद्वयं तस्य वर्तेते इति भावः ।
[2] एक एव (ख)

शिवागारमिदं प्रोक्तं शरीरं बोधदीपितम्[1]
षट्त्रिंशत्तत्त्वघटितं सुमनःपद्मपीठकम् ॥

1363 [तत्र भगवतो भानप्रकारः]

पराकाशस्वरूपेण प्रकाशः परमेश्वरः ।
हृदाकाशगुहालीनः दृश्यतेऽन्तः शरीरिणाम् ॥[3]

---

इति वातुलोत्तरवचनानुसारेण एवं ध्यायतः शरीरमेव शिवागारम् । तस्य च शिवो भासते इति सूत्रद्वयेन कथयति—

शिवादिभूम्यन्तषट्त्रिंशत्तत्त्वमयस्तम्भकुड्यादिनिर्मितं हृत्कमललक्षणपद्मपीठेन युक्तं, ध्यानदीपेन प्रकाशमानं इदं शरीरमेव शिवागारमिति[2] प्रोक्तमित्यर्थः ॥

चिदाकाशस्वरूपेण प्रकाशमानः परमेश्वरः प्राणिनां हृद्गुहाविलीनः सन् उपदेशसिद्धैः दृश्यते इत्यर्थः ॥

1364

कथं दृश्यते ? इत्यत्र पक्षान्तरेण कथयति—

---

[1] ज्ञानप्रकाशेन सर्वत्र व्याप्तमित्यर्थः ।

[2] "भवनागारमन्दिरम्" शिवालयः इति भावः ।

[3] साधकानां उत्तमशरीरसम्पत्सम्पन्नानां अन्तः दृश्यते इत्यर्थः ।

1365

एतत् शिवपुरं प्रोक्तं [1]सप्तधातुसमावृतम् ।
अत्र हृत्पङ्कजं वेश्म सूक्ष्माम्बरमनोहरम् ॥

तत्र सन्निहितं साक्षात् सच्चिदानन्दलक्षणम् ।
नित्यसिद्धः प्रकाशात्मा जलस्थाकाशवत् शिवः ॥

1366 [स्थलनिगमनम्]

[2]अन्तराकाशबिम्बस्थं अशेषोपाधिवर्जितम् ।
घटाकाश इव च्छिन्नं भावयेत् चिन्मयं शिवम् ॥

---

सप्तधातुभिः पूर्यते इति एतच्छरीरमेव शिवपुरं पत्तनमित्यर्थः । अत्र पिण्डलक्षणशिवराजधान्यां सूक्ष्मभूतान्तराकाशरम्यं हृत्कमलमेव अन्तःपुरम् । तत्र नित्यपरिपूर्णत्वेन सिद्धः सन् सच्चिदानन्दरूपपरशिवः हृदयस्य स्वच्छत्वेन जलान्तर्गताकाशवत् साक्षात् प्रकाशरूपः सन् तिष्ठतीत्यर्थः ॥

ननु अपरिच्छिन्नः परमेश्वरः कथं परिच्छिन्नहृत्कमले तिष्ठति ? इत्यत्र वदन्, पिण्डाकाशस्थलं समापयति—

---

[1] त्वङ्मांसरुधिरमेदोमज्जाऽस्थिरेतसः सप्तधातवः ।
[2] आन्तराकाशं (ख)

हृदयाकाशस्थानस्थं समस्तोपाधिरहितं चिन्मयं शिवं घटाकाश इव विच्छिन्नं[1] विभावयेत्[2] इत्यर्थः ॥

(87) इति पिण्डाकाशस्थलम् (11-7)

---

## (88) अथ शरणस्थले बिन्द्वाकाशस्थलम् (11-8)

---

1368 [एतन्निरूपणप्रयोत्थनम् ]

यथाऽऽकाशो विभुर्ज्ञेयः सर्वप्राण्युपरि स्थितः ।[3]
तथाऽऽत्मेत्युपमानार्थं बिन्द्वाकाशस्थलं विदुः ॥

---

1967 [बिन्द्वाकाशस्थलम् ]

अथ—

" सदाशिवादितत्त्वानां
कारणं व्यापकः परः ।
बिन्दुरूपः शिवो ध्येयः
बिन्द्वाकाश इतीर्यते ॥"

इति किरणागमवचनानुसारेण तत्पिण्डाकाशस्थलसम्पन्नस्य सुलभीभूतबिन्द्वाकाशस्थलं निरूपयति—

---

[1] च्छिन्नं (ख)

[2] भावयेत् (ख)

[3] सर्वानपि प्राणिनः प्रति प्रभुत्वं प्राप्य स्थितः इत्यर्थः ।

1369 [एतत्सम्पन्नस्य आत्मसाक्षात्कारप्रकारः]

यथैको वायुराख्यातः सर्वप्राणिगतो विभुः ।
तथाऽऽत्मा व्यापकः साक्षात् सर्वप्राणिगतः स्वयम् ॥

---

सर्वप्राण्युपरिवर्ती आकाशः यथा विभुः सन् ज्ञातुं योग्यः, तथा अस्य पिण्डाकाशस्थलसम्पन्नस्य शिवयोगिनः आत्मा सर्वप्राण्युपरिवर्ती आकाशवद्व्यापकीभूतः सन् विज्ञातुं योग्यः इति उपमानार्थं एव बिन्द्वाकाशस्थलं विदुः जानन्तीत्यर्थः ॥

अथ—

"वायुर्यथैको भुवनं प्रविष्टः
रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा
रूपं रूपं प्रतिरूपो बहिश्च ॥"

इति कठवल्लीश्रुत्युक्त दृष्टान्तपूर्वकं चतुर्भिः सूत्रैः तदेव प्रतिपादयति—

समस्तप्राणिनां प्राणरूपं गतः वायुरेक एव यथा व्यापकः सन् आख्यातः तथा[1] अहम् इति स्वयं साक्षात् सर्वप्राणिगतः आत्मा[2] व्यापकः इत्यर्थः ॥

---

[1] सर्वेष्वपि प्राणिषु नित्यतया अहमिति अबाधितप्रतीतिविषयः इत्यर्थः ।
[2] आप्नोतीति आत्मा इत्येव आत्मशब्दनिरुक्तिः ।

1370

यथा वह्निरमेयात्मा सर्वत्रैकोऽपि भासते ।
तथा शम्भुः समस्तात्मा परिच्छेदविवर्जितः ॥

1371

सर्वेषां देहिनामन्तः चित्ततोयं प्रकाशते ।
तस्मिन् प्रतिफलत्यात्मा शिवो दर्पणवद्विभुः ॥

---

अपरिमितस्वरूपवान् एकोऽग्निः यथा[1]आसारवैद्युतपार्थिववाडवकालाग्निरूपेण विश्वव्यापकः सन् भासते तथा सर्वचैतन्यात्मकः चिद्वह्निरूपपरमेश्वर एक एव देवदानवमानवतिर्यक्स्थावररूपचराचरप्राणिषु अहमिति व्यक्ताव्यक्तरूपेण व्यापकः सन् विराजते इत्यर्थः ॥

समस्तदेहिनां अन्तः—

"चित्तं तु चेतो हृदयम्"
"सलिलं कमलं जलम्"

इति अभिधानकोशप्रसिद्धहृदयकमलं दर्पणवत् प्रकाशते । तस्मिन् चित्तदर्पणे व्यापकीभूतः शिवः आत्मा सन् [2]प्रतिफलति इत्यर्थः ॥

---

[1] 'धारासम्पात आसारः' इत्यमरः । परंतु अत्र वर्षाकाले धारासम्पातसमये या प्रकाशते विद्युत् सैवात्र आसारशब्देनोच्यते, वैद्युतं तु अशनिः इति भेदः ।

[2] अन्तरात्मस्वरूपेणेत्यर्थः ।

1372

एको वशीकृतः संवित्प्रकाशात्मा परात्परः ।
सर्वप्राणिगतो भाति तथापि विभुरुच्यते ॥

1373 [स्थलनिगमनम्]

एक एव यथा सूर्यः तेजसा भाति सर्वगः ।
तथाऽऽत्मा शक्तिभेदेन शिवः सर्वगतो भवेत् ॥

(88) इति भिन्द्वाकाशस्थलम् (11-8)



---

विश्वोत्कृष्टपराशक्त्यपेक्षया श्रेष्ठः चित्प्रकाशात्मा शिवः एक एव सर्वप्राणिहृदयकमलं गत्वा[1] तत्परिमितः सन् भाति । तथा सर्वानुस्यूतत्वात् विभुः इत्युच्यते इत्यर्थः ॥

अथ भिन्द्वाकाशस्थलं समापयति—

सूर्यः एक एव स्वकीयवृष्टिहिमोष्णकिरणतेजसा व्यापकः सन् यथा भाति, तथा शिवस्वरूपः आत्मा स्वकीयेच्छाज्ञानादिशक्तिभिः विश्वव्यापकः सन् आस्ते[2] इत्यर्थः ॥

---

1 'गत्वा' इतिव्यवहारदृष्ट्या उक्तं स्यात् ।
2 तथा भाति चेत्यपि ज्ञेयम् ।

## (89) अथ शरणस्थले महाकाशस्थलम् (11-9)

——०— —

1375 [एतत्सम्पन्नस्य आत्मनि परमात्माभेदसिद्धिः]

पिण्डाण्डस्थं यथाऽऽकाशं न भिन्नं तद्वदात्मनः ।
अभिन्नः परमात्मेति महाकाशस्थलं विदुः ॥

---

1374 [महाकाशस्थलम् ]

अथ—

" व्योमाकारं महासूक्ष्मं
व्यापकं यो न भावयेत् ।
[1]संसारी स भवेल्लोके
बीजकोशक्रिमिर्यथा ॥"

इति देविकालोत्तरवचनानुसारेण उक्तलक्षणबिन्द्वाकाशस्थलसम्पन्नस्य सुलभं महाकाशस्थलं सूत्रद्वयेन कथयति—

ब्रह्माण्डपिण्डाण्डगतं[2] आकाशं यथा न भिन्नम्, तथा अस्य बिन्द्वाकाशसम्पन्नस्य शिवयोगिनः आत्मनः चैतन्यात् परमात्मा भिन्नो न इति अभिन्नमेव महाकाशस्थलं सत्[3] जानन्तीत्यर्थः ॥

---

[1] नित्यसंसारधर्मवान् इत्यर्थः ।

[2] ब्रह्माण्डे पिण्डाण्डे च वर्तमानमिति यावत् ।

[3] अस्तीति मन्वते इत्यर्थः ।

1376

यथा न भिन्नमाकाशं घटेषु च मठेषु च ।
तथाऽण्डेषु[1] च पिण्डेषु स्थितो ह्यात्मा न भिद्यतः ॥

अनिर्देश्यमनौपम्यं अवाङ्मनसगोचरम् ।
सर्वतोमुखसम्पन्नं सत्तानन्दं चिदात्मकम् ॥

1378

कालातीतं कलातीतं क्रमयोगादिवर्जितम् ।
स्वानुभूतिप्रमाणस्थं ज्योतिषामुदयस्थलम् ।

1379

शिवाख्यं परमं ब्रह्म परमाकाशलक्षणम् ।
लिङ्गमित्युच्यते सद्भिः यद्विना न जगत्स्थितिः ॥

---

1377 [महालिङ्गस्यैव महाकाशत्वम् ]

स्पष्टम् ॥

अथ महालिङ्गमेव महाकाशमिति सूत्रत्रयेण कथयति—-

कलातीतं अष्टत्रिंशत्कलातीतं क्रमयोगविवर्जितं उत्पत्त्यादिक्रमयोग-रहितम् ज्योतिषां उदयस्थलं अर्कादिज्योतिषां उत्पत्तिस्थानं 'अहम्'

---

[1] ब्रह्माण्डेषु इत्यर्थः ।

41

1380

परमाकाशमव्यक्तं प्रबोधानन्दलक्षणम् ।
लिङ्गज्योतिर्मयं प्राहुः [1]लीयन्ते यत्र योगिनः ॥

1381

[2]संविदेव परा काष्ठा परमानन्दरूपिणी ।
तामाहुः परमाकाशं मुनयो मुक्तसंशयाः ॥

---

इति स्वानुभूतिप्रमाणगम्यं इत्यर्थः । शिष्टं स्पष्टम् ॥

अथ उक्तमर्थमेव सूत्रद्वयेन विशेषयति—

यत्र महाकाशे शिवयोगिनः लीयन्ते इति तं महाकाशं अव्यक्तं मन्दभाग्यैः गन्तुमशक्यं सच्चिदानन्दलक्षणं ज्योतिर्मयं लिङ्गमिति सन्तः प्राहुः इत्यर्थः ॥

विगतसंशयाः वसिष्ठादिमुनयः यं महाकाशमाहुः । किमित्याहुः ? इत्यत्र तन्महाकाशं परमानन्दरूपिणी सर्वोत्कृष्टा चितिरेवेत्याहुः इत्यर्थः ॥

---

[1] ध्यानेन तत्रैव लयं गच्छन्तीत्यर्थः ।

[2] चितिरेव ।

1382 [तत्र जगदभेदः]

तरङ्गादि यथा सिन्धोः स्वरूपान्नातिरिच्यते ।
तथा शिवात् चिदाकाशात् विश्वमेतत् न भिद्यते ॥

यथा पुष्पपलाशादि [3]वृक्षरूपान्न भिद्यते ।
तथा शिवात् पराकाशात् जगतो नास्ति भिन्नता ॥

1383 [महाकाशस्य विश्वगर्भत्वविवरम्]

यथा ज्योतींषि भासन्ते [4]भूताकाशे पृथक्पृथक् ।
तथा भान्ति पराकाशे ब्रह्माण्डानि विशेषतः ॥

---

अथ [1]तस्मिन् महाकाशे [2]जगज्जालस्य अभेदं दृष्टान्तपूर्वकं दर्शयति—

स्पष्टम् ॥

अथ पुनः दृष्टान्तान्तरमाह—

स्पष्टम् ॥

ननु चिदाकाशस्य निरवयवत्वात् कथं तत्र विश्वं स्थितम् सत् प्रकाशते ? इत्यत्राह—

ज्योतींषि नक्षत्राणीत्यर्थः । शिष्टं स्पष्टम् ॥

---

[1] उक्ते संविद्रूपे इत्यर्थः ।
[2] दृष्टजगत्समूहस्य ब्रह्माण्डस्य ।
[3] वृक्षोपादानद्रव्यादित्यर्थः ।
[4] महाकाशे परिदृश्यमाने ।

1384 [स्थलनिगमनम्]

निरस्तोपाधिसम्बन्धं निर्मलं संविदात्मकम् ।
पराकाशं जगच्चित्रं विलासालम्बभित्तिकम् ॥

(89) इति महाकाशस्थलम् (11-9)

---

(90) अथ शरणस्थले क्रियाप्रकाशस्थलम् (11-10)

---

---

अथ तमेवार्थं विशेष्य[1] महाकाशस्थलं समापयति—

उक्तविशेषणविशिष्टपराकाशं जगज्जालरूपं[2]चित्रविलासस्य आधारभूतमित्यर्थः ॥

एतत्पिण्डाकाशादिलिङ्गत्रयं शरणस्याङ्गत्रयस्य संयोजनीयम् ॥

1385 [क्रियाप्रकाशस्थलम्]

अथ—

"क्रियावन्तः श्रोत्रियाः ब्रह्मनिष्ठाः"

इति मुण्डकश्रुत्यनुसारेण,

---

1 विविधैः विशेषणैः संयोज्यस्वरूपं वर्णयित्वा इत्यर्थः ।
2 चित्रं=विविधं आश्चर्यावहं च ।
3 सर्वेषु कर्मसु श्रेष्ठमित्यर्थः ।

1386 [तत्सम्पन्नयोगिस्वरूपम्]

शिवस्य परिपूर्णस्य चिदाकाशस्वरूपिणः ।
आत्मत्वेनानुसन्धानात्[2] क्रियाद्योतनवान् यमी ॥

"मोक्षप्रदं चैहिकसौख्यदं च
सर्वोत्तरं शाङ्करकर्म सत्यम् ।"

इति योगजागमवचनानुसारेण च महाकाशस्वरूपशिवयोग्येव[1] तत्स्वरूपानुसन्धानरूपक्रियाप्रकाशवान् इति कथयति—

महाकाशस्वरूपः शिवयोगी परिपूर्णचिदाकारमहाकाशस्वरूपिणः शिवस्य स्वात्मत्वेनानुसन्धानरूपक्रियावान् इति क्रियाप्रकाशवान् इत्युच्यते इत्यर्थः ॥

1387 [तत्क्रियास्वरूपोपपादनम्]

अथ—

"परास्यशक्तिः विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ।"

इति श्वेताश्वतरश्रुत्यनुसारेण,

"ज्ञानक्रियात्मिका साऽपि[3]
सत्या नित्योदितप्रभा ।
अनन्या स्यात् शिवात् सैव
वस्तुतो मूर्तिरैश्वरी ॥"

---

[1] आकाशशरीरं ब्रह्मेति एकीभवनप्रतियोगिनः ब्रह्मणः महाकाशस्वरूपत्वादिति भावः ।

[2] अनुसन्धानमिति साधनावस्थाकथनम्, वस्तुतः एकीभावे सम्पादिते त्रिपुटीभङ्गात्, अनुसन्धानाद्यभावात् ।

[3] बलात्मिकेत्यपि भाव्यम् । तथैव उक्तश्रुतेः ।

निष्कलङ्कचिदानन्दगमनोपमरूपिणः ।
शिवस्य परिपूर्णस्य वृत्तिः चैतन्यरूपिणी ॥

1388

निष्कलङ्के निराकारे नित्ये परमतेजसि ।
विलीनचित्तवृत्तस्य तथा शक्तिः क्रियोच्यते ॥

1389 [तत्क्रियानुसन्धानफलम् ]

सर्वज्ञः सर्वकर्ता च सर्वगः परमेश्वरः ।
तदैक्यचिन्तया योगी तादृशात्मा प्रकाशते ॥[2]

---

इति पौष्करवचनानुसारेण च तदनुसन्धानक्रियामेत्र सूत्रत्रयेणोपपादयति—

एवं उक्तरूपस्य शिवस्य वृत्तिः 'अस्मि' इति क्रियारूपा स्थितिः[1] चेतन्यरूपिणी, शिववत् चित्स्वरूपिणी इत्यर्थः ॥

अथ शिवयोगिन स्वरूपामर्शनक्रियाऽपि तादृशीत्याह—

उक्तरूपे परशिवतेजसि विलीनचित्तव्यापारस्य शिवयोगिनः अनुसन्धानरूपा या क्रियाशक्तिः सा तथा परशिवतेजोरूपिणी इत्युच्यते इत्यर्थः ॥

ननु किं तदनुसन्धानेन ? इत्यत्राह—

" सर्वज्ञः पञ्चकृत्यसम्पन्नः
सर्वेश्वर ईश्वरः ॥ "

---

1 भावात्मिका स्थितिः इत्यर्थः ।
2 तथा च तथाऽनुसन्धानसन्ततिरपि तथा भावहेतुरिति आशयः ।

1390 तत्सम्पन्नस्य शिवदर्शनविधिः]

सर्वेन्द्रियाणां व्यापारे विद्यमानेऽपि संयमी ।
प्रत्युन्मुखेन[1] मनसा शिवं पश्यन् प्रमोदते ॥

1391

कूटस्थमचरं प्राज्ञं गुणातीतं गुणोत्तरम् ।[3]
शिवतत्त्वं स्वरूपेण पश्यन् योगी प्रमोदते ॥

---

इति वृद्धजाबालश्रुतेः परमेश्वरः सर्वज्ञः सर्वकर्ता सर्वव्यापकः इति बुद्ध्वा योगी शिवयोगी समानसमरसैक्यध्यानेन तादृगात्मा तत्प्रकारस्वरूपवान् प्रकाशते इत्यर्थः—

ननु शिवयोगिनः इन्द्रियव्यापारस्य विद्यमानत्वात् कथं शिवं पश्यति ? इत्यत्राह—

प्रत्युन्मुखेन पश्चिमचक्राभिमुखेन[2] मनसा इत्यर्थः ॥ शिष्टं स्पष्टम् ॥

अथ कीदृशं शिवं कथं पश्यन् मोदते ? इत्यत्राह—

---

[1] प्रत्यङ्मुखेन (ख)

[2] षण्णां चक्राणां उभयविधत्वं सप्तमचक्रस्य एकविधत्वं च तन्त्रशास्त्रे प्रसिद्धम् ।

[3] गुणपदद्वयं च भिन्नभिन्नार्थकम् ।

1392 [स्थलनिगमनम्]

परात्मनि क्रिया सर्वा गन्धर्वनगरी मुखे ।
प्रकाशत इति प्रोक्तं क्रियायास्तु प्रकाशनम् ॥

(90) इति क्रियाप्रकाशनस्थलम् (11-10)

---

गुणोत्तरं ज्ञानवैराग्यादिगुणैः श्रेष्ठं प्राज्ञं कुशलिनं कूटस्थं तुर्यसाक्षिक-प्रत्यगात्मादिसञ्ज्ञितं गुणातीतं मायिकसत्त्वादिगुणातीतं अचलं शिवतत्त्वं स्वरूपेण स्वस्वरूपेण पश्यन् शिवयोगी प्रमोदते इत्यर्थः ॥

अथ चित्क्रियारूपस्वस्वरूपसम्पन्नस्य शिवयोगिनः गगनतल भासमानगन्धर्वनगरीव[1] सर्वा क्रिया तावदस्थिरेति वदन् प्रकाशते इति प्रोक्तं क्रियाप्रकाशस्थलं समापयति—

परात्मनि परशिवस्वरूपशिवयोगिविषये सर्वा क्रिया व्योम्नि गन्धर्वनगरीव प्रकाशते इति । क्रियायाः प्रकाशनं तु क्रियाप्रकाशन-स्थलमिति प्रोक्तमित्यर्थः ॥

---

[1] विशकलितमेघावृते गगनमण्डले खण्डखण्डाः मेघाः स्वीयाकारविशेषेण तत्रतत्र प्राकारसौधादिपरिभूषितनगरविशेषवत् भासन्ते इति भावुकदर्शकानां प्रतीतिः । अयमाकार एव गन्धर्वनगरी इत्युच्यते ।

## (91) अथ शरणस्थले भावप्रकाशस्थलम् (11-11)

---

1393 [भावप्रकाशनम्]

तरङ्गाद्याः यथा सिन्धौ न भिद्यन्ते तथाऽऽत्मनि ।
भावबुद्ध्यादयः सर्वे यत्तत् भावप्रकाशनम् ॥

---

1394 [तत्स्वरूपम्]

अथ—

" स्वदयापूर्णभावस्य
स्वेनैव ज्ञापितस्य च ।
तस्यैव भासते भावे
सोऽयमादिमहेश्वरः "

इति योगजागमवचनानुसारेण तत्क्रियाप्रकाशनसम्पन्नस्य[1] शिवयोगिनः सुलभं भावप्रकाशस्थलं निरूपयति—

तरङ्गफेनादयो भावाः[2] यथा समुद्रे न भिद्यन्ते, तथा सर्वे बुद्ध्यादयो भावाः[3] आत्मनि क्रियाप्रकाशसम्पन्ने शिवयोगिचैतन्ये न भिद्यन्ते इति यत् तत् भावप्रकाशनं स्यात् इत्यर्थः ॥

1395 [तद्भावानां प्रपञ्चनम्]

अथ तद्भावान् पञ्चभिः सूत्रैः विशेषयति—

---

[1] सम्पन्नस्यैव (ख)
[2] पदार्थाः इत्यर्थः ।
[3] धर्माः इत्यर्थः ।

1396

शिव एव जगत् सर्वं शिव एवाहमित्यपि ।
भावयन् परमो योगी भवदोषैर्न बाध्यते ॥

1397

शिवभावे स्थिरे जाते निर्लेपस्य महात्मनः ।
ये ये भावाः समुत्पन्नाः ते ते शिवमयाः स्मृताः ॥

1398

अद्वितीयशिवाकारभावनाध्वस्तकर्मणा ।[1]
न किञ्चित् भाव्यते साक्षात् शिवादन्यन्महात्मना ॥

---

"सर्वं जगत् शिव एव" "तस्मात् अहमपि शिव एव" इति भावयन् महाशिवयोगी सांसारिकदोषैः न बाध्यते इत्यर्थः ॥

निर्लेपस्य विषयेषु लेपरहितस्येत्यर्थः ॥ शिष्टं स्पष्टम् ॥

अथ के ते भावाः ? इत्यत्राह —

एवं रूपेण शिवयोगिना यद्यद्भाव्यते, तत्सर्वं शिवमयमिति भावः ॥

अथ तत् कथम् ? इत्यत्राह—

---

[1] भावनया नष्टकर्मशक्त्या इत्यर्थः ।

गलिताज्ञानबन्धस्य[1] केवलात्मानुभाविनः ।
यत्र यत्रेन्द्रियाशक्तिः[2] तत्र तत्र शिवात्मता ॥

1399 [तत्सम्पन्नस्य शिवमयत्वोपपत्तिः]

रागद्वेषादयो भावाः संसारक्लेशकारणम् ।
तेषामुपरमो यत्र तत्र भावः शिवात्मकः ॥

---

उक्तरूपस्य शिवयोगिनः यत्र यत्र भावरूपेन्द्रियाशक्तिः तत्र तत्र भावमयशिवात्मता इत्यर्थः ॥

ननु रागद्वेषादिभावानां बन्धहेतुत्वात् सः कथं शिवमयः ? इत्यत्राह —

यत्र शिवयोगिनि बन्धकारणीभूतरागद्वेषादिभावानामुपरमः अस्ति[3] तत्र तस्मिन् शिवयोगिनि भावः शिवात्मकः इत्यर्थः ॥

तस्मात् ईदृशं शिवयोगिनं तामसीशक्तिः नाक्रमतीति वदन् भावप्रकाशस्थलं समापयति—

---

[1] स्वाज्ञाननिमित्तबन्धविमुक्तस्येत्यर्थः ।
[2] रागद्वेषादिरूपाभवेदिति उत्तरश्लोकावतरणवाक्येन ज्ञायते ।
[3] तथा पूर्वोक्तस्थले तेषां भावानां बन्धहेतुत्वं नास्तीति भावः ।

1400 [स्थलनिगमनम्]

यथा सूर्यं समाक्रान्तौ[1] न शक्नोति तमः सदा ।
तथा प्रकाशमात्मानं नाविद्याऽऽक्रमति स्वयम् ॥[2]

(91) इति भावप्रकाशनस्थलम् (11-11)

——————

(92) अथ शरणस्थले ज्ञानप्रकाशनस्थलम् (11-12)

——————

---

अन्धकारः यथा सूर्यमावरितुं न समर्थः तथा प्रकाशं आत्मानं स्वच्छप्रकाशरूपं शिवयोगिनं अज्ञानलक्षणं आवरितुं न समर्थम् इत्यर्थः ॥

——————

1401 [ज्ञानप्रकाशनस्थलम्]

अथ—

"गवामनेकवर्णानां
क्षीरस्याप्येकवर्णता ।[3]
क्षीरवत् पश्यते ज्ञानं
लिङ्गिनस्तु गवां यथा ॥"

इति अमृतबिन्दूपनिषद्वचनानुसारेण,

——————

[1] व्याख्यानुसारेण समाक्रान्तुं इति स्यात् ।
[2] नाविद्याक्रामति स्वयम् (ख)
[3] अनेकवर्णानामपीत्यन्वयः ।

1402 [ज्ञानप्रकाशनपदार्थः]
[अथ योगिनः तत्प्राप्तिलौलभ्यम् ]

मुख्यार्थेऽसम्भवे जाते[2] लक्षणायोगसंश्रयात् ।
तद् ज्ञानयोजनं यत्तत् उक्तज्ञानप्रकाशनम् ॥

---

"शिवादिस्मरणं ज्ञानं
ज्ञानात् सत्ता प्रकाशते ।
सत्तयाऽऽनन्दसम्प्राप्तिः
आनन्दाच्चैव सिद्धिदः ॥[1]"

इति योगजागमवचनानुसारेण च तद्भाव प्रकाशनसम्पन्नस्य शिवयोगिनः सुलभं ज्ञानप्रकाशं निरूपयति—

मुख्यार्थे अङ्गलिङ्गयोर्मुख्यार्थे असम्भवे जाते सति अघटिते जाते सति लक्षणायोगसंश्रयात् कार्यकारणोपाधिविशिष्टजीवेश्वरसंज्ञकाङ्गलिङ्गयोः समाश्रयेण तद्ज्ञानयोजनं यत् तदङ्गलिङ्गनिष्ठज्ञानद्वयस्य समानसमरसभावेन संयोजनं यदस्ति तत्, तस्य भावप्रभावप्रकाशनसम्पन्नस्य शिवयोगिनः ज्ञानप्रकाशनम् इत्युक्तं भवति ॥

1403

अयं भावः—घटावच्छिन्नमहाकाशवत् कूटस्थपरचैतन्यस्य नित्य-सम्बन्ध एव लक्षणार्थः । घटजलावच्छिन्नाकाशमेघजलावच्छिन्नाकाश-

---

[1] सिद्धयः (ख)
[2] ज्ञाते (ख)

1404

मुक्तस्य ज्ञानसम्बन्धः ज्ञेयाभावः स्वभावतः ।
उपाधिसहितं ज्ञानं न भेदमतिवर्तते ॥

1405

ज्ञानमित्युच्यते सद्भिः परिच्छेदोऽपि वस्तुतः ।
परात्मन्यपरिच्छेदे[4] कुतो ज्ञानस्य सम्भवः ॥

---

योरिव अङ्गलिङ्गयोरुपाधिरेव मुख्यार्थः, तत् चैतन्यसामरस्यज्ञानमेव ज्ञान-प्रकाशः इति ।

अथ तदेव सूत्रत्रयेण विशेषयति[1]—

मुक्तस्य परमुक्तस्य[2]लक्षणार्थकज्ञानसम्बन्धः स्वभावतः ज्ञेया-भावः आत्माश्रयादिदोषराहित्येन ज्ञेयशून्यः वेदशून्यः[3] इत्यर्थः । उपाधिसहितं ज्ञानं तस्य परयुक्तस्य मुख्यार्थभूतलिङ्गाङ्गोपाधिविशिष्टज्ञानं भेदं नातिवर्तते भेदमनतिक्रम्य वर्तते । उपाधिनाशः एव ज्ञान-सामरस्यमित्यर्थः ॥

वस्तुनः लिङ्गाङ्गरूपवस्तुनः परिच्छेदः खण्डितत्वं ज्ञानमिति

---

[1] विवृणोति इति यावत् ।

[2] परमां मुक्तिं प्राप्तवतः इत्यर्थः ।

[3] वेदनशून्यः (ख)

[4] स्य परिच्छिन्ने (ख)

1406

ज्ञानस्याविषये तत्त्वे शिवाख्ये चित्सुखात्मनि ।
आत्मैकत्वानुसन्धानं ज्ञानमित्युच्यते बुधैः ॥

1407 [शिवज्ञानस्यैव ब्रह्मज्ञानरूपत्वम्]

अपरिच्छिन्नमानन्दं सत्ताऽऽकारं जगन्मयम् ।
ब्रह्मेतिलक्षणं ज्ञानं ब्रह्मज्ञानमिहोच्यते ॥

---

द्वैतज्ञानमिति सद्भिः सत्पुरुषैः उच्यते । अपरिच्छेदे अखण्डिते परमात्मनि निरुपाधिकमहाचैतन्ये हि द्वैतप्रसिद्धस्य ज्ञानस्य सम्भवः उद्भवः कुतः ? नास्तीत्यर्थः ॥

ज्ञानस्य स्वप्रकाशत्वात् स्वातिरिक्तसंविदन्तरस्य अविषये अगोचरे चित्सुखात्मनि चिदानन्दस्वरूपे शिवाख्ये परशिवाख्ये तत्त्वे वस्तुनि आत्मैकत्वानुसन्धानं स्वात्मनः एकत्वानुसन्धानं ज्ञानमिति बुधैः विद्वद्भिः उच्यते इत्यर्थः ॥[1]

तत् शिवज्ञानमेव ब्रह्मज्ञानमिति सूत्रत्रयेण कथयति—

सत्तामनतिक्रान्तत्वात् विश्वस्य तन्मयत्वमिति भावः । स्वरूपतो ह्यसतः सत्तासम्बन्धासम्भवात्[2] स्वरूपतः सतः सत्तान्तरानपेक्षणात् सद्रूपत्वमेवेति निष्कर्षः । शिष्टं स्पष्टम् ॥

---

[1] तथा च अत्र ज्ञानशब्दप्रयोगः पारिभाषिकः इति भावः ।
[2] सम्बन्धसम्भवात् (ख)

1408

ब्रह्मज्ञाने समुत्पन्ने विश्वोपाधिविवर्जिते ।
सर्वं संविन्मयं भाति तदन्यन्नैव दृश्यते ॥

1409

तस्मादद्वैतविज्ञानं अपवर्गस्य कारणम् ।
भावयन् सततं योगी संसारेण न लिप्यते ॥

1410 [स्थलनिगमनम् ]

नित्ये निर्मलसत्त्वयोगिषु परे निर्वासने निष्कले ।
सर्वातीतपदे चराचरमये सत्तात्मनि ज्योतिषि ॥

---

विश्वोपाधिविवर्जिते[1] विश्वभेदरहिते ब्रह्मज्ञाने समुत्पन्ने आविर्भूते सति सर्वं विश्वं संविन्मयं भाति चिच्छक्तिमयं इति भाति । तदन्यत् शिवशक्त्योरभेदात् तदन्यत् ब्रह्मातिरिक्तं न दृश्यते इत्यर्थः ॥

तस्मात् अपवर्गस्य परापरमोक्षस्य कारणं शिवाद्वैतविज्ञानं सततं भावयन् शिवयोगी संसारेण न लिप्यते इत्यर्थः ॥

अथ ज्ञानप्रकाशस्थलं समापयति—

नित्ये निरन्तरं सत् निर्मलसत्त्वयोगिषु परे शुद्धसत्त्वगुणवत्सु

---

[1] ब्रह्मातिरिक्तवस्तुविषयतारहिते इति यावत् ।

संविद्व्योम्नि शिवे विलीनहृदयः तद्भेदवैमुख्यतः
साक्षात् सर्वगतो विभाति विगलद्विश्वः स्वयं संयमी ॥

इति श्रीमत् षट्स्थलब्रह्मिणा
शिवयोगिनाम्ना रेणुकाचार्येण विरचिते
वीरशैवधर्मनिर्णये सिद्धान्तशिखामणौ
शरणस्थलविषयद्वादशविध
लिङ्गप्रसङ्गो नाम एकोन-
विंशः परिच्छेदः
समाप्तः ॥



प्राधान्येन वर्तमाने निर्वासने वेद्यवासनारहिते निष्कले निरवयवे[1] सर्वातीतपदे सर्वोत्तीर्णस्थानभूते चराचरमये चराचरप्रपञ्चोपादानकारणीभूतचित्क्रियालक्षणचिदम्बरशक्तिस्वरूपे सत्ताऽऽत्मनि पारमार्थिकसत्तारूपिणि ज्योतिषि भासमाने संविद्व्योम्नि शिवे चिदाकाशरूपपरशिवे विलीनहृदयः

[1] सर्वावयवपूर्णे एव लोके सकलशब्दप्रयोगदर्शनात् एव उक्तिः ।

(92) इति ज्ञानप्रकाशनस्थलम् (11-12)

इति एकादशं शरणस्थलं समाप्तम् ॥

---

तद्भेदवैमुख्यतः शिवादन्यत्वे विमुखीभूतत्वात्[1] सर्वगतः विश्वव्यापकः संयमी शिवयोगी विगलद्विश्वः सन् विगलितविश्वभेदविभवः सन् स्वयं[2] साक्षात् विशेषेण भाति प्रकाशते इत्यर्थः ॥

शिवशरणयोः सतिपतित्वादेः तल्लिङ्गत्रयं शरणस्याङ्गत्रयस्य योज्यम् ॥

इति श्रीमत्पदवाक्यप्रमाण-
पारावारधुरीणश्रीमरितोण्टदार्येण
विरचितायां तत्त्वप्रदीपिकाख्यायां
सिद्धान्तशिखामणिव्याख्यायां
शरणस्थलविषयद्वादश-
विधलिङ्गप्रसङ्गो नाम एकोन-
विंशः परिच्छेदः समाप्तः ॥

---

[1] इयं बौद्धिकप्रक्रियोक्तिः। वस्तुतस्तु सहजत एव ज्योतिषोऽन्यद् न प्रकाशते इति भाव्यम्।

[2] स्वयमेवेत्यर्थः।

॥ श्री शिवाय नमः ॥

# सिद्धान्तशिखामणौ

## विंशः परिच्छेदः

### शिवैक्यस्थलविषयनवविधलिङ्गप्रसङ्गः ॥

### (12) अथ द्वादशं ऐक्यस्थलम् ॥
(लिङ्गस्थलगतम्)

1411 [शिवैक्यस्थलविवरणप्रार्थना]

अगस्त्य उवाच—

स्थलभेदाः त्वया प्रोक्ताः शरणस्थलसंश्रिताः ।
[1]ऐक्यस्थलगतान् ब्रूहि स्थलभेदान् गणेन्द्र मे ॥

1412 [शिवैक्यस्थलस्य नव भेदाः]

श्रीरेणुक उवाच—

स्थलानां नवकं चैक्य-
स्थलेऽस्मिन् परिकीर्त्यते ॥

---

अथ अगस्त्य प्रश्नः—

अगस्त्य उवाच—इति

स्थलभेदाः अवान्तरस्थलभेदाः इत्यर्थः । अग्रेऽपि तथा । शिष्टं स्पष्टम् ॥

---

[1] ऐक्यस्थलसम्बद्धान् इत्यर्थः ।

1413

तत् स्वीकृतप्रसादैक्यस्थलमादौ प्रकीर्तितम् ।
शिष्टोदनस्थलं चाथ चराचरलयस्थलम् ॥

1414

भाण्डस्थलं ततः प्रोक्तं भाजनस्थलमुत्तमम् ।
अङ्गालेपस्थलं पश्चात् स्वपराज्ञस्थलं ततः ॥

1415

भावाभावविनाशं च ज्ञानशून्यस्थलं ततः ।
तदेषां क्रमशो वक्ष्ये शृणु तापस ! लक्षणम् ॥

---

अथ अस्य प्रश्नस्य उत्तरं वक्ति—

श्रीरेणुक उवाच—

स्पष्टम् ॥

[१. स्वीकृतप्रसादैक्यस्थलम् ।
२. शिष्टोदनस्थलम् ।
३. चराचरलयस्थलम् ।
४. भाण्डस्थलम् ।
५. भाजनस्थलम् ।
६. अङ्गालेपनस्थलम् ।
७. स्वपराज्ञस्थलम् ।
८. भावाभावविनाशस्थलम् ।
९. ज्ञानशून्यस्थलम्—इति ।]

## (93) अथ ऐक्यस्थले स्वीकृतप्रसादिस्थलम् (12-1)

1417 [स्वीकृतप्रसादिशिवयोगिस्वरूपम्]

मुख्यार्थो लक्षणार्थश्च यत्र नास्ति चिदात्मनि ।
विश्रृङ्खलतया तस्य प्रसादः स्वीकृतो भवेत् ॥

---

1416 [तत्र स्वीकृतप्रसादिस्थलम्]

अथ —

"ज्ञानप्रसादेन विशुद्धसत्त्वः[1]
ततस्तु तं पश्यते[2] निष्कलं ध्यायमानः ।"

इति मुण्डकश्रुत्यनुसारेण,

"ज्ञानोत्पत्तिनिमित्तं तु
क्रियाचर्या प्रकीर्तिता ।
योगं सालम्बनं त्यक्त्वा
निष्प्रपञ्चं[3] विचिन्तयेत् ॥"

इति देवीकालोत्तरवचनानुसारेण च तद्ज्ञानप्रकाशसम्पन्नः शिवयोग्येव ज्ञानप्रसादस्वीकारात् स्वीकृतप्रसादीति निरूपयति—

चिदात्मनि यत्र ज्ञानप्रकाशसम्पन्ने शिवयोगिनि मुख्यार्थः जीवेश्वर-वियोगरूपमुख्यार्थः नास्ति लक्षणार्थश्च निरुपाधिकशिवात्मनोः नित्यावि-

---

[1] परिशुद्धान्तःकरणः इत्यर्थः ।

[2] पश्यति=साक्षात्कारं लभते इति यावत् ।

[3] 'पचि विस्तारे' इति धातोः प्रपञ्चशब्दः विस्तारार्थकः । निष्प्रपञ्चं सकलजगद्विस्तारमूलरूपं इत्यर्थः ।

1418

मातृमेयप्रमाणादिव्यवहारे विहारिणीम् ।
संवित्साक्षात्कृतिं लब्ध्वा[1] योगी स्वात्मनि तिष्ठति ॥

1419 [तस्य पाशबन्धनाभावः]

अद्वैतबोधनिर्धूतभेदावेशस्य योगिनः ।
साक्षात्कृतमहासंवित्प्रकाशस्य क्व बन्धनम् ॥

---

योगरूपलक्षणार्थश्च नास्ति तस्य शिवयोगिनः विशृङ्खलतया निरङ्कुशत्वेन प्रसादः पूर्णज्ञानप्रसादः स्वीकृतः अङ्गीकृतो भवेदित्यर्थः ॥

अथ एतदर्थमेव सूत्रद्वयेन निशदयति —

मातृमानप्रमेयादित्रिपुटीमयप्रथमव्यवहारे रममाणां पूर्णचित्साक्षात्कृतिं लब्ध्वा योगी ज्ञानप्रकाशसम्पन्नः शिवयोगी स्वात्मनि स्वीकृतप्रसादवति स्वस्वरूपे तिष्ठतीत्यर्थः ॥

अथैवंरूपस्य शिवयोगिनः पाशबन्धनं नास्तीत्याह—

शिवाद्वैतबोधनिवारिताङ्गलिङ्गक्षणजीवेश्वरभेदावेशतः अपरोक्षीकृतनिर्मलचित्प्रकाशस्य शिवयोगिनः [2]पाशपञ्चकाद्भूतबन्धनं कुतः ! नास्तीत्यर्थः ॥

1420 [तस्य प्राकृतप्रपञ्चदर्शनाभावः]

अथ तस्य पूर्णज्ञानिनः प्रपञ्चदर्शनं नास्ति इति[3] सूत्रत्रयेण सदृष्टान्तं कथयति—

---

[1] इयमेव निर्विकल्पसमाधेः पूर्वावस्था सविकल्पसमाध्यवस्थेति उच्यते ।

[2] पाशपञ्चकं च पूर्वमेव विशदीकृतम् ।

[3] इयमेव तुरीयावस्थायाः प्रथमावस्था ।

चिदात्मनि शिवे न्यस्तं जगदेतच्चराचरम् ।
ज्ञायते तन्मयं सर्वं अग्नौ काष्ठादिकं यथा ॥

1421

न भाति पृथ्वी न जलं न तेजो नैव मारुतः ।
नाकाशो न परं तत्त्वं शिवे दृष्टे चिदात्मनि ॥

---

अग्नौ न्यस्तं काष्ठादिकं यथा अग्निमयं सत् दृश्यते, तथा शिवे स्थापितं विश्वं चिन्मयमेव दृश्यते । शिवस्य चिदग्निरूपत्वात्[1] इति भावः ॥

ननु वह्नौ काष्ठमिव शिवे विश्वं न केनापि न्यस्तं, शिवेनैव कल्पितम् । तत् कथं तन्मयं सत् भाति ?—इत्यत्राह—

मृत्तिकायां ज्ञातायां घटशरावादिकं सर्वं यथा मृण्मयमेव, न तद्व्यतिरिक्तम् , इति ज्ञायते, तथा चिदात्मनि शिवे दृष्टे सति तत्कार्यत्वात् भूम्यादिकं तद्भिन्नत्वेन न भाति, तदात्मकत्वेनैव भातीत्यर्थः ॥[2]

1422 [तस्य निर्लेपत्वम्]

एवं शिवात्मकं विश्वं तत्रैव लीनं चिन्तयन् योगी न लिप्यते इत्याह—

---

[1] ज्ञानमयाग्निस्वरूपत्वात् इत्यर्थः ।

[2] अयमेवांशः छान्दोग्ये सद्विद्यायां विशदतया व्याख्यातः ।

ज्योतिर्लिङ्गे चिदाकारे ज्वलत्यन्तर्निरन्तरम् ।
विलीनं निखिलं तत्त्वं पश्यन् योगी न लिप्यते ॥

1423 [तेन चिति स्वात्मसमर्पणवर्णनम्]

अन्तर्मुखेन मनसा स्वात्मज्योतिषि चिन्मये ।
सर्वानप्यर्थविषयान् जुह्वन् योगी प्रमोदते ॥

---

अन्तः हृद्रूपाष्टदलकमलमध्ये निरन्तरं चिद्रूपे ज्योतिर्लिङ्गे महालिङ्गे ज्वलति सति, प्रकाशिते सति, तस्मिन् महालिङ्गे शिवयोगी निखिलं तत्त्वं शिवादिभूम्यन्तं विलीनं लयीभूतं पश्यन् सन् न लिप्यते । तनुकरण भुवनभोगात्मकषट्त्रिंशत्तत्त्वैः[1] न लिप्यते इत्यर्थः ॥

अथ एतदर्थमेव होमरूपेण विशेषयति—

अन्तर्मुखेन मनसा प्रत्युन्मुखेन [2]मनसा चिन्मये स्वस्वरूपवह्निप्रकाशे समस्तपदार्थान् जुह्वन् तादात्म्येन समर्पयन् शिवयोगी प्रमोदते इत्यर्थः ॥

1424 [निगमनम्]

अथ स्वीकृतप्रसादिस्थलं समापयति—

---

[1] इदं च तन्त्रग्रन्थेषु अत्यन्तविशदतया विवृतम् ।
[2] अत्र 'प्रत्यङ्मुखेन' इति स्यात् ।

सच्चिदानन्दजलधौ शिवे स्वात्मनि निर्मलः ।
समर्प्य सकलान् भुङ्क्ते विषयान् तत्प्रसादतः ॥

(93) इति स्वीकृतप्रसादिस्थलम् (12-1)

---

(94) अथ ऐक्यस्थले शिष्टोदनस्थलम् (12-2)

---

निर्मलः शिवयोगी सच्चिदानन्दानां समुद्रभूते स्वात्मनि स्वप्रकाशात्मनि शिवे सकलान् शब्दादिपदार्थान् समर्प्य, [1]तत्प्रसादतः तत्प्रसादरूपेण भुङ्क्ते इति ।

---

1425 [शिष्टोदनस्थलम्]

अथ—

"मायां तु प्रकृतिं विद्यात्"

इति श्रुत्यनुसारेण

"ग्रन्थिजन्यकलाकाल-
विद्यारागनृमातरः ।
गुणादिगर्वचित्ताक्ष-
मात्राभूतान्यनुक्रमात् ॥"[2]

---

[1] स्वीकृत्येत्यर्थः ।

[2] इमे सर्वेऽपि मायाविस्ताराः इति तन्त्रेषु प्रसिद्धम् ।

1426 [मायालयस्यैव शिष्टोदनत्वम्]

प्रकाशते या सर्वेषां माया सैवोदनाकृतिः ।
लीयते तत्र चिल्लिङ्गे शिष्टं तत् परिकीर्तितम् ॥

1427 [मायातत्त्वावशेषः]

जगदङ्गे परिग्रस्ते मायापाशविजृम्भिते ।
स्वात्मज्योतिषि बोधेन तदेकमवशिष्यते ॥

---

इति मृगेन्द्रवचनानुसारेण च तच्चित्तप्रसादस्वीकारवतः शिवयोगिनः मायातत्त्वमेव शिष्टोदनमिति सूत्रचतुष्टयेन कथयति—

या माया मिश्रा शुद्धाध्वनिवासिनां तनुकरणभुवनभोगरूपिणी अन्धोमाया[1] अस्ति, शैवी, सर्वेषां[2] प्रकाशते लीयते च । तत् कलादि भूम्यन्तषट्त्रिंशत्तत्त्वात्मकमायातत्त्वमेव चिल्लिङ्गे ज्ञानलिङ्ग तत्र विषये तत्स्वीकृतप्रसादिविषये शिष्टोदनाकृतिः अवशिष्टदनाकारवत्[3] इति प्रकीर्तितमित्यर्थः ॥

मायापाशविजृम्भिते कलादिक्षित्यन्तत्रिंशत्तत्त्वात्मकमायापाशनिबद्धे जगदङ्गे विश्वशरीरवति स्वात्मज्योतिषि स्वस्वरूपज्ञाने बोधेन स्वात्मज्ञानेन परिग्रस्ते सति[4] आक्रान्ते सति तदेकं—तन्मायातत्त्वमेकमेव अव

---

1 अधोमाया । (ख)
2 सर्वेषां तत्साधकानां इत्यर्थः ।
3 शैवागमे पारिभाषिकोऽयं शब्दः ।
4 त्रिपुटीवैशिष्ट्यतदभावाभ्यां उभयोः वैलक्षण्यम् ।

1428 [तत्प्रकारः]

अखण्डसच्चिदानन्दपरब्रह्मस्वरूपिणः ।
जीवन्मुक्तस्य धीरस्य माया कैङ्कर्यवादिनी ॥

1429 [तदानीं मायास्थितिः]

विश्वसंमोहिनी माया बहुशक्तिनिरङ्कुशा ।
शिवैकत्वमुपेतस्य न पुरः स्थातुमीहते ॥[2]

---

शिष्यते इत्यर्थः ॥

नतु शारीरिकस्वरूपस्य बोधाक्रान्तत्वात् कथं मायातत्त्वमवशिष्यते ? इत्यत्राह—

अखण्डसच्चिदानन्दलक्षणपरब्रह्मैव यस्य स्वरूपं तादृशस्य जीवन्मुक्तस्य धीरस्य जितेन्द्रियस्य शिवयोगिनः मायाकैङ्कर्यवादिनी दासभावं वदन्ती सती आस्ते इत्यर्थः ॥[1]

एवंरूपायां स्थितौ—

जगन्मोहिनी माया बहुविधशक्तिभिः अनर्गलाऽपि शिवे समानसमरसभावं उपेतस्य शिवयोगिनः पुरतः मोहकत्वेन स्थातुं नेहते नेच्छतीत्यर्थः ॥

---

[1] मायाकार्यस्य केवलं अङ्गभावेन स्थितिः । न तु अङ्गिभावेनेत्यर्थः ।
[2] आत्मभावप्रतिबन्धकतदा न भासते इत्यर्थः ।

1430 [तदानीं विषयनाशप्रकारः]

ज्योतिर्लिङ्गे चिदाकारे निमग्नेन[1] महात्मना ।
भुज्यमाना यथायोगं नश्यन्ति [2]विषयाः स्वतः ॥

1431

शब्दादयोऽपि विषयाः भुज्यमानास्तदिन्द्रियैः ।
आत्मन्येव विलीयन्ते[3] सरितः सागरे यथा ॥

---

अथ तस्य शिवैक्यस्य विषयनाशं सूत्रत्रयेण कथयति—

स्पष्टम् ॥

अथ कथं लयं गच्छन्तीत्यत्राह—

कारणान्तरव्यतिरेकेण नदीसागरन्यायेन स्वत एव लयं गच्छन्तीत्यर्थः । स्वीकृतप्रसादः तैलवत् सारभूतचिदानन्दः शिष्टोदनस्तु पिण्याकवत् निस्सारा माया इति तद्भोगः निस्सारः सन् नश्यतीति भावः ।

अथैवं विनष्टविषयसमूहवान् शिवयोगी कथं आस्ते? इत्यत्र वदन् शिष्टोदनस्थलं समापयति—

---

[1] तन्मयीभावमापन्नेन ।

[2] तिरोभावं प्राप्य बुद्धिविषयाः न भवन्तीत्यर्थः ।

[3] अभानात् इति ध्येयम् ।

1432 [तत्कालीनशिवयोगिस्थितिः निगमनं च]

अर्थजातमशेषं तु ग्रसन् योगी प्रशाम्यति ।
स्वात्मनैव स्थितो भानुः तेजोजालमशेषतः ॥

(94) इति ज्ञाननिष्पत्तिस्थलम् (12-2)

———

(95) अथ ऐक्यस्थले चराचरविनाशस्थलम् (12-3)

---

शिवयोगी अशेषं पदार्थसमूहं स्वस्वरूपेणाग्रसन्[1] तेजोजालं स्वकिरणसमूहं अशेषतः निःशेषं यथा भवति तथा ग्रसन् उपसंहरन् आस्थितः भानुरिव अस्तं गच्छन् भानुरिव शाम्यति स्वस्थो भवतीत्यर्थः ॥[2]

1433 [चराचरविनाशस्थलम् ]

अथ—

" सोऽविद्याग्रन्थिं विकि-
रतीह सोम्य ! "[3]

इति छान्दोग्यश्रुत्यनुसारेण,

" विषसम्बन्धिनी शक्तिः
यथा मन्त्रैर्निरुध्यते ।
यथा न तदिति क्षीणं
एव पुंसो मलक्षयः ॥"

---

[1] एतद्व्याख्यानुसारेण मूले " अर्थजातमशेषं स्वाग्रसन् " इति पाठः स्यात् । आ=आसमन्तात् । इदमेव व्याख्यायां अशेषतः इति विवृतमिति ज्ञायते ।

[2] भानुदृष्टान्तेन विषयस्वरूपं प्रकृतं च निर्णयम् ।

[3] विकिरति=श्लथयति इत्यर्थः ।

1434 [तत्सम्पन्नयोगिस्वरूपम्]

लिङ्गैक्ये तु समापन्ने चरणाचरणे गते ।
निर्देही स भवेद्योगी चराचरविनाशकः ॥

1435 [तेनैतन्मायाप्रपञ्चादर्शनप्रकारः]

अनाद्यविद्यामूला हि प्रतीतिर्जगतामियम् ।
स्वात्मैकबोधात् तन्नाशे[3] कुतो विश्वप्रकाशनम् ॥

---

इति किरणागमवचनानुसारेण च केवलचित्प्रसादस्वीकारेण च अवशिष्टमायोदनः शिवयोगी चराचरे प्रत्येकं परिपक्वानुसारेण व्याप्तमलशक्तिविनाशकरणेन चराचरविनाशक इति कथयति—

चरणाचरणे गते चराचरप्रपञ्चगते लिङ्गैक्यै महालिङ्गतादात्म्ये समापन्ने प्राप्ते सति स योगी शिष्टोदनसम्पन्नः शिवयोगी निर्देही[1] भूत्वा चराचरविनाशकः जङ्गमस्थावरगतमलशक्तिविनाशको[2] भवेत् इत्यर्थः ।

अथ सः शिवयोगी चराचरव्याप्तमलशक्तिनिवारणेन मायाप्रपञ्चं न पश्यतीति षड्भिः सूत्रैः प्रतिपादयति—

" इदमेतादृक् " इति प्रतिनियतविश्वभुवनप्रतीतिः लीलाशक्त्यनादिकल्पितमायैव मूलकारणवती स्वात्मैकबोधात् स्वात्मप्रधानीभूत-

---

[1] देहाभिमानशून्यत्वात् निर्देही इति कथ्यते ।

[2] दुष्टशक्त्यनभिभूतः इति यावत् ।

[3] ब्रह्मावारकशक्तिनाशे इत्यर्थः ।

1436 [विश्वलयस्थानविवरणम् ]

यथा मेघाः समुद्भूताः [1]विलीयन्ते नभस्तले ।
तथाऽऽत्मनि विलीयन्ते विषयाः [2]स्वानुभाविनः ॥

1437 [विश्वलयप्रकारः]

स्वप्ने दृष्टं यथा वस्तु प्रबोधे लयमश्नुते ।
तथा सांसारिकं सर्वं आत्मज्ञाने विनश्यति ॥[3]

---

ज्ञानात्, तन्नाशे मलशक्तिनाशे विश्वप्रकाशनं तन्मूलकजगद्दर्शनं कुतः ? नास्तीत्यर्थः ॥

ननु इदं विश्वं कुत्र लयं गच्छति ? इत्यत्राह—

नभस्तले मेघाः सम्भूय यथा विलीयन्ते तथा स्वस्वरूपानुभाविनः शिवयोगिनः आत्मनि चैतन्ये विषयाः शब्दादिविषयाः समुद्भूताः उत्पन्नाः सन्तः विलीयन्ते इत्यर्थः ॥

अथ इदं विश्वं स्वात्मैकबोधात् कथं नश्यति ? इत्यत्राह—

आत्मज्ञाने सतीत्यर्थः । नन्वेवं चेत् विश्वस्य स्वप्नसादृश्याङ्गीकारात् मिथ्यात्वप्रसङ्गः इति नाशङ्कनीयम् । स्वप्नेनापि फलाफलदर्शनात्,

---

[1] स्वस्वमूलद्रव्येषु एकीभवन्तीत्यर्थः ।
[2] स्वशब्दः आत्मपरः ।
[3] नात्रवस्तुनाशः विवक्षितः । किन्तु "णश अदर्शने" इति धात्वर्थः एवविवक्षितः ।

1438

जाग्रत्स्वप्नसुषुप्तिभ्यः [1]परावस्थामुपेयुषः ।
किं वा प्रमाणं किं ज्ञेयं किं वा ज्ञानस्य साधनम् ? ॥

1439 [तुर्यातीतपदस्वरूपविवरणम्]

तुर्यातीतपदं यत्तत् दूरं वाङ्मनसाध्वनः ।[2]
अनुप्रविश्य तद्योगी न भूयो विश्वमीक्षते ॥

---

रेतःपातादिदर्शनाच्च सत्यत्वमेवेति । शिष्टं स्पष्टम् ॥

पुनश्च कारणान्तरमाह—

परावस्थां तनुत्रयाश्रितजाग्रदाद्यवस्थाऽतीतबोधखेचरीमुद्रासुलभ सर्वोत्कृष्टतुरीयावस्थां उपेयुषः गतस्य शिवयोगिनः किं वा प्रमाणम्? किं ज्ञेयम्? किं वा ज्ञानस्य साधनम्? त्रिपुटीमयप्रपञ्चोत्तीर्णत्वात् तद्दर्शनं नास्तीत्यर्थः ॥

अथ तत् तुर्यातीतपदं विशदयति—

यत् तुर्यातीतपदं मौनान्तमुद्रासुलभतुर्यातीतस्थानमस्ति वाङ्मनसाध्वनो दूरं, स्तुतिध्यानयोरविषयं तुर्यातीतस्थानं अनुप्रविश्य तद्योगी

---

[1] परावस्थैवेयं तन्त्रग्रन्थेषु तुरीयावस्थेत्युच्यते ।
[2] वाङ्मनसयोरविषयस्येत्यर्थः ।

1440

नान्यत् पश्यति योगीन्द्रः नान्यज्जानाति किञ्चन ।
नान्यत् शृणोति संदृष्टे चिदानन्दमये शिवे ॥

1441 [स्थलनिगमनम्]

असदेव जगत्सर्वं सदिव प्रतिभासते ।
ज्ञाते शिवे तदज्ञानं स्वरूपमुपपद्यते ॥

---

तुर्यस्थानयोगवान् शिवयोगी भूयः नेक्षते न पश्यतीत्यर्थः ॥

कुतः ? इत्यत्राह—

चिदानन्दस्वरूपे शिवे सन्दृष्टे सति इति शेषः । अपरोक्षीकृते सति योगीन्द्रः निजस्वरूपस्थः शिवयोगीश्वरः अन्यत् स्वातिरिक्तं रूपं न पश्यति, [1]तादृशं शब्दजालं न शृणोति, किमपि तदन्यं न जानाति इत्यर्थः । मलशक्तिक्षयात् मायिकरूपादिदर्शनं नास्तीत्यर्थः ॥[2]

अथ उक्तार्थं स्फुटयन् चराचरमलनाशस्थलं समापयति—

सर्वं जगत् असदेव शिवातिरेकेण नास्त्येव सदिव प्रतिभासते, मलशक्तिवशात् तद्व्यतिरेकेण सदिव भासते । शिवे सच्चिदानन्दलक्षणे

---

[1] स्वीयातिरिक्तमित्यर्थः ।
[2] मायामयप्रापञ्चिकतायाः मलशक्तिमूलत्वादिति भावः ।

## (95) इति चराचरविनाशस्थलम् (12-3)
## (चराचरमललयस्थलम्)

———

## (96) अथ ऐक्यस्थले भाण्डस्थलम् (12-4)

———

1442 [भाण्डस्थलम्]

अथ—

" ऊर्ध्वमूलोऽवाक्शाखः
एषोऽश्वत्थः सनातनः ।"[2]
" तदेव शुक्रं तद् ब्रह्म
तदेवामृतमुच्यते ।
तस्मिन् लोकाः श्रिताः सर्वे
तदु नात्येति कश्चन ॥"

इति कठवल्लीश्रुत्यनुसारेण,

" यथा कुण्डलिनीशक्तिः
मायाशक्त्यनुसारिणी ।

---

[1] जीवधर्मपरामर्शः इत्यर्थः ।

[2] इदं शरीरस्वरूपमेवेत्यपि वर्णयन्ति ।

1443 [विमर्शरूपभाण्डस्थलस्वरूपम्]

ब्रह्माण्डशतकोटीनां सर्गस्थितिलयान् प्रति ।
स्थानभूतो विमर्शो यः तत् भाण्डस्थलमुच्यते ॥

1444 [विमर्शस्वरूपविवरणम्]

विमर्शाख्या परा शक्तिः विश्वोद्भासनकारिणी ।
साक्षिणी सर्वभूतानां समिन्धे सर्वतोमुखी ॥

---

नादबिन्द्वादिकं कार्यं
तस्या इति जगत् स्थितिः ॥

इति विश्वसारोत्तरवचनानुसारेण च चराचरमलशक्तिविनाशकस्य शिवयोगिनः विचाररूपः परबिन्दुरेव[1] भाण्डस्थलमिति निरूपयति—

अनेककोटिब्रह्माण्डसृष्टिस्थितिलयान् प्रति आधारभूतो यो विमर्शः, अस्य चराचरमलविनाशकस्य शिवयोगिनः शब्दब्रह्मरूपविचारः अस्ति,[2] तत् भाण्डस्थलमित्युच्यते इत्यर्थः ॥

अथ तद्विमर्शस्वरूपं विशदयति—

षडध्वस्फारलक्षणशब्दार्थविचारपरत्वेन विमर्शाख्या पराशक्तिः

---

[1] नादबिन्दुकलानां स्वरूपं तन्त्रशास्त्रेषु ज्ञेयम् ।
[2] वस्तुत विमर्शपदार्थस्तु उत्तर श्लोके एव स्फुटीभविष्यति ।

1445

विश्वं यत्र[1] लयं याति विभात्यात्मा चिदाकृतिः ।
सदानन्दमयः साक्षात् सा विमर्शमयी कला ॥

1446 [तस्य विमर्शस्य शिवजीवाश्रयत्वम् ]

पराहन्तासमावेश[2] परिपूर्णविमर्शवान् ।
सर्वज्ञः सर्वगः साक्षी सर्वकर्ता महेश्वरः ॥

---

शुद्धमाया विश्वोद्भासनकारिणी स्वकार्यरूपज्ञानादिभिः विश्वप्रकाशिनी सर्वतत्त्वानां साक्षिणी सर्वतोमुखी सती समिन्धे । शुद्धाध्ववासिनां परशक्तिसदाशिवेश्वरविद्यातत्त्वलक्षणतनुकरणभुवनभोगरूपेण प्रकाशते इत्यर्थः ॥

अथ तामेव विमर्शकलां विशेषयति—

स्पष्टम् ॥

अथ पिण्डस्थलार्थं सूचयन् तत्त्वपदप्रसिद्धलिङ्गाङ्गरूपशिवजीवयोः विमर्श एवाश्रय इति सूत्रद्वयेन प्रतिपादयति —

महेश्वरः परमेश्वरः पराहन्तासमावेशपरिपूर्णविमर्शवान् शिवजीवसाधारणीभूतात्मतत्त्वाक्रमणेन परिपूर्णविमर्शवान् सन् सर्वज्ञः सर्वकर्ता सर्वगः सर्वव्यापकः कर्मसाक्षी भवेत् । अन्यथा स्फटिकादिप्रकाशवत्

---

[1] यस्यां कलायामित्यर्थः ।

[2] अनहमि अहन्ता अधमाहन्ता, वस्तुतः अहंपदार्थे चित्स्वरूपे एव अहन्ता, पराहन्तेत्युच्यते ।

1447 [तादृशविमर्शस्वरूपस्य विस्तरेण विवरणम्]

विश्वाधारमहासंवित्प्रकाशपरिपूरितम् ।
पराहन्तामयं प्राहुः विमर्शं परमात्मनः ॥

---

जडो भवेदिति भावः ॥

अथ किं तस्य स्वरूपम्? इत्यत्राह—

परमात्मनः—

"अहमस्मि प्रथमजा ऋतस्य ।[1]
पूर्वं देवेभ्यो अमृतस्य नाभिः ॥"

इति श्रुतेः—

"अहमादिर्हि देवानाम् ॥"
"अहं सर्वस्य प्रभवः
मत्तः सर्वं प्रवर्तते ॥"

इति भगवदुक्तेश्च परसंविद्रूपस्य अहमात्मनः शिवस्य महासंवित्प्रकाशपरिपूरितं महाचित्प्रकाशपरिपूर्णं विश्वाधारं विश्वरूपाविद्यालक्षणाधोमायाधारं पराहन्तामयं, यथा घटस्य कम्बुग्रीवादिमत्त्वं तदनतिरिक्तं तथा अहमो भावः अहन्ता इति ॥

"पॄ पालनपूरणयोः"

इति धातुगत्या अण्डरसन्यायेन[2] अशुद्धमिश्रशुद्धाध्वलक्षणसकलविश्वतः

---

[1] 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । इति श्रुतिरपि अत्रानुसन्धेया ।

[2] मयूराण्डरसन्यायः पूर्वमेव उपपादितः ।

1449 [स्थलनिगमनम् ]

विमर्शभाण्डविन्यस्तविश्वतत्त्वविजृम्भणः ।
अनन्यमुखसम्प्रेक्षी मुक्तः स्वात्मनि तिष्ठति ॥

---

पूर्णनीवनभूतपराहन्तामयोर्ध्वमायारूपं विमर्शं सन्तं प्राहुः शिवाद्वैतशास्त्रप्रवीणाः प्रकर्षेण आहुः इत्यर्थः ॥

1448 [तद्विमर्शशक्तेरेव मायास्वरूपत्वम् ]

अथ भावः—

"पादोऽस्य विश्वा भूतानि"[1]

इति श्रुतेः, चराचरप्रपञ्चस्य माहेश्वरीयचित्क्रियालक्षणचरविस्ताररूपत्वात् तत्प्रतिस्फुरणायमानोर्ध्वमायारूपा विमर्शशक्तिरेव घृतकीटन्यायेन एकदेशविकारीभूत्वा,

"वागीश्वरी पराविद्या
कुटिला कुण्डली परा ।
शुद्धमायापरो बिन्दुः
शब्दब्रह्मेति कथ्यते ॥"

इति पौष्करवचनप्रसिद्धपर्यायनामवती षडध्वजननी इति देशिकोपदेशेन[2] विज्ञेया । अस्याः चिद्रूपत्वेन निरंशत्वेऽपि अघटनघटनापटीयस्त्वेन[3] स्वातन्त्र्यकल्पितांशभेदसम्भवात् न काचिदनुपपत्तिः इति ॥

---

[1] पुरुषसूक्ते भगवतः विश्वस्वरूपत्ववर्णनावसरे इदमुक्तम् ।
[2] परमात्मानं दिशतीति देशिकः गुरुः । तदुपदेशेनेत्यर्थः ।
[3] मायाद्वारेति पूरणीयम् ।

## (96) इति भाण्डस्थलम् (12-4)

## (97) अथ ऐश्वर्यस्थले भाजनस्थलम् (12-5)

मुक्तः मायापाशपटलनिर्मुक्तः शिवयोगी विमर्शभाण्डस्थापित पृथिव्यन्तसमस्ततत्त्वबुद्बुदः सन् स्वात्मन्येव उन्मुखः सन् स्वस्वरूपेण तिष्ठतीत्यर्थः ॥[1]

—o—

1450 [भाजनस्थलम् ]

अथ—

"पराऽस्य शक्तिर्विपुला विकर्ता
स्वाभाविकी रुद्रसमानधर्मिणी ।
ज्ञानक्रियेच्छादिसहस्ररूपा
तन्मे मनः शिवसङ्कल्पमस्तु ॥

इति शिवसङ्कल्पश्रुत्यनुसारेण,[2]

"या सा माहेश्वरी शक्तिः
सर्वानुग्राहिका शिवा ।
धर्मानुवर्तनादेव
पाश इत्युपचर्यते ॥"

इति मृगेन्द्रवचनानुसारेण च तद्भाण्डस्थलसम्पन्नस्य शिवयोगिनः

---

1 अत्र त्रिपुट्याः अन्वयो नास्तीति भावः।
2 अयं उपनिषद्भावानुसारिसंज्ञानिर्देशः।

1451 [भाजनपदार्थं]

समस्तजगदण्डानां सर्गस्थित्यन्तकारणम् ।[1]
विमर्शो भासते यत्र तत् भाजनमिहोच्यते ॥

1452

विमर्शाख्या परा शक्तिः विश्ववैचित्र्यकारिणी ।
यस्मिन् प्रतिष्ठिता, ब्रह्म तदिद विश्वभाजनम् ॥

---

विमर्शस्य आश्रयीभूतविमर्शपरबिन्दुः यत्र तिरोधानरूपशिवसमवेतशक्तौ भासते तत् शिवशक्तिस्वरूपं इह भाण्डस्थलसम्पन्नशिवयोगिविषये भाजनमित्युच्यते ।

अयं भावः - पञ्चकञ्चुकयुक्तचैतन्यस्य पुरुष इत्यभिधानवतः पाशत्रयानुसारिण्याः शिवशक्तेः तिरोभावः इत्युपचारः ।

विश्ववैचित्र्यकारिणी विमर्शाख्या परकुण्डलिनी शक्तिः यस्मिन् तिरोभावशक्तेः दृक्क्रियास्वरूपे प्रतिष्ठिता ब्रह्मस्वरूपं तदिदं वह्न्युष्णत्वशुक्लपटन्यायेन[2] स्वसमवेततिरोभावशक्तिदृक्क्रियास्वरूपं विश्वभाजनमित्यर्थः ॥

---

[1] कारणशब्दस्य नित्यनपुंसकलिङ्गत्वात् विमर्शविशेषणत्वेऽपि न दोषः ।

[2] उष्णभासतिरिक्ततदाश्रयवस्तुनः विविक्ततया दर्शनासम्भवात् इति भावः ।

1453 [विमर्शाख्यपरबिन्दोरेव महालिङ्गत्वम् ]

अन्तःकरण रूपेणजगदङ्कुररूपतः ।
यस्मिन् विभाति चिच्छक्तिः ब्रह्मभूतः स उच्यते ॥

1454 [विमर्शाख्यशक्तेः विश्वप्रकाशकत्वम् ]

यथा चन्द्रे स्थिरा ज्योत्स्ना विश्ववस्तुप्रकाशिनी ।
तथा शक्तिर्विमर्शात्मा[2] प्रकारे ब्रह्मणि स्थिता ॥

---

अथ तिरोभावविमर्शयोः किञ्चिन्मिश्रीभावं सूत्रद्वयेन प्रकाशयति—

चिच्छक्तिः स्थूलवेद्यतिरोभावलक्षणा, समवेतशक्तिः जगदङ्कुररूपतः जगदङ्कुरकारणीभूतेन अन्तःकरणरूपेण मूलाहङ्काररूपेण यस्मिन् परबिन्दौ भाति सः विमर्शाख्यपरबिन्दुरेव[1] ब्रह्मभूतः परब्रह्माख्यपरशिवः इत्युच्यते तच्चिद्व्यक्तिमत्परबिन्दुरेव महालिङ्गमित्यर्थः ॥

ननु अहङ्कारमिश्रत्वात् मिथ्याभूतः किम् ? इत्यत्राह—

चन्द्रे स्थिरा ज्योत्स्ना चन्द्रिका विश्ववस्तु सर्वविश्वप्रकारे एकदेशे यथा प्रकाशिनी प्रकाशयति तथा ब्रह्मणि दृक्क्रियात्मकपरशिवे स्थिरा

---

[1] अयमेकः प्रघट्टकः । तत्त्वस्य नादबिन्दुकलातीतत्वात् ।
[2] अत्र आत्मपदं स्वरूपपरम् ।

1456 [ब्रह्मणः अहंरूपशिवशक्तिमयत्वम्]

[2]अकारः शिव आख्यातः हकारः शक्तिरुच्यते ।
शिवशक्तिमयं ब्रह्म स्थितमेकमहंपदे ॥

---

स्थिरेण स्थिता विमर्शशक्तिः परामर्शमयी पराशक्तिः विश्ववस्तु सर्वं जगत् प्रकारे[1] स्वस्वातन्त्र्यपरिकल्पितांशे प्रकाशिनी प्रकाशयतीत्यर्थः ॥

1455 [शक्तिनामसु मुख्यगौणविभागः]

मनोवाचामगोचरत्वेन पशुजनानां तिरोहितत्वात् तिरोधानशक्तिरिति प्रसिद्धा या अस्ति तथ्यकर्मकस्फूर्तिरूपायाः चित्क्रियाशक्तेः परब्रह्मपरशिवपरलिङ्गादिनामानि मुख्यानि, महाबिन्द्वादीनां गौणानीति विवेकः ॥

ननु मुख्यप्रकाशात्मकं ब्रह्मशक्त्यैकरूपं सत् कथमास्ते ? इत्यत्राह—

"अक्षराणामकारोऽस्मि"

इति भगवदुक्तेः,

"अकारो वै सर्वा वाक्"

इति श्रुतेश्च, अकारः सप्तदशीयः शिव इत्याख्यातः । हकारः शक्तिः[?] ।

"हकारोऽन्त्यः कलारूपः"

---

[1] प्रकारपदं धर्मवाचीति ज्ञेयम् ।

[2] अहंपदार्थमाह —

1457 [एतादृशब्रह्मभावापन्नयोगिस्वरूपम् ]

अहन्तां परमां प्राप्य शिवशक्तिमयीं स्थिराम् ।
ब्रह्मभूयं गतो योगी विश्वात्मा प्रतिभासते ॥

---

इत्यागमोक्तेः चैतन्यरूपिणी दृक्क्रियाशक्तिरित्युच्यते । शिवशक्तिमयं एवं शिवशक्तिरूपं ब्रह्म परब्रह्म एकं सत् हंपदे[1] अहमिति स्थाने स्वरूपे स्थितं, कालत्रयेऽपि वर्तते इत्यर्थः ॥

अनेन " अहंरूपं ब्रह्म " इति वदन्तः नैयायिकाः प्रत्युक्ताः । " नित्यापरोक्षं ब्रह्म " इति अङ्गीकृतत्वे, तद्व्यतिरिक्तस्य कथंचिदप्यदृश्यत्वात् इति ॥

अथ एवंरूपाहन्तां प्राप्य शिवयोगी विश्वरूपः सन् प्रतिभातीत्याह —

परमां देशकालाकारोत्तीर्णां शिवशक्तिमयीं शिवाभिन्नशक्तिमयीं अहन्तां सप्तदशीयचित्कलां प्राप्य स्वात्माभेदेन स्थिरां स्थिरीभूतां ज्ञात्वा विमृश्य ब्रह्मभूयं गतः ब्रह्मस्वरूपं गतः शिवयोगी विश्वात्मा जगद्रूपः सन्[2] प्रतिभासते प्रकाशते इत्यर्थः ॥

---

[1] अहंपदे (ख)

[2] इममेवार्थं आधारीकृत्य लोके जगद्गुरुः इति व्यवहारः स्यात् , विश्वात्मभावसम्पन्नः जनानां अज्ञाननाशकश्चेति ।

1458 [भाजनस्थलसम्पन्नशिवयोगिस्वरूपकथनेन]
[स्थलनिगमनम्]

वृक्षस्थं पत्रपुष्पादि वटबीजस्थितं यथा ।[2]
तथा हृदयबीजस्थं विश्वमेतत् परात्मनः ॥

अथ कथं विश्वरूपः सन् शिवयोगी भासते ? इत्यत्र—

"यथा न्यग्रोधबीजस्थः
[1]शक्तिरूपो महाद्रुमः ।
तथा हृदयबीजस्थं
जगदेतच्चराचरम् ॥"

इति श्रीपरात्रिंशिकाशास्त्रोक्तप्रकारेण वदन् भाजनस्थलं समापयति—

वृक्षस्थं वटवृक्षस्थं पत्रपुष्पादिसमस्तं यथा वटबीजे स्थितं, तिष्ठतीत्यर्थः । तथा एतत् विश्वं समस्तं परात्मनः परब्रह्मरूपस्य भाजनस्थलसम्पन्नस्य शिवयोगिनः हृदयबीजस्थम् ।

"कला सप्तदशी ज्ञेया[3]
स्वान्तर्लीनचराचरा ।"

इत्यागमोक्तेः,

"अथाद्याः स्थितयः सर्वे
स्वरा बिन्द्ववसानकाः ।

---

[1] विकासावस्थायामिति योज्यम् ।
[2] शक्तिरूपेणेति शेषः ।
[3] पुरुषस्य षोडशकलत्वात् ।

तदन्तःकालयोगेन सोमसूर्यौ प्रकीर्तितौ ।
पृथिव्यादीनि तत्त्वानि पुरुषान्तानि पञ्चसु ।
क्रमात् कादिषु वर्गेषु मकारान्तेषु सुव्रते ।
वाय्वग्निसलिलेन्द्राणां धारणानां चतुष्टयम् ।
तदूर्ध्वं शादि विख्यातं पुरस्तात् ब्रह्मपञ्चकम् ॥
आमूलात् तत्क्रमात् ज्ञेया क्षान्ता सृष्टिरुदाहृता ॥"

इति श्रीपरात्रिंशिकाशास्त्रोक्तप्रकारेण आदिक्षान्तपञ्चाशद्वर्णानां देशकालाकाररूपत्वात्,

" प्रत्यवमर्शात्माऽसौ चितिः
स्वरसवाहिनी परा वाग्या ।
आद्यन्तप्रत्याहृतवर्णगणा
सत्यहन्ता सा ।"[1]

इति पञ्चाशिकाशास्त्रस्थित्या, क्षकारस्य कषयोगरूपत्वेन हकारस्यैवान्त्यत्वादेशकालाकारवाचकसकलमातृकार्णक्रोडीकारलक्षणप्रत्याहृताकारहकाररूपशिवशक्तिसंमेलनस्फुरिततदन्तर्गतवेद्यसंस्कारलक्षणबिन्दुस्पन्दमयनरशक्तिशिवात्मकाहङ्कारपरामर्शरूपचित्क्रियासामरस्यलक्षणहृदयबीजे तादात्म्येन तिष्ठतीत्यर्थः ॥

---

[1] सती अहन्ता इति पदच्छेदः ।

(97) इति भाजनस्थलम् (12-5)

---

(98) अथ ऐक्यस्थले अङ्गालेपनस्थलम् (12-6)

---

अथ — अकारादिहकारान्तसूक्ष्मादिवाक्शक्तिरूपो विमर्शः तादात्मिकाहम्पदे पशुजनागोचरत्वेन[1] भासमानानाहतनादलक्षणपरावाक्शक्तिमयी चिच्छक्तिः तिरोधानशक्तिः इति रहस्यम् ।

"न सोऽस्ति प्रत्ययो लोके
यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं
सर्वं शब्देन गम्यते ॥"[2]

इति वैयाकरणवचनानुसारात् इति ॥

1459 [अङ्गालेपनस्थलम्]

अथ—

यथा पुष्करपलाशे आपो न श्लिष्यन्ते
एवमेव[3] पापकर्म न श्लिष्यते ।"

---

[1] पशुजनाः मूढाः भूतजीवनाः ।

[2] वाक्यपदीये भर्तृहरिणा एवमुक्तम् ।

[3] 'चिति' इति शेषः ।

1460 [अङ्गालेपपदार्थः]

दिक्कालाद्यनवच्छिन्नं चिदानन्दमयं महत् ।
यस्य रूपमिदं ख्यातं सोऽङ्गालेप इहोच्यते ॥

1461

समस्तजगदात्माऽपि [2]संविद्रूपो महामतिः ।
लिप्यते नैव संसारैः यथा धूमादिभिर्नभः ॥

---

इति छान्दोग्यश्रुत्यनुसारेण,

"एवंभूतस्य कर्माणि
क्रियमाणानि योगिनः ।
प्रयान्ति नैव लिप्यन्ते
पुण्यापुण्यानि संक्षयम् ॥"

इति योगजागमवचनानुसारेण च तिरोभावलक्षणदृक्क्रियाभाजनवतः शिवयोगिनः कर्माङ्गे लेपकं न भवतीति अङ्गालेप इति[1] सूत्रत्रयेण कथयति—

दिग्देशकालत्रयेऽपि परिच्छेदरहितं चिदानन्दस्वरूपं बृहत् इदं प्रादुर्भूतदृक्क्रियारूपं यस्य तिरोभावभाजनसम्पन्नस्य शिवयोगिनः रूपं स्वरूपमिति ख्यातम् सः तद्भाजनस्थलसम्पन्नः शिवयोगी अङ्गे कर्मलेपरहितः इति इहोच्यते इत्यर्थः ।

अत्र दृष्टान्तमाह—

---

[1] कर्मणां स्वरूपतः त्यागस्य अशक्यत्वात् लेपाभावमात्रस्यैव साधनीयत्वात्
[2] संवित् ज्ञानम्, ज्ञानस्वरूपः इत्यर्थः ।

1462

न विधिः न निषेधश्च न विकल्पो न वासना ।
केवलं चित्स्वरूपस्य गलिताप्राकृतात्मनः ॥

---

सकलजगच्चैतन्यात्मकः सन् चिद्रूपो महाधीमान् शिवयोगी धूममेघादिभिः नभो यथा न लिप्यते, तथा संसारपापकर्मभिः न लिप्यते इत्यर्थः ।

कुतः ? इत्यत्राह—

गलितेति, निवृत्तप्राकृतकर्मप्रयत्नवतः केवलचिद्रूपस्य शिवयोगिनः न विधिः विध्युक्तकर्म नास्ति, न निषेधश्च निषिध्यमानकर्मापि नास्ति, न विकल्पः अस्ति नास्तीति विकल्पो नास्ति, न वासना तद्वासनाऽपि नास्तीत्यर्थः ।

1463 [तथा अलिप्तस्य अभेदज्ञानमहिमा]

अथ वासनारहितस्य शिवयोगिनः अभेदज्ञानं[2] सदृष्टान्तं सूत्रद्वयेन विशेषयति—

---

[1] प्रकृतिधर्माणां गलितत्वा देव अप्राकृतधर्मवानयमित्यर्थः ।

[2] सहजतया भासमानमिति शेषः ।

घटादिषु पृथग्भूतं यथाऽऽकाशं न भिद्यते ।
तथोपाधिगतं ब्रह्म नानारूपं न भिद्यते ॥

1464

अनश्वरमनिर्देश्यं यथा व्योम प्रकाशते ।
तथा ब्रह्मापि चैतन्यं अत्र वैशेषिकी कला ॥

1465 [स्थलनिगमनम्]

न देवत्वं न मानुष्यं न तिर्यक्त्वं न चान्यथा ।
सर्वाकारत्वमाख्यातं जीवन्मुक्तस्य योगिनः ॥

---

घटमठादिषु पृथग्भूतं[1] व्योम यथा न भिन्नं तथा देवदानवाद्युपाधिगतं[2] ब्रह्म नानारूपमपि न भिद्यते इत्यर्थः ॥

व्योम नाशरहितमनुपमं सत् यथा प्रकाशते, तथा ब्रह्मापि प्रकाशते । अत्र ब्रह्मणि चैतन्यं दृक्क्रियारूपं, वैशेषिकी कला जडभूतभूताकाशापेक्षया दिशेषीभूतकलेति चिदाकाशरूपं ब्रह्मेत्यर्थः । अत्र अनश्वरत्वं निरवयवत्वं, न नित्यत्वमिति बोध्यम्[3], जडत्वात् इति ॥

अथ चिदाकाशरूपः शिवयोगी पूर्णः इत्युक्त्वा अङ्गालेपनस्थलं समापयति—

---

[1] पृथग्भूतत्वेन भासमानमित्यर्थः ।
[2] शरीरस्थले शरीरमेवोपाधिः ।
[3] अवयवप्रतिनियतत्वात् अनित्यत्वस्येति ।

## (98) इति अङ्गालेपनस्थलम् (12-6)

## (99) अथ ऐक्यस्थले स्वपराज्ञस्थलम् (12-7)

जीवन्मुक्तस्य योगिनः कर्मपाशरहितत्वात् पुण्यकर्मसिद्धदेवत्वं नास्ति, पुण्यपापमिश्रितोद्भूतमानुष्यमपि नास्ति, पापजन्यतिर्यक् प्राणित्वं च नास्ति।[1] तद्व्यतिरेकेण मायागर्भे मलमूर्छितत्वेन विद्यमानताऽपि नास्ति। किन्तु सर्वत्र परिपूर्णचिदाकाशरूपत्वं आख्यातम्। नित्य-परिपूर्णचित्प्रसादवतः शिवयोगिनः सिद्धान्तप्रसिद्धमायामलबिन्दुतिरोभाव-कर्मरूपप्रपञ्चपाशबन्धो[2] नास्तीत्यर्थः॥

1466 [स्वपराज्ञस्थलम्]

अथ—

"यथा प्रियया सम्परिष्वक्तः[3] न बाह्यं किञ्चन वेद
नान्तरं, एवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तः
न बाह्यं किञ्चन वेद नान्तरम्।"

इति बृहदारण्यकश्रुतेः,

"स्वयं स्वस्य परो नैव
न परः स्वस्य विद्यते।

---

[1] कर्मणा देवत्वम्, अकर्मणा तिर्यक्त्वम्, उभाभ्यां मानुषत्वमिति स्मृतेः इति भावः।

[2] मायादिरूपः यः प्रापञ्चिकपाशबन्धः सः इत्यर्थः।

[3] समालिङ्गितः इत्यर्थः।

1467 [स्वपराज्ञतास्वरूपविवरणम् ]

अप्रमेये चिदाकारे ब्रह्मण्यद्वैतवैभवे ।
विलीनः किं नु जानाति स्वात्मानं परमेव वा ॥

1468 [अस्य योगिनः अद्वैतभावप्रभावः]

यत्र नास्ति भिदायोगात् अहं त्वमिति विभ्रमः ।
न संयोगो वियोगश्च न ज्ञेयज्ञातृकल्पना ।

---

इति घार्येऽपि[1] संलीने
तस्मिन् ज्ञेयं न तस्य हि ॥"

इति सर्वज्ञानोत्तरवचनाच्च अङ्गालेपः शिवयोगी प्राथमिकपञ्चस्थल-प्रतिपादितपाशपञ्चकराहित्येन स्वं परं च न जानातीति प्रतिपादयति--

अपरिमिते स्फुरणरूपे,

"एकमेवाद्वितीयं ब्रह्म"

इति श्रुतेः स्वगतसजातीयविजातीयभेदशून्ये परब्रह्मणि सामरस्यं गतः अङ्गालेपः स्वात्मानं वा परं वा जानाति किम्? न जानातीत्यर्थः ।

अथ अमुमेवार्थं पञ्चभिः सूत्रैः[2] विशेषयति—

---

[1] सर्वपाशेऽपीति यावत् ।
[2] पञ्चभिः श्लोकैः इत्यर्थः ।

1469

न बन्धो न च मुक्तिश्च न देवाद्यभिमानिता ।
न सुखं नैव दुःखं च नाज्ञानं ज्ञानमेव वा ।

1470

नोत्कृष्टत्वं न हीनत्वं नोपरिष्टान्न चाप्यधः ।
न पश्चान्नैव पुरतः न दूरे किञ्चिदन्तरे ।

1471

सर्वाकारे चिदानन्दे सत्यरूपिणि शाश्वते ।
पराकाशमये तस्मिन् परे ब्रह्मणि निर्मले ।

1472

एकीभावमुपेतानां योगिनां परमात्मनाम् ॥
परापरपरिज्ञानपरिहासकथा[1] कुतः ? ॥

---

यत्र अद्वैतवैभववति ब्रह्मणि योगात् दृग्द्वयवत् समानसमरसयोगात् "अहं त्वं" इति भेदविभ्रमः नास्ति । उभयोरपि अहंप्रत्ययैकत्व विश्रान्तत्वात्, संयोगवियोगौ च न स्तः । ज्ञेयज्ञातृकल्पना यत्र नास्ति, बन्धो मुक्तिश्च यत्र नास्ति, देवत्वाद्यभिमानोऽपि यत्र नास्ति, न सुखं वैषयिकसुखं यत्र नास्ति, नैव तादृग्दुःखम्, नेन्द्रियजं ज्ञानम् नाज्ञानम्

---

1 उत्तममानवजन्मनि अननुभाव्या परिहासास्पदा कथा इति यावत् ।

1473 [स्थलनिगमनम् ]

देशकालानवच्छिन्नतेजोरूपसमाश्रयात् ।
स्वपरज्ञानविरहात् स्वपराज्ञस्थलं विदुः ॥

(99) इति स्वपराज्ञस्थलम् (12-7)

---

न श्रेष्ठत्वम् , न निकृष्टत्वम् नोपरिभागः न चाधोभागः न पश्चाद्भागः न पूर्वभागश्च तस्मिन्नदूरे किञ्चिद्दूरे सर्वस्वरूपे चिदानन्दसत्यरूपिणि शाश्वते निर्मले पराकाशमये ब्रह्मणि एकीभावं गतानां अत एव परब्रह्मस्वरूपाणां शिवयोगिनां "परं स्वं च न जानामी"ति परिहासप्रसङ्गः कुतः ? व्यापकत्वात् एकत्वात् नास्तीत्यर्थः ॥

अथ इममर्थमेव विशेषयन्,[1] स्वपराज्ञस्थलं समापयति—

तेजोरूपं चित्प्रकाशरूपमित्यर्थः । शिष्टं स्पष्टम् ॥

—o—

[1] स्पष्टतया प्रकटयन् ।

## (100) अथ ऐक्यस्थले भावाभावलयस्थलम् (12-8)

1475 [भावाभावलयहेतुः]

त्वन्ताऽहन्ता विनिर्मुक्ते शून्यकल्पे चिदम्बरे ।[1]
एकीभूतस्य सिद्धस्य भावाभावकथा कुतः ॥

---

1474 [भावभावलयस्थलम्]

अथ—

"स्वप्नान्तं जागरितान्तं च[2]
उभौ येनानुपश्यति ।
महान्तं विभुमात्मानं
मत्वा धीरो न शोचति ॥"

इति कठवल्लीश्रुत्यनुसारेण,

'भावाभावद्वयातीतं
स्वप्नजागरणातिगम् ।
मृत्युजीवननिर्मुक्तं
तत्त्वं तत्त्वविदो विदुः ॥'[3]

इति योगजागमवचनानुसारेण च तत्त्वयपञ्ज्ञानशून्यस्य शिवयोगिनः भावाभावौ न स्तः इति निरूपयति—

---

1 ज्ञानस्वरूपे ।
2 उभयसन्धिस्थानमित्यर्थः ।
3 इदमेव 'न जीवितं नो मरणं विचित्रम्' इत्यादिनोक्तम् ।

1476 [तादृशलयस्वरूपविवरणम्]

अहम्भावस्य शून्यत्वात् अभावस्य तथाऽऽत्मनः।
भावाभावविनिर्मुक्तः जीवन्मुक्तः प्रकाशते ॥

---

परिच्छिन्नशरीरविशिष्टत्वं अहम्भावरहिते शून्यसदृशे चिदाकाशे एकरसीभूतस्य स्वपरज्ञानशून्यस्य सिद्धस्य शिवयोगिनः भावाभावप्रसङ्गः कुतः ?[1] नास्तीत्यर्थः ॥

अथ तद्भावाभावलयस्वरूपं सूत्रद्वयेन प्रतिपादयति—

अहम्भावराहित्यात् आत्मनः,

"अयमात्मा ब्रह्म"

इति प्रसिद्धपरमात्मनः अभावस्य तथा शून्यत्वात् जीवन्मुक्तः स्वपरज्ञान-शून्यः सन् अमनस्क[2]तन्द्रिमुद्रास्थितः शिवयोगी भावाभावनिर्मुक्तः, 'अहम्' इति परिच्छिन्नदेहाहम्भावः आत्मा नास्तीत्यभावः, एवंरूप भावाभावशून्यः सन् स्वस्वरूपेण प्रकाशते सकलदुःखभोक्ता सन् सुषुप्तिलयगामिमूलाहङ्कारोऽस्तीति भावेन सर्वसाक्षिकत्वेन अवस्थात्रयेऽपि[3] अवच्छेदेन भासमानचैतन्यं नास्तीत्यभावेन च विविक्तः एव भावाभाव-रहितः इत्यर्थः ॥

---

[1] उभयोरपि तदा लयप्राप्तेः।
[2] अयमेको मुद्राभेदः।
[3] जाग्रत्स्वप्नसुषुप्तिषु।

1477

सुखदुःखादिभावेषु नाभावो भाव एव वा ।
विद्यते चित्स्वरूपस्य निर्लेपस्य महात्मनः ॥

1478 [एतादृशलयसम्पन्नस्य दर्शनशून्यता]

यस्मिन् ज्योतिषि चिद्रूपे दृश्यते नैव किञ्चन ।
सद्रूपं वाऽप्यसद्रूपं भावाभावं विमुञ्चतः ॥

1479 [स्थलनिगमनम्]

प्रतीयमानौ विद्येते भावाभावौ न कुत्रचित् ।
लिङ्गैक्ये सति यत्तस्मात् भावाभावलयस्थलम् ॥

---

उक्तलक्षणमूलाहङ्कारलेपरहितस्य चित्स्वरूपस्य महापुरुषस्य सुखदुःखादिसम्बन्धेषु अभावः भाव एव वा न विद्यते,[1] निर्लेपत्वेन व्यापकत्वादित्यर्थः ॥

एवं भावाभावशून्यस्य किमपि न दृश्यते इत्याह—

स्पष्टम् ॥

अथ भावाभावलयस्थलं समापयति—

---

1 अभावस्य भावानुयायित्वात् भावस्य अभावान्तत्वादिति एवमुक्तम् ।

(100) इति भावाभावलयस्थलम् (12-8)

---

## (101) अथ ऐक्यस्थले ज्ञानशून्यस्थलम् (12-9)

---

प्रकाशमानौ भावाभावौ शिवलिङ्गैकरसीभूतमहापुरुषविषये क्वचिदपि यस्मात् कारणात् न विद्येते न स्तः,[1] तस्मात् भावाभावलयस्थलमित्युक्तमित्यर्थः ॥

---

1480 [ज्ञानशून्यस्थलम्]

अथ—

" अप अप्स्वग्निमग्नौ वायुं वायौ व्योम्नि व्योम लक्षयेत्, एवं अन्तर्गतं चित्तं पुरुषे प्रतिमुच्यते "[2]

इति मैत्रेयश्रुत्यनुसारेण,

" सर्वशून्यं निराभासं
सामरस्यं तथा भवेत् ।
घृते घृतं यथा न्यस्तं
क्षीरं क्षीरे यथैव च ॥"

इति सर्वज्ञानोत्तरवचनानुसारेण च स्वपरज्ञानशून्यत्वेन भावाभावं

---

[1] न प्रकाशेते इति यावत् ।
[2] प्रतिमोक्षः लयः इति तन्निरुक्तिः ।

1481 [ज्ञानशून्यस्थितिविवरणम् ]

परापरसमापेक्षभावाभावविवेचनम् ।
ज्ञानं ब्रह्मणि तन्नास्ति ज्ञानशून्यस्थलं विदुः ॥

1482

जले जलमिव न्यस्तं वह्नौ वह्निरिवार्पितम् ।
परे ब्रह्मणि लीनात्मा विभागेन न दृश्यते ॥

---

लयसम्पन्नस्य शिवयोगिनः अभेदसुलभज्ञानशून्यस्थलं सूत्रत्रयेण-निरूपयति—

परापरज्ञानाभिलाषयुक्तभावाभावविवेकवत्[1] ज्ञानं ब्रह्मणि परब्रह्म-स्वरूपे भावाभावलयसम्पन्ने शिवयोगिनि नास्ति । तत् ज्ञानशून्यस्थलमिति विदुः जानन्तीत्यर्थः ॥

तर्हि सः कथं तिष्ठति ? इत्यत्राह—

जलमिश्रजलमिव वह्निस्थापितवह्निरिव परब्रह्मस्वरूपमहालिङ्ग लयीभूतभावाभावप्रयत्नवान् शिवयोगी भिन्नभावेन न दृश्यते, न तिष्ठतीत्यर्थः ।[2] ज्ञानशून्यत्वादिति ॥

1483 [ज्ञानशून्यतायां विज्ञेयो विशेषः]

अत्र द्वैतज्ञानशून्यशिवाद्वैते जलवह्निदृष्टान्तः आप्यतैजसस्थलरूप-द्वयुगैक्यवत् समानसमरसरूपः, न तु स्वरूपहानिवृद्धिकरः

---

[1] विवेकविशिष्टमित्यर्थः ।
[2] तथा स्थितौ सत्यां केनापि साधनेन दर्शनासम्भवादिति भावः ।

सर्वात्मनि परे तत्त्वे भेदशङ्काविवर्जिते ।[1]
ज्ञात्रादिव्यवहारोत्थं कुतो ज्ञानं विभाव्यते ॥

1484

निर्विकारं निराकारं नित्यं सीमाविवर्जितम् ।
व्योमवत् परमं ब्रह्म निर्विकल्पतया स्थितम् ॥

1485

न पृथ्व्यादीनि भूतानि न ग्रहा नैव तारकाः ।
न देवा न मनुष्याश्च न तिर्यञ्चो न चापरे ॥

1486

तस्मिन् केवलचिन्मात्रसत्तानन्दैकलक्षणे ।
त्वन्ताऽहन्तादिसंरूढं विज्ञानं केन भाव्यते ॥

---

समुद्रजलवत् इति ॥

स्पष्टम् ॥

अथ तदेव सूत्रत्रयेण विशेषयति—

मृदादिवत् विकाररहितम् नीलपीताद्याकाररहितम्, अवधिरहितं परं ब्रह्म व्योमवत् निर्विकल्पकतया भेदराहित्येन स्थितम् तिष्ठति ।[2]

---

1 शङ्कापदं भयार्थेऽपि पर्यवस्येत्, द्वितीयाद्वै भयं भवतीति श्रुतेः ।
2 तिष्ठति—भासते इति यावत् ।

1487 [अस्य ज्ञानशून्यस्य त्रिपुटीभङ्गविधिः]

ज्ञेयाभावाद्विशेषेण शून्यकल्पं विभाव्यते ।
ज्ञातृज्ञेयादिभिः शून्यं शून्यं ज्ञानादिभिर्गुणैः ॥

---

अत एव भिन्नतया प्रतीयमानभूम्यादिभूतानि न, आदित्यादिनवग्रहाश्च न, अश्विन्यादितारकाश्च न, विष्ण्वादिदेवाश्च न, मनुष्याश्च न, तिर्यक्प्राणिनश्च न, परे च न ॥[1] तस्मात् केवलसच्चिदानन्दरूपे ब्रह्मणि त्वमहमादिकव्यवहारोत्थविशेषज्ञानं केन भाव्यते ? न केनापि भाव्यते इत्यर्थः ॥

अथ—

" एतद् ज्ञेयं नित्यमेवात्मसंस्थं
नातः परं वेदितव्यं च किञ्चित् ॥"

इति श्वेताश्वतरश्रुत्यनुसारेण,

" केवलं ज्ञेयमित्युक्तं
वेदितव्यं च किञ्चन ।"

इति देवीकालोत्तरवचनानुसारेण च स्वस्वरूपज्ञानिनः[2] त्रिपुटीमय-प्रपञ्चज्ञानं नास्तीति पञ्चभिः सूत्रैः प्रतिपादयति—

---

1 तस्यां पारमार्थिकावस्थायां तथैव हि वक्तव्यमिति ।

2 ज्ञानं ज्ञेयं ज्ञाता इति, प्रमाणं प्रमेयं प्रमाता इति वा त्रिपुटी ।

1488

आदावन्ते च मध्ये च शून्यं सर्वत्र सर्वदा ।
द्वितीयेन पदार्थेन शून्यं शून्यं विभाव्यते ॥

1489 [शून्यपदार्थः]

केवलं सच्चिदानन्दप्रकाशाद्वयलक्षणम् ।
शून्यकल्पं पराकाशं परब्रह्म प्रकाशते ॥[2]

---

ज्ञेयाभावात् सकलवस्तुविषयकज्ञानाभावेन ज्ञेयपदार्थशून्यत्वात्,[1]

"संविदेव भगवती विषय-
सत्त्वोपगमे शरणम् ।"

इति प्राभाकरैरप्यङ्गीकृतत्वात्, शून्यकल्पं ज्ञानमिति शेषः। विभाव्यते। तस्मात् ज्ञातृज्ञेयादित्रिपुटीमयप्रपञ्चशून्यं ज्ञानादिभिः ज्ञानेच्छादिगुणैश्च शून्यं आद्यन्तमध्येषु सर्वत्र सर्वदा शून्यं केनेत्यत्राह—द्वितीयेन पदार्थेन शून्यमिति, तस्मात् शून्यं शून्यज्ञानं विभाव्यते ॥

अथ तत् किम्? इत्यत्राह—

केवल सच्चिदानन्दप्रकाशद्वितीयशून्यचिह्नं अत एव शून्यसदृशं परब्रह्म महाकाशरूप सत् प्रकाशते इत्यर्थः ॥

---

[1] इदं च ज्ञानविशेषरूपमेवेति अग्रे वक्ष्यते ।

[2] आकाशो ह वै नामरूपयोः निर्वहिता इत्यादिश्रुतेः ।

शून्यज्ञानादिसङ्कल्पे शून्यसर्वार्थसाधने ।
ज्योतिर्लिङ्गे चिदाकारे स्वप्रकाशे निरुत्तरे ॥
1491
एकीभावमुपेतस्य कथं ज्ञानस्य सम्भवः ॥[1]

---

1490 [शून्यसम्पन्नस्य विकल्पाभावोपपादनम्]

अथैवंरूपे ब्रह्मणि तादात्म्यापन्नस्य विकल्पज्ञानोत्पत्तिः न सम्भवतीत्याह—

शून्यज्ञानेच्छादिसङ्कल्पवति शून्यसर्वार्थसाधने स्वस्मादुत्तररहिते परमशिवलिङ्गज्योतीरूपचिदाकारस्वप्रकाशे एकीभावं गतस्य शिवयोगिनः ज्ञानस्य सम्भवः वृत्तिज्ञानाविर्भावः कथं स्यात् ? न कथञ्चिदपीत्यर्थः ॥

1492 [परमुक्तिस्वरूपव्याख्यानेन]
[शून्यस्थलनिगमनम्]

अथ—

"नेति नेति"
"अस्थूलं अनणु अह्रस्वदीर्घप्लुतम्"

इति बृहदारण्यकश्रुत्यनुसारेण,

"अनाख्ये तु[2] निरालम्बे
ह्यग्राह्ये मानवर्जिते ।
निस्तत्वे योजितो मुक्तः
इति शास्त्रस्य निश्चयः ॥"

---

[1] कथं ज्ञानं हि सम्भवेत् (ग)
[2] अनाख्ये=नामरूपरहिते ।

यस्य कार्यदशा नास्ति [1]कारणत्वमथापि वा ।
शेषत्वं नैव शेषित्वं[2] स मुक्तः पर उच्यते ॥

---

इति निश्वासकारिकावचनानुसारेण,

" पशुपशुपतियोगो ह्यगुणैक्यप्रयोगः
गगनगगनदेशः सिन्धुसिन्धुप्रदेशः ॥
समसमरसरूपो भिन्नभिन्नस्वरूपः ।
निशिसमरसकान्तावल्लभाश्लेषकान्तः ॥"

इति त्रयीतन्त्रयुक्तियुक्ताभियुक्तोक्त्यनुसारेण च परमुक्तलक्षणं उक्त्वा ज्ञान-शून्यस्थलं समापयति—

यस्य सर्वं 'नेति नेति' निवार्य तत्त्वातीतस्य स्वस्वरूपसम्पन्नस्य कार्यावस्था नास्ति । अथापि वा तन्न चेत् कारणत्व च नास्ति । यस्य परब्रह्मपरशिवपरलिङ्गादिपर्यायनामोच्चारवतः स्वस्वरूपसम्पन्नस्य शेषत्वं अवशेषत्वं[3] शेषित्वं शेषवत्त्वं च नास्ति, सः नित्यपरिपूर्णः सच्चिदानन्द-स्वरूपपरमुक्त एवेत्युच्यते इत्यर्थः ॥

अयं भावः—

[4]" अनीशश्चात्मा बध्यते भोक्तृभावात् ।" इति,

---

1 कारणत्वं कारणदशा ।
2 शेषत्वदशा शेषित्वदशा च ।
3 किञ्चिन्न्यूनत्वे हि शेषत्वम् अवशेषत्वं वा, पूर्णे तदसम्भवादिति भावः ।
4 अनीशः अस्वतन्त्रः कर्मपाशपराधीनः इति भावः ।

(101) इति ज्ञानशून्यस्थलम् (12-9)

इति ऐक्यस्थलं लिङ्गस्थलं च

॥ समाप्तम् ॥

इति एकोत्तरशतस्थलानां

निरूपणं सम्पूर्णम्

" ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ "

इति च श्वेताश्वतरश्रुत्या,

" पाशबद्धो भवेज्जीवः
पाशमुक्तः परः शिवः । "

इति वीरागमवचनेन च, देशिकोपदेशेन[1] च मायामलबिन्दुतिरोभावकर्मपाशविमुक्तपरशिवशब्दवाच्यस्वस्वरूपाभिव्यक्तिरेव परमुक्तिः इति ।

एतल्लिङ्गत्रयं शिवलिङ्गैक्यस्य अङ्गत्रयस्य क्रमेण संयोजनीयम् ॥

[1] गुरूपदेशेनेत्यर्थः ।

[2] अनुभवपर्यायोऽयम् ।

## ॥ अथ शास्त्रोपसंहारः ॥

1493 [ रेणुकेन शास्त्रपरिसमाप्तौ मौनभावसंश्रयः ]

एतावदुक्त्वा परमप्रबोधं[4] अद्वैतमानन्दशिवप्रकाशम् ।
देव्यै[5] पुरा भाषितमीश्वरेण तूष्णीमभूत् ध्यानपरो गणेन्द्रः ॥

---

अथ एतच्छास्त्रसङ्ग्रह[1]कृत् शिवाचार्यः स्वशिष्यप्रशिष्यान्[2] प्रति एतच्छास्त्रोपरमं[3] सूचयन् रेणुकगणेश्वरः निरुत्तरः सन् तूष्णीं स्थितः इति सूत्रद्वयेन कथयति —

गणेन्द्रः रेणुकगणेश्वरः परमेश्वरेण देव्यै पार्वत्यै पुरा रहस्यं सत् भाषितम् शिवानन्दप्रकाशकं शिवाद्वैतरूपं परमप्रबोधम् उपक्रमोपसंहारमध्यपरामर्शेष्वपि स्वस्वरूपप्रकाशकपिण्डादिवृत्तिज्ञानशून्यान्तवीरशैवशास्त्रं एतावत् अनेन प्रकारेण उक्त्वा, कुम्भसम्भवाय उपदिश्य स्वस्वरूपध्यानासक्तः[5] सन् तूष्णीं अभूत् मौनमुद्रावलम्बी बभूव इत्यर्थः ॥

---

[1] सङ्ग्रह —विवक्षितानामपेक्षितानां सर्वेषामप्यर्थानाम् एकत्र समावेशः ।

[2] शिष्याणां शिष्याः=प्रशिष्याः ।

[3] उपरमः समाप्तिः ।

[4] परमप्रबोधं—ऐकान्तिकात्यन्तिकप्रबोधरूपं प्रबोधहेतुं च ।

[5] स्वसमधिकध्येयाभावात् ।

1494 [तदा अगस्त्योक्तिः]

एवमुक्त्वा समासीनं शिवयोगपरायणम् ।
रेणुकं तं समालोक्य बभाषे प्राञ्जलिर्मुनिः ॥

1495 [अगस्त्यकृतरेणुकस्तुतिः]

अगस्त्य उवाच—

शिवयोगविशेषज्ञ ! शिवज्ञानमहोदधे !
समस्तवेदशास्त्रादिव्यवहार[2]धुरन्धर !

1496

आलोकमात्रनिर्धूतसर्वसंसारबन्धन !
स्व[3]च्छन्दचरितोल्लास स्वप्रकाशात्मवच्छिव !

1497

अवतीर्णमिदं शास्त्रं अनवद्यं त्वदाननात् ।
श्रुत्वा मे मोदते चित्तं ज्योतिः पश्ये[4] शिवाभिधम् ॥

---

बभाषे स्तुतिमारब्धवान्[1] इत्यर्थः । शिष्टं स्पष्टम् ॥

अथ सप्तभिः सूत्रैः श्रीरेणुकस्तुतिं करोति—

अगस्त्य उवाच— इति ।

शिवध्यानयोगविशेषज्ञ ! शिवज्ञानस्य समुद्र ! समस्तवेदागमपुराणादिशास्त्रव्यवहारभारवाहक ! दर्शनमात्रनिवारितसमस्तजनसंसार-

---

[1] स्तोतुमारब्धवान् इति स्यात् ।

[2] व्यवहारः—विस्तृततया व्याख्यानम् ।

[3] अत्र स्वपदं सुसंस्कृतात्मपरम् । अन्यथा लोकप्रसिद्धस्वपदार्थोपादाने आदर्शत्वासम्भवात् ।

[4] अत्र पश्ये—पश्यामीत्यर्थः । 'यदा पश्यः पश्यते रुक्मवर्णम्' इत्यादिवत् आर्षः आत्मनेपदप्रयोगः ।

1498

अद्य मे सफलं जन्म गतो मे चित्तविभ्रमः ।[1]
सञ्जाता पाशविच्छित्तिः[2] तपांसि[3] फलितानि मे ॥

1499

इदानीमेव मे जातं मुनिराजोत्तमोत्तमम् ।
इतः परं मया नास्ति सदृशो भुवनत्रये ॥

1500

शास्त्रं तव मुखोद्गीर्णं[4] शिवाद्वैतपरम्परम् ।[5]
मां विना कस्य लोकेषु श्रोतुमस्ति तपः शुभम् ॥

बन्ध ! स्वेच्छाचाराविर्भाव ! स्वप्रकाशेनैव चैतन्यवच्छिवस्वरूप ! भो गणेन्द्र ! त्वन्मुखादाविर्भूतं दोषरहितं इदं वीरशैवशास्त्रं श्रुत्वा मे मनः नन्दति, शिवप्रकाशं पश्ये ॥

अद्य मे इति सर्वत्र सम्बन्धः ॥

मुनीश्वराणां ऋषिश्रेष्ठानां उत्तमोत्तमत्वमित्यर्थः । धर्मधर्मिणोरभेदात् । शिष्टं स्पष्टम् ॥

---

[1] विभ्रमः—अज्ञानान्यथाज्ञानादिरूपो मोहः ।
[2] विच्छित्तिः—विच्छेदः ।
[3] तत्त्वज्ञानसम्पादनार्थं कृतानि मनोवाक्कायकृतानि तपांसि ।
[4] उद्गीर्णपदेन अकपोलकल्पितत्वम् सहजाविर्भावश्च द्योत्यते ।
[5] परं अत्यन्तश्रेष्ठं शिवाद्वैतप्रतिपादकं शास्त्रमित्यन्वयः ।

1501

तपसां परिपाकेन शङ्करस्य प्रसादतः ।
आगतस्त्वं महाभाग ! मां कृतार्थयितुं गिरा ॥

1502 [अगस्त्यं प्रति रेणुकवचनम् ]

इति स्तुवन्तं विनयात् अगस्त्यं मुनिपुङ्गवम् ।
आलोक्य करुणादृष्ट्या बभाषे स गणेश्वरः ॥[1]

1503 [अगस्त्यस्यैव शिवशास्त्रश्रवणतत्प्रसादयोः पात्रता]

अगस्त्य ! मुनिशार्दूल ! तपस्सिद्धमनोरथ ।
त्वां विना शिवशास्त्रस्य कः श्रोतुमधिकारवान् ॥

---

उद्गीर्णं बहिर्निर्गतमित्यर्थः । शास्त्रं वीरशैवशास्त्रम् । महाभाग श्रेष्ठेत्यर्थः । शिष्टं स्पष्टम् ॥

अथ सङ्ग्रहकृत् शिवाचार्यः कुम्भसम्भवं श्रीरेणुकः स्तुतिं कृतवान् इत्याह —

विनयात् भक्त्येत्यर्थः । शिष्टं स्पष्टम् ॥

"एकोत्तरशतं प्रोक्ताः
दीक्षाभेदा[2] मया पुरा ।
दीक्षितस्तासु गुरुणा
भक्तोऽस्मिन्नधिकारवान् ॥"

इति योगजागमवचनात् अस्मिन् शास्त्रे त्वां विना अधिकारी नास्तीत्यर्थः ॥

---

[1] गणेश्वरः श्रीरेणुकाचार्यः ।

[2] स्थलानामपि दीक्षापदेनैवात्र व्यवहारः योगार्थाभिप्रायेण ।

1504

पात्रं शिवप्रसादस्य भवानेको न चापरः ।
इति निश्चित्य कथितं मया ते तन्त्र[1]मीदृशम् ॥

1505 [तस्य शास्त्रप्रवर्तनादेशः]

स्थाप्यतां सर्वलोकेषु तन्त्रमेतत् त्वया मुने ।
ईदृशं शिवबोधस्य साधनं नास्ति कुत्रचित् ॥

1506 [शिवशास्त्रमूलम्]

रहस्यमेतत् सर्वज्ञः सर्वानुग्राहकः शिवः ।
अवादीत् सर्वलोकानां[2] सिद्धये[3] पार्वतीपतिः ॥

1507 [शास्त्रस्य महिमा अनधिकारिषु अदानाज्ञा च]

तदिदं शिवसिद्धान्तसाराणामुत्तमोत्तमम् ।
वेदवेदान्तसर्वस्वं विद्याचारप्रवर्तकम् ॥

---

ईदृशं वीरशैवतन्त्रमित्यर्थः ॥

स्पष्टम् ॥

सिद्धये भोगमोक्षसिद्धये इत्यर्थः । एतद्रहस्यं वीरशैवरहस्यमित्यर्थः । शिष्टं स्पष्टम् ॥

---

[1] तन्त्रपदं शास्त्रपरम् ।

[2] सर्वेषामपि जनानां तत्त्वजिज्ञासूनाम् ।

[3] सिद्धये—तत्त्वाधिगमायेति शब्दार्थः ।

1508

वीरमाहेश्वरग्राह्यं शिवाद्वैतप्रकाशकम् ।
परीक्षितेभ्यो दातव्यं शिष्येभ्यो नान्यथा क्वचित् ॥

---

तदिदं वीरशैवषट्स्थलशिवयोगमार्गप्रतिपादकं तदिदं शास्त्रं कामिकादिवातुलान्ताष्टाविंशतिदिव्यागमसाराणां उत्तमोत्तमं चतुर्वेद-द्वात्रिंशदुपनिषत्सर्वस्वं ज्ञानक्रियाप्रकाशकं[1] वीरमाहेश्वरैरङ्गीकरणीयं परशिवाद्वैतप्रतिपादकमिदं शास्त्रम् ॥

"एताः संहिताः नानन्तेवासिने प्रब्रूयात्, नासंवत्सरवासिने, नाप्रवक्त्रे,[2] इत्याचार्य आचार्यः ॥"

इति ऐतरेयश्रुतेः,

"भक्तस्यैवात्मशिष्यस्य
विरक्तस्य महामतेः ।
गुरुणा ज्ञानिना देयं
आनन्दरसनिर्भरम् ॥"[3]

इति योगजागमवचनाच्च परीक्षितेभ्यः शिष्येभ्यः देयम् ।

अनधिकारिणे न ब्रूयादित्यर्थः ॥

---

[1] तथा च मूले विद्याचारपदे यथायोगं ज्ञानमार्गकर्ममार्गप्रकाशकं इति भावः ।

[2] यः स्वाधिगतार्थमर्थं सदधिकारिणे हार्दं उपदिश्य प्रकाशयति सः प्रवक्ता ।

[3] तत्त्वार्थमिति शेषः ।

1509 [फलश्रवणेन शास्त्रपरिसमापनम्]

एतच्छ्रवणमात्रेण सर्वेषां पापसंक्षयः ।
अवतीर्णं मया भूमौ शास्त्रस्यास्य प्रवृत्तये ।[1]
प्रवर्तय शिवाद्वैतं त्वमपि ज्ञानमीदृशम् ॥[2]

इति श्रीमत् षट्स्थलब्रह्मिणा शिवयोगि-
नाम्ना रेणुकाचार्येण विरचिते
वीरशैवधर्मनिर्णये सिद्धान्त-
शिखामणौ शिवैक्यस्थलविषय-
नवविधलिङ्गप्रसङ्गो नाम
विंशतितमः परिच्छेदः
समाप्तः ॥

---

स्पष्टम् ॥

इति श्रीमत्पदवाक्यप्रमाण-
पारावारधुरीणश्रीमरितोण्टदार्येण
विरचितायां तत्त्वप्रदीपिकाख्यायाम्
सिद्धान्तशिखामणिव्याख्यायां
शिवैक्यस्थलविषयनवविध-
लिङ्गप्रसङ्गो नाम
विंशतितमः परिच्छेदः ॥

---

[1] लोके सार्वजनिकप्रसरणायेत्यर्थः ।
[2] एतदेवेति यावत् ।

॥ श्री शिवाय नमः ॥

# सिद्धान्तशिखामणौ

## एकविंशः परिच्छेदः

## रेणुकशिवैक्यलिङ्गप्रसङ्गः ॥

1511 [ रेणुकान्तर्धानम् ]

इत्युक्त्वा पश्यतस्तस्य पुरस्तादेव रेणुकः ।
अन्तर्दधे महादेवं चिन्तयन्नन्तरात्मना ॥

1512 [शास्त्रश्रवणफलम् ]

य इदं शिवसिद्धान्तं वीरशैवमतं परम् ।
शृणोति शुद्धमनसा स याति परमां गतिम् ॥

---

1510 [ससङ्गतिपरिच्छेदावतरणम् ]

एवं रेवणसिद्धेश्वरेण कुम्भसम्भवाय पिण्डादिवृत्तिज्ञानशून्यान्तोपदिष्टं वीरशैवसङ्ग्रहं शिवयोगिसंज्ञकाचार्यः स्वशिष्यप्रशिष्येषु प्रख्यातं कृत्वा,[1] अनन्तरं रेणुकविभीषणसंवादं रेवणसिद्धेश्वरैक्यं[2] च पञ्चपञ्चाशत्सूत्रैः[3] सङ्गृह्णाह—

---

[1] पाठप्रवचनादिभिः रहस्योपदेशैश्चेति शेषः ।

[2] रेवणसिद्धस्य ईश्वरे ऐक्यमित्यर्थः ।

[3] श्लोकानामेवात्र सूत्रशब्देन व्यवहारः कृतः । "अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्" इत्यादिसूत्रलक्षणलक्षितत्वादिति ज्ञेयम् ।

1513 [ रेणुकस्य लङ्काप्रवेशः]

स्वच्छन्दाचाररसिकः स्वेच्छानिर्मितविग्रहः ।[2]
आससाद पुरीं लङ्कां रेणुको गणनायकः ॥

1514 [तस्य विभीषणेन सत्कारः]

तमागतं महाभागं सर्वागमविशारदम् ।
विभीषणः समालोक्य गेहं प्रावेशयन्निजम् ॥

---

स्पष्टम् ॥

यः पुरुषः वीरशैवमतं अङ्गलिङ्गषट्स्थलरूपं[1] सत् वीरशैवधर्मनिर्णय-संमतं परं सर्वोत्कृष्ट इदं शिवसिद्धान्तं श्रुतिसंमतमेतत् शिवसिद्धान्तं शुद्धमनसा निर्मलचित्तेन शृणोति, सः परमां गतिं परममुक्तिं यास्ति इत्यर्थः ॥

अथ अन्तर्हितो रेणुकः लङ्कां प्रविष्टवानित्याह—

निर्मलस्वेच्छाचाररसिकः इत्यर्थः । शिष्टं स्पष्टम् ॥

महाभागः श्रेष्ठः सर्वागमविशारदः कामिकादिवातुलान्तदिव्यागम-कुशलः इत्यर्थः ॥ शिष्टं स्पष्टम् ॥

---

[1] अङ्गषट्स्थल-लिङ्गषट्स्थलात्मक द्वादशस्थलसंयुक्तमित्यर्थः ।

[2] प्रायशः सिद्धपुरुषाणां तथाविधां महतीं शक्तिमनुगृह्णाति भगवान् भक्तानुग्रहार्थमिति इतिहासप्रसिद्धिः ।

1515

भद्रासने निजे रम्ये निवेश्य गणनायकम् ।[1]
अर्घ्यपाद्यादिभिः सर्वैः उपचारैरपूजयत् ।।

1516

पूजितेन प्रसन्नेन रेणुकेन निरूपितः ।
निषसाद तदभ्याशे स निजासनमाश्रितः ।।

1517 [ रेणुके विभीषणस्य विज्ञप्तिः]

आबभाषे गणेन्द्रं[2] तं कृताञ्जलि विभीषणः ।
मानुषाकारसम्पन्नं साक्षात् शिवमिवापरम् ।।

---

निजे भद्रासने । स्वकीयसिंहासने इत्यर्थः । शिष्टं स्पष्टम् ।।

सः विभीषणः पूजाप्रसन्नेन श्रीरेणुकेन आज्ञापितः सन् निषसाद उपविष्टवान् इत्यर्थः ।।

अथ विभीषणः मानुषाकृतिं साक्षादपरं शिवमिव स्थितमिति शेषः । तं गणेन्द्रं रेणुकंकृताञ्जलि कृतं अञ्जलिपुटं यस्मिन् कर्मणि यथा भवति तथा[3] आबभाषे विज्ञापनवचनं प्रयुक्तवान् इत्यर्थः ।।

---

1 रेणुकाचार्यम् ।

2 रेणुकाचार्यम् ।

3 भाषणक्रियाविशेषणमिति भावः ।

1518

रेणुक ! त्वां गणाधीश ! शिवज्ञानपरायण !
अवतीर्णं महीमेनां इति सम्यक् श्रुतं मया ॥

1519

मद्भाग्यगौरवादद्य समाया[2]स्त्वं पुरीमिमाम् ।
कथं भाग्यविहीनानां सुलभाः स्युः भवादृशाः ॥

1520

मत्समो नास्ति लोकेषु भाग्यातिशयवत्तया ।
यस्य गेहं स्वयं प्राप्तः भवान् साक्षान्महेश्वरः ॥

---

भो ! शिवज्ञानपरायण ! गणाधीश ! श्रीरेणुक ! त्वां एनां महीं भूलोकं प्रत्यवतीर्णं सन्तं मया सम्यक् इति लोकवार्तया श्रुतं इत्यर्थः ॥[1]

स्पष्टम् ॥

भो ! रेणुक ! भूलोकगतप्रत्यक्षमहेश्वरः भवान् स्वयमेव यस्य मे राजालयं प्राप्तोऽसि, अतः भाग्यातिशयवत्त्वेन लोकेषु मत्समः कोऽपि नास्तीत्यर्थः ॥

1521

अथ न तावन्मात्रमित्याह —

---

[1] तादृशं त्वां अहं श्रुतवानिति तात्पर्यम् ।
[2] समायाः—समागतवानसि ।

कृतार्था मे पुरी ह्येषा कृतार्थो राक्षसान्वयः ।[1]
जीवितं च कृतार्थं मे यस्य त्वं दृष्टिगोचरः ॥

1522 [ रेणुकेन विभीषणानुग्रहः ]

इति ब्रुवाणं कल्याण राक्षसेन्द्रं गणेश्वरः ।
बभाषे सस्मितो वाणीं विश्वोल्लासकरीं शुभाम् ॥

1523

विभीषण ! महाभाग ! जाने त्वां धर्मकोविदम् ।
त्वां विना कस्य लोकेषु जायते भक्तिरीदृशी ॥

1524

समस्तशास्त्रसारज्ञं सर्वधर्मपरायणम् ।
अध्यात्मविद्यानिरतं आहुस्त्वां राक्षसेश्वर ! ॥

---

भो रेणुक ! त्वं यस्य मे दृष्टिगोचरः तस्मात् मे ममैषा लङ्कापुरी कृतार्था इति ॥

सस्मितः मन्दस्मितेन युक्तः सन् इत्यर्थः । विश्वोल्लासकरीं सर्वेषामानन्दकरीं इत्यर्थः । शिष्टं स्पष्टम् ॥

अथ तत्प्रकारं चतुर्भिः श्लोकैः वर्णयति—

स्पष्टम् ॥

भो विभीषण ! त्वां समस्तनिगमादिशास्त्रसारज्ञं सकलशिवधर्मेषु

---

[1] अन्वयः—वंशः ।

1525

त्वदीयधर्मसम्पत्तिं श्रुत्वाऽहं विस्मिताशयः ।
व्रजान्[1] कैलासमचलं त्वदन्तिकमुपागतः ॥

1526

प्रीतोऽस्मि तव चारित्रैः शोभनैः लोकविश्रुतैः ।[2]
दास्यामि ते वरं साक्षात् प्रार्थयस्व यथेप्सितम् ॥[3]

1527 [ रेणुकं प्रति विभीषणस्योत्तरम् ]

इति प्रसादसुमुखे भाषमाणे गणेश्वरे ।
प्रणम्य परया प्रीत्या व्याजहार विभीषणः ॥

---

परायणम् तत्परमित्यर्थः । शिवाद्वैतज्ञानयोगरूपाध्यात्मविद्यानिरतं सन्तं आहुः इत्यर्थः ।

अतः कारणात् कैलासमचलं व्रजन् अहं त्वदीयशिवधर्मसम्पत्तिं श्रुत्वा आश्चर्ययुक्तचित्तः सन् त्वत्समीपं आगतोऽस्मि इत्यर्थः ॥

स्पष्टम् ॥

व्याजहार विज्ञापनवाक्यं प्रयुक्तवान् इत्यर्थः ॥

---

1 कैलासपर्वतं प्रति गच्छन् सन् मध्येमार्गमित्यर्थः ।

2 विश्रुतैः=प्रसिद्धैः ।

3 यथेष्टम् ।

1528

आगमानुग्रहादेव भवतः शिवयोगिनः ।
दुर्लभाः सर्वलोकानां समपद्यन्त सम्पदः ॥

1529 [विभीषणेन स्वकीयाभीष्टविशेषपरिपूर्तिप्रार्थना]

तथापि प्रार्थनीयं मे किञ्चिदस्ति गणेश्वर ।
सुकृते परिपक्वे हि स्वयं सिध्यति वाञ्छितम् ॥

1530 [रावणवृत्तान्तः]

रावणो हि मम भ्राता माहेश्वरशिखामणिः ।
अदृष्टशत्रुसम्बाधं शशास हि जगत्त्रयम् ॥

---

अथ तत्प्रकारं षड्भिः सूत्रैः प्रदर्श्य स्वस्य रावणोक्ताभिप्रायं अष्टभिः सूत्रैः सूचयति—

भो! गणेश्वर! शिवयोगिनो भवतः आगमनरूपानुग्रहादेव सर्वजनदुर्लभाः सम्पदः समपद्यन्त प्राप्ताः इत्यर्थः ॥

मे मयेत्यर्थः ।[1] शिष्टं स्पष्टम् ॥

अदृष्टशत्रुसम्बाधं[2] यथा भवति तथा जगत्त्रयं हि प्रसिद्धं सत् शशास पालयामासेत्यर्थः ॥

---

[1] सम्बन्धसामान्ये षष्ठी तृतीयार्थे आर्षी प्रयुक्तेति भावः ।

[2] सम्बाधः हिंसा ।

1531

यस्य प्रतापमतुलं सोढुमक्षमशक्तयः ।
इन्द्रादयः सुराः सर्वे राज्यलक्ष्म्या वियोजिताः ॥[1]

1532

स तु कालवशेनैव[2] स्वचारित्रविपर्ययात् ।
रणे विष्णववतारेण रामेण निहतोऽभवत् ॥

1533 [रावणोक्तिस्मरणम्]

स तु रामशराविद्धः कण्ठस्खलितजीवितः ।
अवशिष्टं समालोक्य मामवादीत् सुदुःखितः ॥

1534

विभीषण ! विशेषज्ञ ! महाबुद्धे सुधार्मिक !
अवशिष्टोऽसि वंशस्य रक्षसां भाग्यगौरवात् ॥[3]

---

स्पष्टम् ॥

स्पष्टम् ॥

सः रावणः रामबाणेन क्षतिं लब्धवान् सन् कण्ठगतप्राणः सन् अवशिष्टं राक्षसेषु हतशिष्टं मां दृष्ट्वा अत्यन्तदुःखितः सन् प्रत्यवदत् इत्यर्थः ॥

अथ रावणोक्तप्रकारमुपपादयति—

स्पष्टम् ॥

---

[1] त्यक्तराज्यैश्वर्याः इति यावत् ।
[2] दुष्कर्मपरिपाकनिमित्तमेवेति भावः ।
[3] भाग्यविशेषात् गुरुतरादिति भावः ।

1535

वयं अज्ञानसम्पन्नाः[1] महत्सु द्रोहकारिणः ।
ईदृशीं तु गतिं प्राप्ताः दुस्तरा हि विधिस्थितिः ॥

1536

नवकं लिङ्गकोटीनां प्रतिष्ठाप्यमिह स्थले ।
इति सङ्कल्पितं पूर्वं मया तदवशिष्यते ॥

1537

कोटिषट्कं तु लिङ्गानां मया साधु[3] प्रतिष्ठितम् ।
कोटित्रयं तु लिङ्गानां स्थापनीयमतस्त्वया ॥

---

वयं अज्ञानसम्पन्नाः सन्तः महत्सु महतां विषये द्रोहकारिणः इति, ईदृशीं गतिं प्राप्ताः । तथाहि विधिस्थितिः दैवाधीनवृत्तिः दुस्तारा हि ! लङ्घितु अशक्या खलु ! इत्यर्थः ॥

इहस्थले इह लङ्कापत्तनस्थले नवकोटिलिङ्गं प्रतिष्ठाप्यम् इति मया पूर्वं सङ्कल्पितं, तत्र–किञ्चिदवशिष्टमस्ति[2] इत्यर्थः ॥

कियदवशिष्टम् ! इत्यत्राह—

अतः तत्सङ्कल्पपूरणार्थमित्यर्थः ॥

---

[1] अज्ञानावृताः इति भावः ।

[2] उत्तरवाक्यानुसारेण अत्र किञ्चिदिति शेषपूरणं कृतमिति ध्येयम् ।

[3] यथाशास्त्रम् ।

1538 [रावणे विभीषणकृतप्रतिज्ञानुसारेण कोटित्रयलिङ्गस्थापनप्रार्थना]

इति तस्य वचः श्रुत्वा दीनबुद्धेः मरिष्यतः ।
तथा साधु[1] करोमीति प्रतिज्ञातं मया तथा ॥

1539

युगपच्छिवलिङ्गानां[2] कोटित्रयमनुत्तमम् ।[3]
प्रतिष्ठाप्यं यथाशास्त्रं इति मे निश्चयोऽभवत् ॥

1540

लिङ्गकोटित्रयस्येह युगपत् स्थापनाविधौ ।
अविन्दन्नेकमाचार्यं अहमेवमवस्थितः ॥

1541

शिवशास्त्रविशेषज्ञ ! शिवज्ञाननिधिर्भवान् ।
आचार्यभावमासाद्य मम पूरय वाञ्छितम् ॥

---

स्पष्टम् ॥

स्पष्टम् ॥

इह लङ्कायामित्यर्थः । युगपत् लिङ्गत्रिकोटिस्थापनविषये मुख्यमाचार्यमलब्धवान्[4] सन् एवं[5] स्थितोऽस्मि इत्यर्थः ॥

शिवशास्त्रविशेषज्ञ ! भो रेवणसिद्ध ! भवान् शिवज्ञानस्य

---

[1] साधु--निश्चितमिति यावत् ।
[2] युगपत्--मध्ये विच्छेदं विरामं वा अन्तरेत्यर्थः ।
[3] न उत्तमं यस्मादनुत्तमं--उत्तमोत्तममिति यावत् ।
[4] विद्लृ लाभे इति धातोः अयमर्थः सम्पद्यते ।
[5] एवं--लिङ्गस्थापनमकृत्वेत्यर्थः ।

1542 [ रेणुकेन तदभीष्टपरिपूरणम् ]

तस्येति वचनं श्रुत्वा राक्षसेन्द्रस्य धीमतः ।
तथेति प्रतिशुश्राव सर्वज्ञो गणनायकः ॥[1]

1543

तत्र सन्तुष्टचित्तस्य पौलस्त्यस्येष्टसिद्धये ।
कोटित्रयं तु लिङ्गानां यथाशास्त्रं यथाविधि ।
त्रिकोट्याचार्यरूपेण स्थापितं तेन तत्क्षणे॥

---

निधिः निक्षेपस्थानभूतः, अतः आचायभावमासाद्य युगपत् कोटित्रयाचार्यभावं प्राप्य मम अभीष्टं पूरयेत्यर्थः ॥

अथ श्रीरेणुकः तस्य अभीष्टं पूरयित्वा अन्तर्हितः इति श्लोकपञ्चकेन प्रतिपादयति—

प्रतिशुश्राव अङ्गीकृतवान् इत्यर्थः । शिष्टं स्पष्टम् ॥

तत्र लङ्कायाम् । पौलस्त्यस्य विभीषणस्येत्यर्थः ।[2] शिष्टं स्पष्टम् ॥

---

[1] श्रीरेणुकाचार्यः ।

[2] रावणभ्रातुर्विभीषणस्यापि पुलस्त्यवंशोद्भवत्वात् ।

1544 [विभीषणेन महामहिमरेणुकसम्भावनम्]

तादृशं तस्य माहात्म्यं समालोक्य विभीषणः ।
प्रणनाम मुहुर्भक्त्या पादयोस्तस्य विस्मितः ॥[1]

1545 [रेणुकान्तर्धानम्]

प्रणतं विनयोपेतं प्रहृष्टं राक्षसेश्वरम् ।
अनुगृह्य स्वमाहात्म्यात् रेणुकोऽन्तर्हितोऽभवत् ॥

1546 [विभीषणेन सुराज्यपरिपालनम्]

विभीषणोऽपि हृष्टात्मा रेणुकस्य प्रसादतः ।
शिवभक्तिरसासक्तः स्थिरराज्यमपालयत् ॥

1547 [रेणुकेन भगवन्महिमप्रसारपूर्वकं स्वग्रामप्राप्तिः]

रेणुकोऽपि महातेजाः सञ्चरन् क्षितिमण्डले ।
प्रच्छन्नश्च प्रकाशश्च परमाद्वैतभावितः ॥

1548

कांश्चित् दृष्टिनिपातेन करुणारसवर्षिणा ।
अपरानुपदेशेन शिवाद्वैताभिमर्शिना ॥

---

स्पष्टम् ॥

स्पष्टम् ॥

स्पष्टम् ॥

अथ अष्टदिक्षु प्रसिद्धस्य रेवणसिद्धेश्व'रस्य महत्त्वं सङ्कोचेन[2] अष्टभिः सूत्रैः प्रकाशयति—

---

[1] विस्मितः--अत्याश्चर्यभरितमानसः तस्यपादयोः प्रणनामेत्यन्वयः ।
[2] सङ्कोचेन--सङ्ग्रहेण ।

1549

अन्यांश्च सहवासेन समस्तमलहारिणा ।
कृतार्थयन् जनान् सर्वान् कृतिनः पक्वकर्मिण. ॥

1550

दर्शयित्वा निजाधिक्यं शिवदर्शनलालसः ।
खण्डयित्वा दुराचारान् पाषण्डान् भिन्नदर्शनान् ॥[1]

1551

यन्त्रमन्त्रकलासिद्धान् विमतान् सिद्धमण्डलान् ।
विजित्य स्वप्रभावेन स्थापयित्वा शिवागमान् ॥

1552

आजगाम निजावासं कोल्लिपाक्याभिधं पुरम् ॥

---

प्रच्छन्नश्च । सप्तवर्षशतमिति शेषः ।

तथा प्रकटितः सन्, कांश्चित् जनान् करुणारसपूरितकटाक्षेण कृतार्थयन्, अपरान् शिवाद्वैतप्रकाशकोपदेशेन कृतार्थयन्, अन्यान् निर्मलसहवासेन कृतार्थयन्, अवशिष्टसर्वजनान् कृतिनः सकलकलाकुलान् पक्वकर्मिणः परिपक्वमलमायापाशवन्तः सन्तश्च कृतार्थयन् सन्

---

1 स्वदर्शनापेक्षया भिन्नदर्शनसिद्धान्तप्रतिपादकान् ।

1553 [तेन सोमनाथमन्दिरप्राप्तिः]

तत्र[1] सम्भावितः सर्वैः जनैः शिवपरायणैः ।
सोमनाथाभिधानस्य शिवस्य प्राप मन्दिरम् ॥

1554 [तत्र तेन भगवत्स्तुतिः]

पश्यतां[2] तत्र सर्वेषां भक्तानां शिवयोगिनाम् ।
तन्वानो विस्मयं भावैः तुष्टाव परमेश्वरम् ॥

---

शिवदर्शनलालसः शिवसमयलम्पटः श्रीरेवणसिद्धः निजाधिक्यं अनेक-चित्रविचित्रनिजमहत्त्वं दर्शयित्वा भिन्नदर्शनान् वैष्णवाद्यन्यसमयनिष्ठान् पाषण्डान् शङ्खचक्राद्यन्यलाञ्छनयुक्तान् दुराचारान् खण्डयित्वा यन्त्रमन्त्रादि-चतुष्षष्टिकलासिद्धियुक्तान् कापालिकादिपरमतसिद्धान्तमण्डलान् गोरक्षादि-नवकोटिसिद्धसमूहान् स्वसामर्थ्येन विजित्य, कामिकादिशिवसिद्धान्तान् स्थापयित्वा, निजावासं कोल्लिपाक्याभिधं पुरं आजगाम आससादेत्यर्थः ॥

सम्भावितः सत्कृतः इत्यर्थः । शिष्टं स्पष्टम् ॥

भावैः निर्मलगुणैरित्यर्थः । विस्मयं आश्चर्यम् । तन्वानः

---

[1] तत्र-कोल्लिपाक्याभिधाननगरे ।
[2] सर्वेषां प्रत्यक्षत एवेति भावः ।

1555

देवदेव जगन्नाथ ! जगत्कारणकारण !
ब्रह्मविष्णुसुराधीशवन्द्यमानपदाम्बुज !

1556

संसारनाटकश्रान्तिकलानिर्वहणप्रद !
समस्तवेदवेदान्तपरिबोधितवैभव !

1557

संसारवैद्य ![3] सर्वज्ञ ! सर्वशक्तिनिरङ्कुश !
सच्चिदानन्द सर्वस्व ! परमाकाशविग्रह !

---

विस्तारयन् इत्यर्थः । शिष्टं स्पष्टम् ॥

अथ सप्तभिः सूत्रैः सोमेश्वरस्य स्तुतिं करोति—

अत्र जगच्छब्देन भुवनान्युच्यन्ते । तत्कारणीभूतबिन्दुमायादीनामपि कारणीभूतः इत्यर्थः ॥[1]

संसारनाटकश्रान्तिकलाजयप्रदः[2] इत्यर्थः ॥

"आकाशशरीरं[4] ब्रह्म" इति श्रुतेः, चिदाकाशस्वरूप !

---

[1] तत्त्वसृष्ट्यनुगुणं कार्यकारणभावः विवृतोऽत्र ।

[2] नाटकस्य कलारूपत्वं वस्तुतत्त्वश्रामकत्वादिति ज्ञेयम् ।

[3] तदनुग्रहस्य संसाररोगनिवर्तकत्वादिति भावः ।

[4] दहराकाशस्वरूपमित्यर्थः ।

1558

समस्तजगदाधार ज्योतिर्लिङ्ग[1]विजृम्भण !
सदाशिवमुखानेकदिव्यमूर्तिकलाधर !

1559

गुणत्रयपदातीत ! मलत्रयविनाशन !
जगत्त्रयविलासात्मन् ! श्रुतित्रयविलोचन!

---

इत्यर्थः । शिष्टं स्पष्टम् ॥

" ज्वाललिङ्गाय नमः "

इति श्रुतेः, ज्योतिर्लिङ्गस्वरूपेण जृम्भमाण इत्यर्थः ।

" स्थिरेभिरङ्गैः पुरुरूप[2] उग्रः "

इति श्रुतेः सकलनिष्कलसदाशिवप्रभृतिदिव्यमूर्तिकलाधरेत्यर्थः ।

अत्र —

" स एको रुद्रः स ईशानः
स भगवान् स महेश्वरः
स महादेवः । "

इति श्रुतिः ॥[3]

सत्त्वरजस्तमोगुणस्थानातीत ![4] आणवकार्मणमायिकाख्यमल-

---

[1] अखिलप्रपञ्चसृष्टिमूलं यत् ज्योतिर्लिंङ्ग तत्स्वरूपेण इत्यर्थः ।
[2] पुरु-बहुविधं रूपं यस्य सः । सहस्रशीर्षा पुरुषः इति हि श्रुतिः ।
[3] प्रमाणतया स्मर्तव्य इत्यर्थः ।
[4] मूले पदशब्दः तदाधारभूतस्थानपरः इति भावः ।

